जनार्दनसूरिविरचितः

# श्रीविद्याधीशविजयः

स च

वाई रङ्गाचार्यैः प्राकाश्यं नीतः

पुण्यपत्तने

लक्ष्मण भाऊराव कोकाटे इत्येतैः हनुमानमुद्रणालये मुद्रितः

शकाब्दाः १८४८ सनाब्दाः १९२६

मूल्यं रूपकद्वयम्

जनार्दनसूरिविरचितः

# श्रीविद्याधीशविजयः

स च

वाई रङ्गाचार्यैः प्राकाश्यं नीतः

पुण्यपत्तने

लक्ष्मण भाऊराव कोकाटे इत्येतैः हनुमानमुद्रणालये मुद्रितः

शकाब्दाः १८४८ सनाब्दाः १९२६

मूल्यं रूपकद्वयम् ।

# किंचित्प्रास्ताविकम्



पञ्चषेभ्यो वर्षेभ्यः प्राक् राणेबेन्नूरग्रामे श्रीमद्विद्याधीशयतिवरसमाराधनाप्रसङ्गेन विद्वद्वरैः पाण्डुरङ्गी वेङ्कटरमणाचार्यप्रभृतिभिर्निमन्त्रितोऽहं गतवानस्मि । तत्समये च विद्याधीशचरितावजिगमिषया प्रार्थितास्तत्रत्या विद्वांसो विद्याधीशविजयं नाम काव्यं मह्यमर्पयन्ति स्म । तद्विहङ्गमदृष्ट्यावलोकनेन मयाधिगतं यद् मुद्रणार्होऽयं प्रबन्धः । ‘ यतोऽस्य कवयितुः संस्कृतभाषायां प्रभुत्वं वरीवर्ति, अस्मादैतिह्योपलब्धिर्भवति, यतिवराणां विद्याधीशानां माहात्म्यं च ज्ञाततां याति ’ इति । एवं चिन्तयति मयि पाण्डुरङ्गी वेङ्कटरमणाचार्यैरागत्य निवेदितं यत् ‘ इदानीं दुर्लभोऽयं प्रबन्धः, हस्तलिखितानि पुस्तकानि दुर्लभानि सन्ति, यानि विद्यन्ते तानि प्रायः अशुद्धिकलितानि, अतोऽयं भवद्भिर्मुद्रितश्चेन्महदुपकृतं भविष्यति पाण्डुरङ्गीआचार्याणां कुलानाम् । यत एते यतिशिरोमणय एतत्कुलं स्वजनुषालमकुर्वन् ’ इति । परं ‘ सर्वारम्भास्तण्डुलप्रस्थमूलाः ’ इति न्यायेन को वास्य मुद्रणव्ययं पारयिष्यति इति विचारिते न कोऽपि अभिमुखो बभूव । वचनदानोत्सुका बहव आसन्परं द्रविणदानोत्सुका विरला एव । ततो मया काव्यकोविदानामाह्लादकं सद्वैष्णवानां प्रमोदावहश्चायं प्रबन्धो भविष्यति, तेन च श्रीहरिगुरुकृपा स्यादिति बुध्या स्वयमेव एतत्कार्यं सम्पादनीयमिति निश्चित्य तदर्थं साधनसम्पत्तेरन्वेषणा समारब्धा । राणेबेन्नूरग्रामादेकं पुस्तकं पण्डितप्रकाण्डैः पाण्डुरङ्गीकृष्णाचार्यमहोदयैर्दत्तं चैकं पुस्तकमिति पुस्तकद्वयं लब्धम् ।

एवं पुस्तकद्वयं संगृह्य मुद्रणार्थं प्रतिकृतिं निर्मातुं सूक्ष्मेक्षिकया यावत्समालोचनोपक्रान्ता ततो ज्ञातमेतत्पुस्तकद्वयं परस्परप्रतिबिम्बस्वरूपमतीवाशुद्धं क्लिष्टाक्षरपरिप्लुतं च वर्तते इति । अस्य शोधनं नाम पुनः प्रबन्धनिर्माणमेव । एवं पुस्तकाशुध्या मुहुर्मुहुः प्रतिहन्यमानोऽपि अङ्गीकृतं परिपालनीयमेवेति बुध्या बहुकालव्ययेन महता प्रयासेन च संशोध्य सर्वमपि विलिख्य मुद्रणार्हं तन्निष्पादितम् । तन्तुपुरीयमुद्रणालये नागरसीसकाक्षरयोजका विरलाः कन्नडकार्यबाहुल्याद्विरसाश्चास्मिन्कर्मणीति ज्ञात्वा पुण्यपत्तनस्थमुद्रणालय एव एतन्मुद्रणमवश्यमिति विचार्य तत्रैव तदुपाक्रमिषम् । परं मम दूरस्थतयाक्षरयोजकानां विशेषानवधानतया च कष्टेन शोधितस्याप्यशुद्धेर्दृढमूलतास्यादिति शुद्धिपत्रतो विद्वांसो जानीयुरेव । आस्तामेतत् । एवं परिश्रमेण कालव्ययेन च मुद्रितोऽयं प्रबन्धः सज्जनानामुपहारीकर्तुं श्रीहरिगुरुकृपयाहं समर्थः संजात इति निवेदयितुं मोमुद्यते मम चेतः ।

## काव्यस्वरूपम्

प्रायः सप्तशतीश्लोकात्मकं द्वादशसर्गसनाथमेतत्काव्यम् । अत्र विविधानि वृत्तानि, बहवः काव्यगुणाः, विपुलाः शब्दार्थालंकाराश्च दरीदृश्यन्ते । अस्य काव्यस्य प्रणेता गदयकोनेरीसंज्ञकेन महाशयेनाभ्यर्थितोऽस्य काव्यस्य निर्माणे जनार्दनसूरिर्नाम कविप्रवीरो वर्तते । अनेनैव कविना स्वीयस्यैतस्य काव्यस्य टीकापि निर्मिता इत्येकादशसर्गस्थ पञ्चपञ्चाशत्तम ( ५५ ) श्लोकस्थटीकातः स्पष्टीभवति । तत्र ‘ जनार्दनाचार्य इति विद्याधीशविजयाद्यनेकप्रबन्धकवयिता । एतट्टीकापि तत्कृतेत्यवधेयम् ’ एवमुल्लेखो वर्तते । सत्यनिधिविजयादयः प्रबन्धा अपि एतदुपज्ञा एवेत्यन्तिमपद्यटीकातो विज्ञायते । अनेन चात्मीयमितिवृत्तं प्रथमश्लोकटीकायां ‘ तातो यस्य च लक्ष्मणाख्यविबुधः श्रीविठ्ठलाम्बा प्रसूर्देवः श्रीनरसिंह एव जगतामीशः स्वयं देवता । ऋक्शाखा च वसिष्ठनाम यमिनो गोत्रं पवित्रं परं श्रीमद्वेदनिधिर्यतीन्दुरपि सच्छास्त्रोपदेष्टा गुरुः ॥ १ ॥ गदयान्वयकोनेरीपण्डितेन कृतार्थनः । श्रीविद्याधीशविजयं काव्यं यः श्राव्यमातनोत् ॥ ॥ २ ॥ सोऽयं जनार्दनसुधीस्तस्य काव्यस्य पञ्चिकाम् । स्वयमेवाकरोत्पद्यहृद्यां शब्दार्थदीपिकाम् ॥ ३ ॥ एवं समुट्टङ्कितं दृश्यते । अत्र गुरुत्वेन वर्णितो वेदनिधिर्विद्याधीशस्य साक्षाच्छिष्यस्तत्पश्चात्तत्पदारूढश्च । जनार्दनकवेरात्मनो गुरोः श्रीवेदनिधेः समीपे भारतादिप्रबन्धानपठीदित्यप्येकादशसर्गस्थपञ्चपञ्चाशत्तमश्लोकात्स्फुटं भवति । ततः कालचिकित्सका एवं निश्चिनुयुरेव यदयं विद्याधीशसमकालीनोऽथवा किंचित्ततोऽर्वाक्कालीन इति । तेन विद्याधीशकालनिर्णयेनैतस्यापि कालनिर्णयः सुशक इति ।

## विषयादिनिरूपणम् ।

अस्मिन्काव्ये प्रधानतया उपश्लोकनीयो विद्याधीश इति ‘ विद्याधीशविजयः ’ इति काव्यसंज्ञयैव विद्वांसोऽनुमिनुयुः । अयं महात्मा परं बुद्धिमान् , सर्वतन्त्रस्वतन्त्रो, द्वैतवेदान्तकण्ठीरवो, न्यायसुधापञ्चाधिकरण्यां पाण्डित्यप्रकर्षोद्भासिन्या वाक्यार्थचन्द्रिकायाः प्रणेता, द्वैतसिद्धान्तप्रतिष्ठापनाचार्यसिंहासनमलंकुर्वाणाद्वेदव्यासयतिवरेण्यात् प्राप्ततुरीयाश्रमः, दिग्विजयसंपादनानन्तरं गुरोरादेशेन तत्सिंहासनं विभूषयमाण आसीत् । अयं च श्रीनृसिंहसेवया तत्प्रसादाल्लब्ध इति पित्रा द्वादशाहे नृसिंह इति कृताभिधानः समुल्लास । अस्य पितामहः त्रिविक्रमाचार्यः, पिता आनन्दाचार्यः, माता गङ्गाम्बा, ज्येष्ठभ्राता श्रीनिवासः, पुण्यस्तम्भे ( पुणतांबे ) निवासः, वाशिष्ठं गोत्रमभूत् । एतत्सर्वं प्रथमसर्गादेव

विज्ञायते । अस्य महोदयस्य जीवनकालस्तु ऐशवीयषोडशशतकोत्तरार्धे आसीदिति अनुमीयते । यतोऽयं श्रीमदाचार्याणां द्वैतसिंहासनमलंकुर्वाणानां यतिवरेण्यानां मध्ये षोडशोऽस्ति । प्रायः पीठाधिपतीनां पञ्चदशसंवत्सरात्मकः सिंहासनाधिकारकालो भवतीत्यङ्गीकृतं चेत्पञ्चाशदधिकद्विशतसंवत्सरानन्तरसमयेऽयं श्रीमदाचार्यानन्तरं तत्पीठमलमकार्षीदित्यनुमानं न साहसपदवीमारोहेत् । श्रीमदाचार्याणां जीवनकालश्च प्रमाणप्रपञ्चैः ऐशवीयचतुर्दशशतके इति मध्वचरित्रामृते मणूरकरोपाह्व **रामचन्द्रमहोदयैर्विवेचितमस्ति** । तत्र च पञ्चाशदधिकद्विशत्या मेलने षोडशशतकोत्तरार्धकाल एवास्य यतिवरेण्यस्य जीवनकालो भवति । अपरं चास्मिन्काव्ये षष्ठसर्गे जैत्रयात्राप्रसङ्गेन रङ्गोजीभट्टस्यानेन विद्वच्चूडामणिना पराजयः कृत इति वर्णितमस्ति । अयं रङ्गोजीभट्टः ' विद्वद्देणकुलपञ्चमुखस्य भट्टोजीदीक्षितस्य भ्राता, कोण्डभट्टस्य पिता, अद्वैतवेदान्ते निष्णातश्च इति कोण्डभट्टकृतवैयाकरणभूषणसारस्थैः ' पाणिन्यादिमुनीन्प्रणम्य पितरं रङ्गोजिभट्टाभिधं द्वैतध्वान्तनिवारणादिफलकां पुंभाववाग्देवताम् । ' इत्यादिपद्यैर्ज्ञायते । भट्टोजीदीक्षितकालस्तु ऐशवीयषोडशशतकोत्तरार्धे आसीत् ' इति सर्वैरपि कालचिकित्सकैरेकमुखेनैवोद्घोषितमस्ति । अतो रङ्गोजीभट्टजेतुरपि विद्याधीशस्य स एव काल इति निश्चीयते । अनेनैव च एतत्काव्यस्य निर्मातुर्जनार्दनसूरेरपि कालो निश्चितो भवति । यतोऽयं विद्याधीशस्य साक्षाच्छिष्यस्य वेदनिधेः शिष्यः पौराणिकश्चेति तेनैवैकादशसर्गेऽभिहितम् । ततोऽयं विद्याधीशात्किंचित्कालानन्तरं नाम ऐशवीयसप्तदशशतकारम्भे एवाभवदित्यनुमातुं शक्यते ।

आस्तामेतत्प्रकृतमनुसरामः । अत्र प्रधानतया विद्याधीशवर्णनं प्रायः एकादशसर्गपर्यन्तं ततः शिष्यप्रबर्हस्य वेदनिधेः, तच्छिष्यस्य सत्यव्रतस्य च संक्षेपेण वर्णनम्, अनन्तरमात्मनः शिष्ये सत्यनिधौ द्वैतसाम्राज्यभारं समर्प्य, तस्य विष्णुलोकगमनम्, सत्यनिधेः द्वैतसाम्राज्यपरिपालनं च एतावदेवैतिह्यमत्र निबद्धमस्ति ।

अत्र वर्णिता विषयाः सर्गानुरोधेनैवं वर्तन्तेः—

**प्रथमे सर्गे**:— आनन्दाचार्यकुलवर्णनम्, उपासनया नरसिंहदृष्टान्तः, गङ्गाम्बागर्भधारणम् । **द्वितीये सर्गे**:— पुत्रोत्पत्तिवर्णनम्, तत्संस्काराः, शुभचिह्नानि, बालक्रीडावर्णनम्, उपनयनविचारः । **तृतीये सर्गे**:—मौञ्जीबन्धनवर्णनम्, विद्यासंग्रहः, पाण्डित्यवर्णनम्, आनन्दाचार्यस्य वैकुण्ठलोकप्राप्तिः । **चतुर्थे सर्गे**:— नरसिंहाचार्यस्य (विद्याधीशस्य ) पुण्यस्तम्भात्संगमनगरं ( संगमनेर ) प्रति गमनं, तत्र च दत्तपण्डितकृतपूजनम्, ततः पैठणनगरं प्रति गमनं, ततश्च पाण्डुरङ्गक्षेत्रं प्रति गमनम् । तत्र नरसाख्येनाद्वैतिना सह वादस्तत्पराजयश्च । ततो विजयापुरगमनं तत्र लिङ्गय्याख्यस्य गृहे पुनर्नरसाख्येन वादस्तत्पराजयश्च । तत्रत्यमन्त्रिसमूहैः कृतसन्मानश्च । **पञ्चमे सर्गे**:— वेदव्यासयतीश्वरात्तुरीयाश्रमदीक्षास्वीकारः, बन्दिद्वयकृता श्रीहरेस्तथा श्रीमदाचार्यमारभ्य विद्याधीशपर्यन्तं पीठाधिरूढानां यतीनां प्रशस्तिः, विद्याधीशस्य विशेषतो माहात्म्यवर्णनम् । **षष्ठे सर्गे**:—विद्याधीशस्य जैत्रयात्रावर्णनम्, रङ्गोजीभट्टेन सह विवादस्तत्पराजयश्च । सुधीन्द्रतीर्थमठीय-वादीन्द्रयतिसमागमस्तत्पराजयश्च । **सप्तमे सर्गे**:— वेदव्यासगुरोः समागमस्तत्कृता प्रशस्तिश्च । वेदव्यासस्य विष्णुलोकगमनम् तदीयमहासमाराधनावर्णनम्, दातृत्ववर्णनम्, शरत्समयवर्णनम्, वेदनिधये ( स्वशिष्याय ) दिग्विजयाय प्रेषणम्, स्वस्य च यात्रार्थं गमनम्, गोदावरीप्रदक्षिणावर्णनम्, कोनसीमाप्रदेशवर्णनम्, तत्र गमनं च । **अष्टमे सर्गे**:—वेङ्कटपर्वतगमनं दक्षिणदिग्विजयाय तद्यात्रावर्णनम्, श्रीरङ्गपुरवर्णनम्, कावेरीवर्णनम्, कावेरीतीरे गुरोर्वेदव्यासस्य महासमाराधनावर्णनम्, ततस्तञ्जोरं प्रति गमनं, ततः कुम्भकोणादिनगरं प्रति गमनम् । **नवमे सर्गे**:—मधुरागमनम्, ततः सेतुरामेश्वरं प्रति गमनं तद्वर्णनं च. ततो बदरिकाश्रमगमनप्रसङ्गेन मध्ये धर्मपुरीगमनम्, तत्र दिनचर्यावर्णनम्, पूजावर्णनं च । **दशमे सर्गे**:—विद्याधीशप्रशस्तिः, कामदेवपराजयवर्णनम्, बदरिकाश्रमगमनम् । **एकादशे सर्गे**:—प्रयागगमनं, ततःकाशीनगरगमनम् तत्र च ब्रह्मेन्द्रनामयतिना प्रेषितानां विदुषां पराजयः, जिघांसया तत्कृतयवनप्रेषणम्, यवनागमनात्प्रागेव गयाक्षेत्रगमनम्, तत्र गयावलानां दीक्षाप्रदानपूर्वकतीर्थफलपुष्पादिप्रदानम् । बदरिकागमनम्, यात्राविधिमनुष्ठाय पुनरेकचक्रानगरीं प्रतिगमनम् । तत्र वेदनिधये दिग्विजयरामसमर्पणकथनं पौषकृष्णचतुर्दश्यां श्रीहरिसान्निध्ये गमनम्, ततः केशवाचार्यप्रभृतीनां छात्राणां धर्मनगरीगमनम्, वेदनिधये सर्वोदन्तकथनम्, तत्कृतसमाराधनावर्णनं, तत्कृतपाण्डुरङ्गपुरागमनं, तत्र वैकुण्ठलोकगमनं च । **द्वादशे सर्गे**:—सत्यव्रतगुणवर्णनं, द्वैतसाम्राज्यपदारोहणं, ततो विजयापुरगमनं तत्र कृष्णद्वैपायनयतिपराभवः, ततो दक्षिणदिग्यात्रार्थं गमनं सत्यनिधिं प्रति असज्जयार्थमादेशः स्वस्य च मुकुन्दाङ्घ्रिसरोजसंनिधौ गमनं सत्यनिधिवर्णनम्, प्रबन्धफलश्रुतिश्च ।

## पाण्डुरङ्गीकुलवर्णनम् ।

अयं विद्याधीशयतितल्लज एव पाण्डुरङ्गी आचार्याणां सन्माननीयो मूलपुरुषः । अस्मात्परं सर्वेऽपि कर्णाटकप्रदेशस्था वैष्णवा एतत्कुलं सविशेषं संमानयन्ति । उत्तरादिमठेऽपि एतत्कुलजानामाचार्याणां विशेषत आदरो दृश्यते । एतत्कुलीनाः सर्वेऽपि पाण्डुरङ्गी आचार्या इति प्रथिताः सन्ति । देशकालानुरोधेन अद्ययावत् द्वैतसिद्धान्ते न्यायशास्त्रे च कृतपरिश्रमाः प्रवीणाश्च ते सन्ति । विशेषतः इदानीं **पाण्डुरङ्गीकृष्णाचार्याः** न्यायादिशास्त्रेषु प्रवीणाः, द्वैतराद्धान्ते नदीष्णाः, द्वैतसिद्धान्तजीवातुभूतानां द्वैतसाम्राज्यसिंहासनमलंकुर्वाणानां **श्रीसत्यध्यानयतीन्द्राणां**

पदकमलसांनिध्यं जुषमाणा विविधान् छात्रान् विविधानि शास्त्राणि पाठयन्तः स्वायुः साफल्यं नयान्ति । नानादिगन्तवासिनः पण्डिता यं महाभागमुद्दिश्य—

**श्रीमन्न्यायसुधाविवेचनविधौ यस्य प्रगल्भा मति—**
**श्छोत्रभ्यो विशदीकरोति सततं गादाधरीं यः कृती ।**
**सत्यध्यानयतीन्द्रपादकमले भृङ्गायते यन्मनः**
**सोऽयं शुद्धमतिः सदा विजयतामाचार्यकृष्णो भुवि ॥ १ ॥**

एवं सभासूद्घोषयन्तीति निवदनेनालम् ॥

विद्वदनुचरः
**वाई रङ्गाचार्यः ।**

# शुद्धिपत्रम्.

| पत्राङ्कः | पङ्क्त्यङ्कः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | १५ | मयुख | मयूख |
| ७ | ११ | यच्छन्दस्य | यच्छब्दस्य |
| ९ | २४ | अतितृसं | अतितृप्तं |
| ११ | २९ | द्धाचा | द्धवा |
| १२ | ५ | दुर्वाधि | दुर्वादि |
| १२ | २२ | तमां | तमो |
| १५ | २ | दौहद | दोहद |
| १५ | ९ | दौहद | दोहद |
| १७ | ६ | तारयोग | राशियोग |
| १८ | १५ | त्कस्य | त्करस्य |
| १८ | ३३ | तदान्विति | तन्विति |
| १९ | ६ | पत्रम् | पात्रम् |
| १९ | ६ | सपवि | स पवि |
| २० | १ | मात्रम् | गात्रम् |
| २२ | ११ | वक्त्रः | वक्त्रतः |
| २२ | ६ | वासम् | नासम् |
| २४ | ४ | माल्यावत् | माल्यवत् |
| २५ | १ | सञ्ज | सांञ्ज |
| २५ | ७ | मोञ्जि | मौञ्जि |
| २६ | २ | प्रशास्त | प्रशस्त |
| २७ | ११ | अम्नौ | अग्नौ |
| २७ | २३ | काम्नौ | काग्नौ |
| २९ | ५ | जन्मना | जन्मनो |
| २९ | २१ | साङ्कर्णो | सङ्कीर्णो |
| ३० | ७ | वत्सरजा | वत्सरता |
| ३२ | २ | दिभू | धिभू |
| ३३ | २ | जयघ्नन | जयदघन |
| ३३ | ७ | जाग्रतिः | जाग्रति |
| ३४ | ३ | कुल | कल |
| ३४ | ३ | मेदिनी | मेदिनीं |
| ३४ | १७ | आकलयतां | अकालजं |
| ४१ | ३ | मानसरोरुहो | मानससरोरुहो |
| ४४ | ३ | न्पभ्यु | न्यभ्यु |
| ४८ | ४ | रतिः | ततिः |
| ४५ | ७ | ग्रहाग्रह | ग्रहग्रह |
| ४७ | ६ | पठिं | पीठीं |
| ४९ | ७ | वरधरा | धरवरा |
| ५० | १ | आसीक्षितौ | आसीत्क्षितौ |
| ५१ | ६ | तदन्विततरा | तदन्वीततरा |
| ५१ | ६ | तमो हिमांशुः | तमोऽहिमांशुः |
| ५१ | ७ | समेधित विधुत | समैधत विधुत |
| ५१ | ३२ | भवादिर्येन | भवाधिर्येन |
| ५२ | ८ | तस्मै | तस्मिन् |
| ५२ | १ | अद्वैत | अद्वैति |
| ५२ | ७ | सोमंजगत् | सोमज्जगत् |
| १०७ | १० | चक्रु | चक्रुः |
| १०८ | १ | यद्भु | यदद्भु |
| १११ | ६ | सकाशं गुण | स काशीं गुण |
| १११ | ११ | किंचिश्चक्रमे | किंचिच्चक्रमे |
| ११६ | ३ | वृन्दारु | वन्दारु |
| ५३ | ५ | काङ्क्षी प्राग्रे | काङ्क्षिप्राग्रे |
| ५६ | १ | सभव्यः | सभेव्यः |
| ५६ | ५ | विवर्य | वर्यं |
| ६४ | ५ | तावन्त | पावना |
| ६६ | ३ | साद्रीन्द | सादीद्र |
| ६७ | ६ | चतुर्थ श्लोकोत्तरार्धम् । यत्र वासं चिरं चक्रे जयतीर्थसुधाकरः॥ | |
| ६७ | ८ | श्रवसः पाद | श्रवसःपाद |
| ६८ | ६ | एवं | एकः |
| ६८ | ६ | स्वानन्द | सानन्द |
| ६९ | १ | हार्दकं सा | हार्दकंसा |
| ७१ | ४ | मिष्टान्न | निष्टान |

# ॥ श्रीविद्याधीशविजयः ॥

## शब्दार्थदीपिकाव्याख्यासमेतः ।

श्रीभूमिदुर्गाग्रिमभागभास्वद्धामा रमालालितपादपद्मः । मुक्ताविमुक्तेरणनर्मकर्मा निर्मातु

वन्दे तां वैनतेयाद्रिमन्दिरामिन्दिरासखीम् । देवतां नारसिंहाख्यां देवतासंसदीडिताम् ॥ १ ॥ सुचिराय सुपूर्णाद्रिगह्वरोपाङ्गगह्वरीम् । आवसन्नपि यो दत्ते नवतामवतात्स नः ॥ २ ॥ ज्वालामुखाय जलराशिसुतासखाय क्रोडाय योगकलिताय करञ्जधाम्ने । छत्रीकृतायतवटाय च पावनाय श्रीभार्गवाय च नमोऽस्मदहोबलाय ॥३॥ उद्यत्ताण्डवचण्डखण्डपरशुत्वङ्गज्जटामण्डलीरिङ्खद्गाङ्गतरङ्गदुर्भरतराहङ्कारसर्वङ्कषाः । भुव्याक्लप्तसुधाप्रधाविधुतयः श्रव्याः सुधीभिर्महाकाव्यालङ्कृतिनाटकाकृतितया दीव्यन्ति यत्सूक्तयः ॥ ४॥ तातो यस्य च लक्ष्मणाख्यविबुधः श्री विठ्ठलाम्बा प्रसूर्देवः श्रीनरसिंह एव जगतामीशः स्वयं देवता । ऋक्शाखा च वशिष्ठनाम यमिनो गोत्रं पवित्रं परं श्रीमद्वेदनिधियतीन्दुरपि सच्छास्त्रोपदेष्टा गुरुः ॥ ५ ॥ गदयान्वयकोनेरिपण्डितेन कृतार्थनः । श्रीविद्याधीशविजयं काव्यं यः श्राव्यमातनोत् ॥ ६ ॥ सोऽयं जनार्दनसुधीस्तस्य काव्यस्य पञ्चिकाम् । स्वयमेवाकरोत्पद्यहृद्यां शब्दार्थदीपिकाम् ॥ ७ ॥ अथ तत्र भगवान् जनार्दननामा कविः 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे' ॥ इत्याद्यलङ्कारिकवचनप्रामाण्यात्काव्यस्यानेकश्रेयःसाधनतां च 'काव्यालापांश्च वर्जयेत्' इत्यादि शास्त्रवचनस्य असत्काव्यविषयतां च पश्यन् श्रीमत्परमपवित्रविचित्रचरितस्य जगदेकगुरोः श्रीविद्याधीशयतीन्द्रस्य चरित्रप्रतिपादकं श्रीविद्याधीशविजयाख्यं महाकाव्यं चिकीर्षुश्चिकीर्षितार्थनिर्विघ्नपरिसमाप्तेः सत्संप्रदायलक्षणफलसाधनत्वात् 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्' इत्याशिराद्यन्यतमस्य प्रबन्धमुखलक्षणत्वात्स्वेष्टदेवतायाः श्रीनृसिंहात्मकस्य हरेः प्रशंसापुरःसरं आशिषं निबध्नाति । श्रीति । श्रीश्च भूमिश्च दुर्गाचेति द्वन्द्वः । तासां संबन्धिषु अग्रिमेषु श्रेष्ठेषु भागेषु प्रदेशेषु भास्वन्ति भासमानानि गृहाणि यस्य सः तथोक्तः । तेषु क्रीडमान इत्यर्थः । 'श्रीभूमिदुर्गाभागेषु वैकुण्ठसदनेष्वजः । श्रीभूमिदुर्गारूपिण्या क्रीडते रमया सह ॥' इति विष्णुरहस्यात् । एतेन हरेः साधिकरणाद्भजनसौलभ्यमुक्तम् । निरधिकरणस्य भजनायोगात् । रमया लक्ष्म्या लालिते संवाहनवन्दनादिभिः संभाविते पादपद्मे यस्य सः तथोक्तः । सर्वमङ्गलाधिदेवतासेवितत्वात्समस्तेष्टप्रदानसमर्थ इति भावः । मुक्ताः मोक्षं गताः अविमुक्ताः संसारिणश्च तेषामुभयेषां ईरणं तत्तदन्तर्यामित्वेन तत्तत्कार्येषु प्रेरणमेव नर्मकर्म क्रीडाविधिर्यस्य स तथोक्तः । 'क्रीडा खेला च नर्म च' इत्यमरः । मुक्तामुक्तब्रह्मादिसकलजीवप्रेरकतया सर्वोत्तमः स एव उपास्य इति भावः 'चितिमात्रेन्द्रियाश्चैव प्रविष्टा विष्णुमव्ययम् । तदङ्गानुगृहीतैश्च स्वाङ्गैरेव प्रवर्तनम् । कुर्वन्ति भुञ्जते

**मे शर्म चिरं मुकुन्दः ॥ १ ॥ सद्वैतराद्धान्तमयूखधारानिर्वापिताद्वैतमतान्धकारः । विकासितार्हद्हृदयारविन्दो दद्यात्प्रबोधं मम मध्वभानुः ॥ २ ॥ तत्त्वप्रदीपात्तनुते प्रमोदं त्रिविक्रमाभिज्ञशिखामणिर्नः । साक्षाद्दशप्रेक्षमनोज्ञवाणीशाणाग्रनिस्तेजननिर्मलात्मा ॥ ३ ॥ तद्वारिराशेस्तमुदीतमुच्चैः प्रणौमि नारायणपण्डितेन्दुम् । यत्साहिती दिक्तटरङ्गनाट्ये मृदङ्गनादोऽजनि**

---

भोगांस्तदन्तर्बहिरेव च ॥ यथेष्टं परिवर्तन्ते तस्यैवानुग्रहेरिताः ॥ ' इति नारायणाध्यात्मे । ' मुक्तैरमुक्तकगणैश्च विनम्यतोक्तेः ' इत्याचार्योक्तेश्च सिद्धं हरेर्मुक्तामुक्तप्रेरकत्वम् । एतादृशो मुकुन्दः मुं मुक्तिं कुं क्षितिं ददातीति मुकुन्दः । पारलिकैहिकभोगप्रद इत्यर्थः । ' मुशब्दो मुक्तिवाची स्यात् कुशब्दः क्षितिवाचकः । उभयं यद्ददातीशःतन्मुकुन्द इति स्मृतः ॥ ' इति नामावलिनिर्वचनात् । मे मह्यम् । चिरं शाश्वतम् । शर्म सुखम् स्वरूपानन्दाविर्भावलक्षणम् । निर्मातु तनोतु । निःपूर्वात् माङ् माने इत्यस्माद्धातोराशिषि लोट् । अत्रादौ श्रीशब्दप्रयोगाद्वर्णगणशुद्धिरनवद्या । ' देवतावाचकाः शब्दा ये च भद्रादिवाचकाः । ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि च ।' इतिवचनात् । अस्मिन्सर्गे उपजातिवृत्तम् । इदं तु इन्द्रवज्रावृत्तम् । ' स्यादिन्द्रवज्रा ततजास्ततो गौ ॥ ' ' अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीया उपजातयस्ताः ' इति तल्लक्षणात् ॥ १ ॥ इत्थं परदेवतां प्रशस्य परमगुरुस्तवमाचरति । **सदिति** । सन्निरवद्यो यो द्वैतराद्धान्तः जीवपरमात्माभेदापादकः सिद्धान्तः स एव मयुखधारा किरणसंपातः । ' धारासंपात आसारः ' इत्यमरः । तया निर्वापितो निर्मूलितः अद्वैतमतमेवान्धकारो यस्य सः तथोक्तः । अत एव विकासितानि प्रसन्नीकृतानि अर्हन्तः पूज्याः । ' अर्ह पूजायाम् ' इत्यस्माल्लटः शत्रादेशः । तेषां हृदयारविन्दानि येन सः तथोक्तः । स्वसिद्धान्तस्थापनेन अन्यमतनिरासेन च सज्जनानन्दकर इत्यर्थः । मध्वः मध्वाचार्य एव भानुः सूर्यः मम प्रबोधं प्रकृष्टशास्त्रज्ञानं दद्यात् । ददातेराशिषि लिङ् । अत्र द्वैतराद्धान्तादिषु मयूखाद्यारोपणात् मध्वे भानुत्वारोपणाच्च सावयवताद्रूप्यरूपकम् । ' विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत् । रूपकं तत् ' इति लक्षणात् ॥ २ ॥ **तत्त्वेति** । साक्षात् नतु परंपरयेति भावः । दशप्रेक्षस्य दशमतेः मध्वस्य या मनोज्ञवाणी शास्त्रलक्षणा सैव शाणः शाणोपलः तस्याग्रे निस्तेजनेन घर्षणेन निर्मलः स्वच्छः आत्मा बुद्धिर्यस्य स तथोक्तः । ' आत्मा यत्नो धृतिर्बुद्धिः स्वभावो जीव एव च ।' इत्यमरः । साक्षान्मध्वोपदिष्टसच्छास्त्रोद्भूतज्ञानलब्धान्तःकरणनैर्मल्य इत्यर्थः । त्रिविक्रम त्रिविक्रमनामा कश्चन मध्वशिष्यः स एव अभिज्ञानां शिखामणिः शिरोरत्नं तेषु श्रेष्ठ इत्यर्थः । तत्त्वप्रदीपात् मध्वशास्त्रोपयोगितत्त्वप्रदीपाख्यटीकाग्रन्थात् तं विधायेत्यर्थः । प्रासादात्प्रेक्षते इतिवत् ल्यब्लोपनिमित्ता पञ्चमी । नः अस्माकं प्रमोदं आनन्दं तनुते कुरुते । नन्दनीयत्वात् वन्दनीय इति भावः । यथा लोके मणिः शाणाग्रकर्षणप्राप्तकान्तिविशेषतया प्रकाशिताखिलवस्तुजातः सन् जनानानन्दयति तद्वदिति रूपकोत्थापितध्वनिः ॥ ३ ॥ **तदिति** । स एव त्रिविक्रमाचार्य एव वारिराशिः समुद्रः तद्वारिराशिः तस्मादुदितं उत्पन्नम् । उत्पूर्वादिङ् गतावित्यस्माद्धातोः कर्तरि क्तः । त्रिविक्रमाचार्यपुत्रमित्यर्थः । उच्चैः प्रसिद्धं तं नारायणपण्डित एव इन्दुः चन्द्रः तं प्रणौमि प्रणमामि । अहमिति शेषः । इन्दोर्वारिराशेरुदयः प्रसिद्धः । यस्य नारायणपण्डितस्य साहिती साहित्यं कवित्वं कर्त्री । ' षिद्गौरादिभ्यश्च ' इति षित्वात् ङीष् । मध्वस्य कीर्तिसंबन्धि दिशां तटमेव रङ्गं

मध्वकीर्तेः ॥ ४ ॥ उत्तंसभूषामणिरुत्तमानां जागर्तु चित्ते जयतीर्थयोगी । अनन्यलभ्यामसुरारिवद्द्राक् सुधामदाद्यः सुमनोजनेभ्यः ॥ ५ ॥ कदापि नापैतु गुरुः स विद्याधीशाभिधानः स्मृतिमार्गतो मे ॥ निगृह्य योऽभ्यन्तरवैरिवर्गं वैराग्यसाम्राज्यमुरीचकार ॥६॥ श्राव्यैव मद्वाक्सुगुणेतरापि गुरोर्लसन्ती चरितेन तस्य ॥ आदानकौतूहलमत्र केषां

---

नर्तनशाला तस्मिन् यन्नाट्यं नर्तनं तस्मिन् विषये मृदङ्गनादः मर्दलध्वनिः अजनि अभूत् । तं प्रणौमीति संबन्धः । यथा लोके मर्दलध्वनिर्नाट्यस्योद्दीपकः तथास्य साहित्यमपि मध्वकीर्तेः दिगन्तराक्रमणविषये प्रोद्दीपकमभूदिति भावः । नारायणपण्डिताचार्यो मध्वविजयादिकाव्यनिर्माणेन तत्कीर्तिं प्रकाशयामासेति फलितोऽर्थः ॥ ४ ॥ **उत्तंसेति** । उत्तमानां स्थावरेषु श्रेष्ठानां उत्तंसभूषामणिः शिरोधृतभूषणरत्नायमानः स्वयोग्यतानुसारेण उत्तमोत्तम इत्यर्थः । शिरोमौल्यवाची उत्तंसशब्दः शिरोधृतरत्नादिष्वपि लक्ष्यते । 'पुंस्युत्तंसावतंसौ द्वौ कर्णपूरेऽपि शेखरे' इति विश्वः । जयतीर्थ इति योगी परिव्राट् समस्तमध्वदर्शनटीकाकारः चित्ते अस्माकमिति शेषः । जागर्तु प्रकाशमानतया तिष्ठत्वित्यर्थः । तं स्मरामीतियावत् । 'जागृ निद्राक्षये' इत्यस्मादाशिषि लोट् । यो जयतीर्थयोगी असुरारिः विष्णुः इन्द्रो वा ( सैव ? ) तेन तुल्यम् असुरारिवत् । 'तद्वद्वा यथा शब्दा' इति दण्डी । अन्यैः अयोग्यैः असुरैश्च लब्धुमशक्यां अनन्यलभ्यां सुधां न्यायसुधां अनुव्याख्यानटीकां अमृतं च सुमनोजनेभ्यः निर्मलहृदयसज्जनेभ्यः देवगणेभ्यश्च । 'सुपर्वाणः सुमनसस्त्रिदिवेशा दिवौकसः' इत्यमरः । द्राक् शीघ्रं अदात् दत्तवान् । स्वयं कृत्वेति शेषः । ददातेर्लुङ् । अत्र श्लेषानुप्राणितेयमुपमा । सा च व्यञ्जकपदसद्भावात् श्रौती ॥ ५ ॥ **कदेति** ॥ स विद्याधीशाभिधानः गुरुः एतत्काव्यविषयभूतः मे मम स्मृतिमार्गतः स्मरणपद्धतेः सकाशात् कदापि नापैतु न निर्यातु । आङ् पूर्वादिङ्गतावित्यस्मात् प्रार्थनायां लोट् । यस्य स्मरणं सातत्येन ममास्त्वित्यर्थः ॥ यो विद्याधीशगुरुः अभ्यन्तरे निजहृदये वैरिणां कामादिशत्रूणां वर्गं निगृह्य निर्जित्य वैराग्यसाम्राज्यं विरक्तिलक्षणसाम्राज्यं उरीचकार अङ्गीकृतवान् उरीचोरीचोररीचेत्यव्ययेषु शाश्वतः । अत एव नैषधेऽपि 'न खलु मुष्टिरुरीकृतबन्धनः' इति ह्रस्वादिः प्रयुक्तः । यथा लोके राजा वैरिनिग्रहपूर्वकं साम्राज्यं अङ्गीकरोति तद्वदिति ध्वनिः ॥६॥ अथ कविः स्वापकर्षविषयोत्कर्षं व्याचष्टे । **श्राव्येति** । शोभनाः गुणाः अस्यां संतीति सुगुणाः सुगुणायाः सकाशात् इतरा सुगुणेतरा माधुर्यादिगुणरहितापीत्यर्थः । मद्वाक् मम काव्यरूपवाणी तस्य विद्याधीशस्य गुरोः चरितेन लसन्तीति श्राव्यैव । विदुषां श्रोतुं योग्यैव भवतीति शेषः । 'कवेरल्पापि वाग्वृत्तिः विद्वत्कर्णावतंसति ॥ नायको यदि वर्ण्येत लोकोत्तरगुणोत्तरः ॥' इतिन्यायेनेति भावः । उक्तार्थं दृष्टान्तेकथनेन द्रढयति ॥**आदानेति**॥ अस्मिँल्लोके शुक्तिः मुक्तास्फोटः 'मुक्तास्फोटः स्त्रियां शुक्तिः ।' इत्यमरः । मुक्ताफलेन मौक्तिकेन आढ्या पूर्णा सती केषां जनानां आदाने स्वस्य स्वीकारविषये कौतुहलं कुतकं न करोतीति काकुः । सर्वेषामपि स्वाङ्गीकारौ-

मुक्ताफलाढ्या न करोति शुक्तिः ॥ ७ ॥ अस्ति क्षितेर्भूषणमाब्धिकन्याविभूषितं भूषितराजमार्गम् ॥ संभावितं साधुजनेन पुण्यस्तम्भाभिधानं नगरं गरीयः ॥ ८ ॥ मठान्तरे यत्र मनोभिरामं त्रैविक्रमं रूपमुपाददानः ॥ आस्ते हरिः स्वाङ्घ्रिसरोजभाजां तापत्रयाम्भोनिधिकर्णधारः ॥ ९ ॥ कल्हाररेणूत्करधूसराङ्गाः कणान् समन्तात्पयसां किरन्तः ॥ वलन्ति मन्दं विशिखासु यस्य गोदातरङ्गालिमरुत्कुमाराः ॥ १० ॥ यत्रानुगेहं धरणीसुराणां समुद्गतां व्योमनि होमधूम्याम् ॥ निर्वर्ण्य जीमूतधिया प्रभाते

---

त्सुक्यं करोत्येवेत्यर्थः । यथा निःसारायाः शुक्तेः मौक्तिकाढ्यत्वेन श्लाघ्यता तथा मम काव्यस्यापि उत्तमनायकगुणवर्णनेनैवेति दृष्टान्तालंकारः ॥ ७ ॥ अथ कथावस्तु निदर्शयति ॥ **अस्तीति** ॥ क्षितेः भूषणं भूषणवत्शोभाकारम् अब्धिकन्याविभुना लक्ष्मीपतिना त्रिविक्रमरूपेण उषितं अधिष्ठितं त्रैविक्रममिति वक्ष्यमाणत्वात् । वसेकर्मणिक्तः । भूषिताः ध्वजतोरणसंमार्जनादिभिः अलंकृताः राजमार्गाः यस्मिंस्तत्तथोक्तम् । साधुजनेन सज्जनसमूहेन संभावितं निवासयोग्यत्वेन श्लाघितम् । गरीयः अत एव श्रेष्ठतरम् । गरीयःशब्दः सकारान्तनपुंसकलिङ्गः । प्रियस्थिरेत्यादिना गुरोर्गरादेशः ततः ईयसुन्प्रत्ययः । पुण्यस्तंभाभिधानं पुण्यस्तंभनामकम् नगरं अस्ति । उक्तविशेषणैर्नगरस्य भुक्तिमुक्तिप्रदत्वं ज्ञेयम् । अत्र भूषितं भूषितमिति व्यञ्जनावृत्त्या वृत्त्यनुप्रासशब्दालंकारः ॥ ८ ॥ अथ चतुर्भिःश्लोकैस्तदेव पुरं वर्णयति ॥ **मठेति** ॥ यत्र नगरे स्वांघ्रिसरोजभाजां पुंसां तापत्रयाम्भोनिधेः आध्यात्मिकादिलक्षणतापत्रयसमुद्रस्य कर्णधारः नाविकः । निजचरणसेविनां तापत्रयतारक इत्यर्थः । हरिः परमात्मा मनोभिरामं मनोज्ञं त्रिविक्रमस्येदं त्रैविक्रमं रूपं विग्रहं उपाददानः स्वीकुर्वाणः सन् मठान्तरे गौतमीतीरनिर्मितमठमध्ये आस्ते । त्रिविक्रमसान्निध्यसद्भावात् नगरस्य गरीयस्त्वं सिद्धमितिभावः ॥ ९ ॥ **कल्हारेति** ॥ यस्य नगरस्य विशिखासु रथ्यासु 'रथ्या प्रतोली विशिखे'त्यमरः । गोदायाः गोदावर्याः तरङ्गालेः तरङ्गपङ्क्तेः संबन्धिनो मरुतो वायवः कुमार इव मरुत्कुमाराः मन्दमारुताः इत्यर्थः । कह्लाराणां सौगन्धकुसुमानां रेणूत्करेण परागपुञ्जेन धूसराङ्गाः ईषत्पाण्डुरावयवाः 'ईषत्पाण्डुस्तु धूसरः' इत्यमरः । तथा पयसां गोदाम्भसां कणान् समन्तात् किरन्तो विक्षिपन्तः सन्तः मन्दं शनैः बलन्ति । वल् चलन इत्यस्माल्लट् । सौरभ्यशैत्यमान्द्यगुणवन्तो गोदातरङ्गवायवो वान्तीत्यर्थः । यथा लोके अर्भकाः धूलिधूसरिताङ्गाः फूत्कारेण आस्यान्तर्गताम्बुकणान् बहूनुत्किरन्तः वीथीषु विहरन्ति तद्वदिति ध्वनिः । एतेन नगरस्य गोदावरी अत्यन्तसन्निकृष्टेति श्लाघ्यत्वं गम्यते ॥ १० ॥ **यत्रेति** ॥ यत्र नगरे धरणीसुराणां गेहं गेहं अनुगेहं यथार्थेऽव्ययीभावः । व्योमन्याकाशे समुद्गतां उत्थितां होमधूम्यां प्रातःसवनोत्थधूमसमूहम् धूमशब्दस्य पाशादित्वात् समूहार्थे यत्प्रत्ययः । निर्वर्ण्य आलोक्य 'निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम् ।' इत्यमरः । प्रभाते प्रातःकाले मयूराः तं नगरोपवनहारिणो बर्हिणः जीमूतधिया मेघबुध्या कुतुकाद्धर्षात् नाट्यं कुर्वन्ति । मेघोदये मयूराः नृत्यन्तीति प्रसिद्धम् । अत्र धूमसमूहे मयूराणां मेघभ्रमापादनात्

**कुर्वन्ति नाट्यं कुतुकान्मयूराः ॥ ११ ॥ गोदावरीवारिविगाहनेन त्रिविक्रमस्थानविलोकनेन ॥ विध्युक्तकर्माचरणेन यत्र विधूतपापा विलसन्ति सन्तः ॥ १२ ॥ ग्रामं तमध्यास्त गदाग्रजाङ्घ्रिसरोरुहध्यानसमाधिधन्यः ॥ वाशिष्ठगोत्राम्बुधिशीतधामा त्रिविक्रमाचार्य इतीड्यनामा ॥ १३ ॥ अश्रान्तसन्तर्पणकृद्बुधानां कलानिधिर्विष्णुपदानुषक्तः ॥ यश्चन्द्रवद्भूमितले स्वकीर्तिज्योत्स्नाभिराशा विशदीचकार ॥ १४ ॥ तस्याग्रजातिप्रवरस्य तादृक्पुण्येन गुण्योऽजनि सूनुरेकः ॥ यं प्राहुरानन्दितसाधुवृन्दमाचार्यमानन्दपदाद्यमुर्व्याम् ॥ १५ ॥ निष्णातधीः सन्निगमावलीषु निराकृताद्वैति-**

---

भ्रान्तिमदलंकारः । ‘ कविसंमतसादृश्याद्वस्त्वन्तरमतिर्यत्र स भ्रान्तिमान् । ’ इति सर्वस्वकारलक्षणात् । एतेन प्रतिगृहं यज्वानः सन्तीति नगर अतिशयोक्ति-र्व्यज्यत इति अलंकारेणालंकारध्वनिः ॥११॥ **गोदावरीति** ॥ यत्र नगरे सन्तः सज्जनाः गोदावर्याः वारिणि उदके विगाहनेन त्रिविक्रमस्य हरेः स्थानस्य प्रतिमायाः विलोकनेन च विध्युक्तकर्मणां शास्त्रोक्तजपहोमादीनां आचरणेन च विधूतपापाः साधनत्रयनिरस्तान्तर्मलाः सन्तो विलसन्ति प्रकाशन्ते ॥ १२ ॥ **ग्रामं तमिति** ॥ गदो नाम कश्चिद्यादवः तस्यः अग्रजः कृष्णः ‘ गदाग्रजो मुञ्जिकेशो दाशार्हो दशरूपभृत्’ इति अमरशेषे ॥ तस्य अङ्घ्रिसरोजध्यानमेव समाधियोगः तेन धन्यः। वाशिष्ठगोत्रमेव अम्बुधिः तस्य शीतधामा चन्द्रः वाशिष्ठगोत्रोत्पन्न इत्यर्थः । त्रिविक्रमाचार्य इति ईड्यं स्तुत्यं नाम यस्य सः ईड्यनामा द्विज इति शेषः। तं पूर्वोक्तं ग्रामं पुण्यस्तम्भं अध्यास्त अधिष्ठितवान् । तस्मिन् उवासेत्यर्थः । ‘अधिशीङ्स्थासां कर्म’ इति अधिकरणस्य कर्मत्वम्। अधिपूर्वादासतेर्लङ् ॥१३॥ **अश्रान्तेति** ॥ बुधानां पण्डितानां देवानां च अश्रान्तं सन्ततं सन्तर्पणं मृष्टान्नादिदानेन कलादानेन च तृप्तिं करोतीत्यश्रान्तसन्तर्पणकृत् । कलानां विद्यानां षोडशकलानां च निधिः स्थानीभूतः । ‘ अंशमात्रे मूलवृद्धौ सुषुमाविद्ययोः कलेति ’ अमरशेषे । विष्णुपदे हरिचरणे अनुषक्तः । अन्यत्र आकाशानुषक्तः । ‘ वियद्विष्णुपदं वापि ’ इत्यमरः । यः त्रिविक्रमाचार्यः चन्द्रवत् चन्द्र इव भूमितले स्वकीर्तय एव ज्योत्स्नाः चन्द्रिकाः ताभिः आशाः दिशः विशदीचकार शुभ्रास्तेने । बुधसन्तर्पणादिभिः दिगन्तविश्रान्तकीर्तिरभूदित्यर्थः । श्लेषानुप्राणितोऽयमुपमालंकारः ॥ १४ ॥ **तस्येति** ॥ अग्रजातिप्रवरस्य ब्राह्मणश्रेष्ठस्य तस्य त्रिविक्रमाचार्यस्य तादृशा तादृग्विधेन अपरिमितेनेत्यर्थः । पुण्येन प्राक्तनजन्मसुकृतेन हेतुना गुणे साधुर्गुण्यः गुणाढ्यः । ‘ तत्र साधुः’ इति यत्प्रत्ययः । एकः सुनुः अजनि जातः । जनी प्रादुर्भाव इत्यस्मात्कर्तरि लुङ् । तस्य नाम किमित्यत्राह ॥ उर्व्यां भुवि आनन्दितसाधुवृन्दं स्वचरित्रेण हर्षित सज्जनसमूहं यं सूनुं आनन्द इति पदं आद्यं यस्य तत्तथोक्तं आचार्यं प्राहुः । आनन्दाचार्य इति जनाः व्याजह्रुः । आनन्दपदाद्यमित्यत्र ‘ हिरण्यपूर्वं कशिपुं प्रचक्षत ’ इत्यादि माघकविप्रयोगवत् ज्ञेयम् ॥ १५ ॥ अथ पञ्चभिः श्लोकैस्तमेव विशिनष्टि ॥ **निष्णातेति** ॥ सतां निर्दोषाणां निगमानां वेदानां अवलीषु समूहेषु निष्णाता धीः

वितानतर्कः ॥ योऽध्यापयद्दर्शनमादरेण सन्दोहमन्तेवसताममन्दम् ॥ १६ ॥ अग्न्याहितो यः प्रयतोऽनुघस्रं चित्राणि विष्णोश्चरितानि गायन् । सत्कर्म निर्माय फलं तदीयमाद्यन्तमस्यार्पणमेव तेने ॥ १७ ॥ प्रतीष्टि यस्य प्रणयादुपेतैरगारमुर्वीविबुधप्रबर्हैः ॥ अभोजि मिष्टान्नमनल्पसूपं सापूपशैलाज्यदधिप्रवाहम् ॥ १८ ॥ आचूडमापज्जलधौ निमग्नमपालयद्द्रागसुरार्भकं यः । अव्याजकारुण्यनिधिः स एव यदिष्टदेवोऽजनि नारसिंहः ॥ १९ ॥ निसर्गगूढाञ्जयतीर्थयोगिप्रणीतमध्वागमपञ्चि-

---

बुद्धिः यस्य । 'प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः' इत्यमरः । अत्र वेदानां समूहत्वं अध्यायापेक्षयेति ज्ञेयम् । निराकृतः स्वयुक्तिभिर्निरस्तः अद्वैतिवितानस्य मायिविद्वत्समूहस्य तर्को युक्तिर्येन सः तथोक्तः । यः आनन्दाचार्यः अमन्दं ग्रहणधारणपटुं अन्ते समीपे वसन्तीत्यन्तेवसन्तः शिष्याः । वसतेर्लटः शत्रादेशः । 'शयवासवासिष्वकालात्' इत्यलुक् । 'छात्रान्तेवासिनौ शिष्ये' इत्यमरः । तेषां संदोहं समूहं दर्शनं आदरेण अध्यापयत् । शिष्यसमूहान् दर्शनशास्त्रमध्यापितवान् । गतिबुद्धीत्यादिना कर्तुः कर्मत्वम् । सत्संप्रदायप्रवर्तकोऽयं महानुभावः इति भावः ॥ १६ ॥ **अग्न्याहित इति** ॥ प्रयतः बाह्याभ्यन्तरपूतः । 'पवित्रः प्रयतः पूत' इत्यमरः । अग्न्याहितः आहिताग्निः । यज्वेत्यर्थः । वाहिताग्न्यादिष्विति विकल्पात् निष्ठायाः परत्वम् । यः आनन्दाचार्यः अनुघस्रं प्रतिदिनं । 'घस्रो दिवाहनी वा तु क्लीबे दिवसवासरौ' इत्यमरः । चित्राणि अद्भुतानि गुरुसुतानयनादीनि विष्णोश्चरितानि भागवतादिषु प्रतिपादितानि गायन् पठन् सत्कर्म हर्यर्चनादिकं कर्म निर्माय कृत्वा तस्य कर्मणः इदं तदीयं आद्यन्तं समस्तं फलं अस्य विष्णोः अर्पणमेव तेने चकार । 'इष्टं दत्तं हुतं जप्तं पूर्तं यच्चात्मनः प्रियम् । दारान्सुतान्प्रियान्प्राणान् परस्मै सन्निवेदयेत् ॥' इति प्रमाणादिति भावः ॥ १७ ॥ **प्रतीति** ॥ यस्य आनन्दाचार्यस्य प्रतीष्टि इष्टिषु । यथार्थेऽव्ययीभावः । इष्टिर्नाम प्रतिपदि कर्तव्यहोमविशेषः । 'इष्टिश्चैवं प्रतिपदि पक्षयोरुभयोरपि । कर्तव्या ग्रहणेष्टिश्च चातुर्मास्यानि चैवहि ।' इति याज्ञवल्क्यस्मरणात् । अगारं गृहं प्रणयात् स्नेहात् न तु निर्बन्धादिति भावः । उपेतैः प्राप्तैः उर्वीविबुधप्रबर्हैः भूसुरवर्यैः कर्तृभिः । 'मुख्यवर्यवरेण्याश्च प्रबर्होऽनवरार्ध्यवत्' इत्यमरः। अपूपा एव शैलाः तैश्च आज्यदध्नां प्रवाहैश्च सह वर्तत इति तत्तथोक्तम् । अत्र अपूपानां शैलत्वं राश्यभिप्रायेणेति ज्ञेयम् । अनल्पः अपरिमितः सूपो यस्मिन् तत् अनल्पसूपम् । मिष्टं सम्यक्पक्वं अन्नं अभोजि भुक्तम् । भुजेः कर्मणि लुङ् ॥ १८ ॥ **आचूडमिति** ॥ यो नृसिंहः आपज्जलधौ चूडामारभ्य आचूडम् । आभिविधावव्ययीभावः । शिखापर्यन्तं निमग्नं अत्यन्तापन्नमित्यर्थः । असुरार्भकं प्रल्हादं द्राक् शीघ्रं अपालयत् । तद्बाधकहिरण्यकशिपुसंहारद्वारा रक्षितवान् । अत एव अव्याजकारुण्यनिधिः निरुपाधिककृपाश्रयः । नरसंबन्धी नारः स चासौ सिंहश्च सः नारसिंह एव यस्यानन्दाचार्यस्य इष्टदेवः अजनि अभूत् । श्रीनृसिंहोपासक इत्यर्थः ॥ १९ ॥ **निसर्गेति** ॥ यः आनन्दाचार्यः अक्लिष्टानि स्पष्टानि । 'अथ क्लिष्टमविस्पष्टम्' इत्यमरः । पदानि यासु ताभिः । टिप्पणीभिः स्वकृतव्याख्यानग्रन्थविशेषैः । निसर्गेण स्वभावेन गूढान्

कार्थान् । आश्चर्यमक्लिष्टपदाभिरुर्व्यां यष्टिप्पणीभिः प्रकटीचकार ॥ २० ॥ अरुन्धती शक्तिपितुर्यथैव यथात्रिनाम्नो यमिनोऽनसूया । तस्याभवत्तद्वदपङ्कशीला गङ्गेति भार्या गुणवारिराशेः ॥ २१ ॥ आकर्ण्य यस्याः पतिदेवतात्वं गृहेषु वान्यो गृहिणीसमूहः । व्यालोलताटङ्कयुगाभिरामं सानन्दमान्दोलयदुत्तमाङ्गम् ॥ २२ ॥ सा भर्तृशुश्रूषणमप्रमत्ता गुर्वग्निदेवद्विजबन्धुसेवाम् । विचक्षणा चाश्रितरक्षणं च तस्यानुमत्या तनुते स्म साध्वी ॥ २३ ॥ जायापती तौ जगदेकनेतुः पादारविन्दार्चनया च

---

दुर्ज्ञेयान् जयतीर्थयोगिना प्रणीतानां मध्वागमपञ्चिकानां मध्वशास्त्रटीकानां अर्थान् उर्व्यां प्रकटीचकार । आश्चर्यं दुर्ज्ञेयटीकार्थप्रकटनसामर्थ्यं अस्य अद्भुतमित्यर्थः । ' विवृतिः पञ्चिका टीका ' इत्यमरः ॥२०॥ **अरुन्धतीति** ॥ यथैव शक्तिपितुः वसिष्ठस्य अरुन्धती भार्या अभवत् । यथा च अत्रिनाम्नो यमिनो मुनेः अनसूया भार्या अभवत् । तद्वत्तथा गुणवारिराशेः तस्य आनन्दाचार्यस्य। अत्र पूर्वोक्तश्लोकपञ्चके यच्छन्दस्य अनेन तच्छब्देनान्वयो द्रष्टव्यः । अपङ्कशीला निष्पापस्वभावा । ' शीलं स्वभावे सद्वृत्ते ' इत्यमरः । नदीपक्षे अकर्दमस्वभावा च । 'पङ्कः कर्दमपापयोः' इति विश्वः । गङ्गा गङ्गाम्बेति प्रसिद्धेति शेषः । भार्या अभवत् । अत्र गङ्गाशब्दस्य सरिद्विशेषवाचकत्वात् गुणसमुद्रस्य गङ्गाभार्याकत्वं युक्तमिति गम्यते । यथा वसिष्ठात्रिसागराणां अरुन्धत्यनुसूयजान्हव्यो अनुरूपाः तथास्य गङ्गाम्बापि अनुरूपा भार्याभूदिति भावः ॥ २१ ॥ **आकर्ण्येति** ॥ गृहेषु स्वस्वमन्दिरेषु स्थित इति शेषः । अन्यः तद्बन्धुजनेतरः । बन्धूनां तु स्नेहवशात् दोषानुद्भानात् । गृहिणीनां कुलस्त्रीणां समूहः तत्पतयश्चेति चकारार्थः । यस्या गङ्गाम्बायाः पतिदेवतात्वं पातिव्रत्यं आकर्ण्य आगन्तुकमुखात् श्रुत्वा सानन्दं यथा भवति तथा व्यालोलेन चञ्चलेन ताटङ्कयुगेन कर्णभूषणयुग्मेन अभिरामं मनोहरं उत्तमाङ्गं शिरः आन्दोलयत् । अनन्यसाधारणमस्याः पातिव्रत्यमित्याश्चर्यहर्षाभ्यां शिरःकम्पं चकारेत्यर्थः । अत्र सर्वासां गृहिणीनां शिरःकम्पनासंबन्धेऽपि तत्संबन्धोक्तेरतिशयोक्तिः । सा च व्यालोलताटङ्केतिरम्यतापादकस्वभावोक्त्युज्जीवितेति रहस्यम् । तया चेतरस्त्रीभ्योऽस्याः व्यतिरेको व्यज्यत इति अलंकारेण अलङ्कारध्वनिः । ' व्यतिरेको विशेषश्चेदुपमानोपमेययोः ' । इति लक्षणात् ॥ २२ ॥ **सेति** ॥ विचक्षणा गृहोपस्करसंग्रहादिषु दक्षा । ' संयतोपस्करा दक्षा मृष्टा व्ययपराङ्मुखी ' इति याज्ञवल्क्यस्मरणात् । साध्वी पतिव्रता सा गङ्गाम्बा अप्रमत्ता सावधाना सती भर्तृशुश्रूषणं च गुरवः श्वशुरादयः अग्नयः गार्हपत्यादयः देवाः इष्टदेवताः द्विजाः अतिथयः बान्धवाः पतिसम्बन्धिनः तेषां सेवां यथायोग्यं पादवन्दनादिशुश्रूषां च आश्रितानां स्वानुजीविनां रक्षणं अन्नवस्त्रादिदानेन परिपालनं च तस्य भर्तुः अनुमत्या अनुज्ञया न तु स्वातंत्र्यादिति भावः । ' स्वातंत्र्यं न स्त्रिया ' इति निषेधात् तनुते स्म चकार ॥ २३ ॥ **जायेति** ॥ जायापती स्त्रीपुरुषौ जगतां एकनेतुः मुख्यकर्तुः हरेः पादारविन्दार्चनया भक्त्या हरौ माहात्म्यज्ञानपूर्वकस्नेहेन च सत्यं यथार्थभाषणं क्षमा क्रोधनिग्रहः दानं पात्रे व्ययः दम इन्द्रिय-

भक्त्या । सत्यक्षमादानदमार्जवाद्यैः गुणैरभूतां गुरुणापि नन्द्यौ ॥ २४ ॥ इत्यन्वहं कर्मभिरस्तमायैः संपादितश्रीनृहरिप्रसादौ ॥ तौ तावदेकेन तनूभवेन चिरादगातां भुवि पुत्रिसंज्ञाम् ॥ २५ ॥ यच्छ्रीनिवासस्य कृपामहिम्ना जातोऽर्भकोऽसौ दिवसे शुभंयौ ॥ चक्रे विधिज्ञेन ततश्च पित्रा स श्रीनिवासोचितनामशाली ॥ २६ ॥ तेनोपनीतः स हि बाल्य एव कुशाग्रधीः सम्यगधीतवेदः॥ यथामनीषं पितुरेव तस्माद्बभूव सद्दर्शनतत्त्ववेत्ता ॥ २७ ॥ कदाचिदालोक्य कुमारमेनं क्रमाद्गलद्बाल्यवयोऽभिरामं ॥ नात्यन्त-

---

निग्रहः आर्जवं अकापट्यं आदिशब्देन दयासन्तोषादयो गृह्यन्ते । तैर्गुणैश्च हेतुभिः गुरुः मन्त्रोपदेशादिना शास्ता तेनापि किमुतान्यैरितिभावः । नन्द्यौ अहो दम्पत्त्योरनयोर्दाम्पत्यादिगुणायतेति सन्तोषणीयौ अभूतां बभूवतुः । भुवः कर्तरि लुङ् । एतेन अनयोः परस्परानुकूल्यात् त्रिवर्गवृद्धिः सूचिता । तथा च याज्ञवल्क्यः 'यच्चानुकूल्यं दम्पत्त्योस्त्रिवर्गस्तत्रवर्द्धते' । इति ॥२४॥ इतीति ॥ उक्तप्रकारेण अन्वहं अनुदिनं अस्तमायैः दम्भरहितैः कर्मभिः सदनुष्ठानैः साधनैः सम्पादितश्रीनृहरिप्रसादौ तौ दम्पती चिरात् चिरकालात् तावत् प्रथमं एकेन तनूभवेन पुत्रेण भुवि पुत्रिणौ पुत्रवन्ताविति संज्ञां नामधेयं अगातां प्रापतुः । इणूगताविस्यसमाल्लुङ् । एकं पुत्रं जनयामासतुरित्यर्थः ॥ २५ ॥ अथ पिता तस्य नाम किमकार्षीदित्यत्राह ॥ यदिति ॥ यद्यस्मात्कारणात् असौ अर्भकः शिशुः श्रीनिवासस्य श्रीपतेः कृपामहिम्ना शुभंयौ शुभान्विते दिवसे जातः । 'अहंशुभमोर्युस्' इतिमत्वर्थे युस् । 'शुभंयुस्तु शुभान्वितः' इत्यमरः । ततः तस्मात्कारणात् विधिज्ञेन शास्त्रविदा पित्रा सः कुमारः श्रीनिवास इति उचितेन योग्येन नाम्ना शालत इति प्रकाशत इति श्रीनिवासोचितनामशाली चक्रे कृतः । श्रीनिवासप्रसादलब्धोऽयं तन्नामधारको भवत्वित्येको हेतुः । शुभदिनोत्पन्नत्वात् श्रीमान्भवतीत्यपरः । इत्थं हेतुद्वयेन सः तस्य श्रीनिवास इति नामकरणं चकारेत्यर्थः ॥ २६ ॥ तेनेति ॥ कुशाग्रधीः कुशाग्रवत्सूक्ष्मबुद्धिः सः कुमारः तेन पित्रा बाल्ये गर्भपञ्चमे एवेत्यर्थः । उपनीतः कृतोपनयनः । 'गर्भपञ्चमे ब्राह्मणं उपनयेत्' इति पैठीनसीं श्रुतिं हि शब्देन सूचयति । सम्यक् शिक्षादिषडङ्गसहितं अधीतवेदः सन् तस्मात्पितुः सकाशादेव यथामनीषं यावद्बुद्धिबलम् । यथार्थेऽव्ययीभावः । सद्दर्शनानां मध्वशास्त्राणां तत्त्वं रहस्यार्थं विन्दते गच्छतीति सद्दर्शनतत्ववेत्ता बभूव । गत्यर्थानां ज्ञानार्थकत्वात् तत्त्ववेदिताभूदित्यर्थः । अत्र कुमारस्य वेदशास्त्राध्ययनानन्तरं विवाहोऽपि कृत इति ज्ञेयम् । क्रमप्राप्तत्वात् । यथाह याज्ञवल्क्यः 'गुरवे तु वरं दत्वा स्नायीत तदनुज्ञया । वेदव्रतानि वा पारं नीत्वा ह्युभयमेव वा । अविप्लुतब्रह्मचर्यो लक्षिण्यां स्त्रियमुद्वहेत् ।' इति ॥ २७ ॥ कदाचिदिति ॥ सः आनन्दाचार्यः क्रमाद्गलता गच्छता बाल्यवयसा अभिरामं मनोहरं आसन्नयौवनमित्यर्थः । एनं कुमारं कदाचिदालोक्य नात्यन्तसंतुष्टमनाः अनतितृप्तहृदयः सन् । न शब्देन नञर्थेन सुप्सुपेति समासः । निशीथे अर्धरात्रे पर्यङ्क-

संतुष्टमना निशीथे पत्नीं स पर्यङ्कगतामवादीत् ॥ २८ ॥ यदावयोरेव बभूव सूनुः चिन्ताजुषोः सन्ततये चिराय ॥ प्रसेदिवानेव कृपानिधानं पारीन्द्रवक्त्रः कुलदैवतं नः ॥ २९ ॥ अनन्यलभ्यामगमन्प्रतिष्ठां यत्सेवया केवलमब्जजाद्याः ॥ रमाधिनेतुर्महिमानमस्य को वक्तुमीष्टे कुशलोऽपि मर्त्यः ॥ ३० ॥ यदा यदा यद्यदसौ ददाति स्वकीयकर्मानुगुणं स्वतन्त्रः ॥ तदा तदा मानिनि तेन तेन पुंसापि संतुष्टहृदैव भाव्यम् ॥३१॥ तथापि तन्वङ्गि न चातितृप्तं मनो ममानेन तनूभवेन ॥ यत्सूनुमेकं नयनं च पुंसामविद्यमानोपममामनन्ति ॥ ३२ ॥ तदद्य विद्याविनयादिहृद्यं सून्वन्तरं सुभ्रु यथा भवेन्नः ॥ तथा भवार्णोनिधिकर्णधारं श्रीना-

---

गतां शयनस्थां पत्नीं इति वक्ष्यमाणरत्या अवादीत् वदति स्म ॥२८॥ किमित्यत्राह **यदिति** ॥ यद्यस्माच्चिराय संततये प्रजार्थं चिन्ताजुषोः कदा वा पुत्रो भविष्यतीति चिन्तयतोः आवयोः एषः सूनुः बभूव तस्मात्कारणात् नः अस्माकं कुलदैवतं कृपानिधानं कृपाश्रयः पारीन्द्रवक्त्रः सिंहवक्त्रो नृसिंहः । 'कण्ठीरवो गजरिपुः पारीन्द्रश्चेति पिङ्गलः ।' इतिसिंहपर्यायेषु विश्वः । प्रसेदिवान् प्रसन्नोऽभूदिति शेषः । सदेः क्वसन्तो निपातः । पुत्रलाभान्यथानुपपत्त्या हरिप्रसादोऽनुमीयत इतिभावः ॥ २९ ॥ तस्मिन्प्रसन्ने किमलभ्यमित्याशयेनाह **अनन्येति** । अब्जजो ब्रह्मा आद्यो येषां ते अब्जजाद्याः देवाः इति शेषः । यस्य परमात्मनः सेवया केवलं सेवयैव नान्यसाधनेनेति भावः । अन्यैर्लब्धुमशक्यां अनन्यलभ्यां प्रतिष्ठां सत्यलोकाधिपत्यादिकं अगमन् प्राप्तवन्तः । अस्य ईदृशस्य रमाधिनेतुः श्रीपतेः महिमानं कुशलोऽपि विद्वानपि किमुतेतर इति भावः । मर्त्यः को वा वक्तुं वर्णयितुम् ईष्टे शक्नोति । न कोपीत्यर्थः ॥ ३० ॥ **यदेति** ॥ हे मानिनि मानवति स्वतन्त्रः स्वयोग्यताधिकं दातुं समर्थोऽपीति भावः । असौ हरिः यदा यदा यस्मिन् काले स्वकीयकर्मानुगणं यद्यत् फलं ददाति तदा तस्मिन्काले । तेन तेन फलेन करणेन पुंसा पुरुषेणापि कर्त्रा स्त्रियापीत्यपेरर्थः । संतुष्टहृदा तुष्टचित्तेन भाव्यं भवितव्यमेव । 'दैवोपपादितं यद्यत्तेन तुष्टो भवेद्द्विजः । ततोऽभ्यधिकमन्विच्छन् स स्तेनो दण्डमर्हति ।' इतिशास्त्रादितिभावः ॥ ३१ ॥ **तथेति** ॥ तन्वङ्गि हे कृशाङ्गि तथापि दैवाल्लब्धेन संतोष्टव्यमिति जानतोपि मम मनः अनेन तनूभवेन अतितृप्तं न च भवतीति शेषः । कुतः यद्यस्मात्पुंसां एकं सूनुं एकं नयनं च अविद्यमानेन वस्तुना उपमा सादृश्यं यस्य तत्तथोक्तं अविद्यमानप्रायमित्यर्थः । सामान्ये नपुंसकमिति नपुंसकबहुव्रीहिः । आमनन्ति वदन्ति जना इति शेषः। आङ्पूर्वात् म्ना अभ्यास इत्यस्मात्कर्तरि लट् । अत्र एकैकयोः पुत्रनयनयोः अविद्यमानप्रायतेति लोकप्रवादानुकरणात् लोकोक्तिर्नामालङ्कारः । 'लोकप्रवादानुकृतिर्लोकोक्तिरिति वर्ण्यते ।' इति लक्षणात् ॥ ३२ ॥ **तदिति** ॥ तत्तस्मात्कारणात् शोभने भ्रुवौ यस्याः तस्याः संबुद्धिः हे सुभ्रु । विद्याविनयादिभिः गुणैरिति शेषः । हृद्यं मनोज्ञं अन्यःसूनुः सून्वन्तरम् । सुप्सुपेति समासः । नः अस्माकं यथा भवेत्तथा अद्येदानीं भवार्णोनिधिकर्णधारं संसारसागरात्तारकं श्रीनारसिंहं शरणं रक्षितारं भजामः । वयमिति शेषः । 'शरणं गृहरक्षित्रोरि' त्यमरः । भजाम इत्यत्र गुरावात्मनि

रसिंहं शरणं भजामः ॥ ३३ ॥ इतीरयित्वा प्रमदां स धात्रीसुराग्रणीः स्मेरमुखारविन्दाम् ॥ स्मरन् रमेशं शरदभ्रकल्पे तल्पे निनद्रौ तलिनप्रबोधः ॥३४॥ तदात्व एवात्मतनुप्रभाभिर्वि-द्योतिताशेषदिशावकाशः ॥ अङ्कूरदेणाङ्कनिरङ्करेखाशङ्काकरोदग्रकरालदंष्ट्रः ॥३५॥ भृशं कनद्भालतटीनिरूढं विसंकटभ्रूलतिकाभिरामः ॥ तत्तादृगुत्तुङ्गसटाकदम्बनुत्ताखिलाम्भोधरचक्रवालः ॥ ३६ ॥ सुवृत्तनेत्रत्रयभाप्रकॢप्तविकर्तनेन्दुज्वलनाभिभूतिः ॥ चिरत्नरत्नोज्वलभू-

---

बहुवचनमिति बहुवचनप्रयोगः ॥ ३३ ॥ इतीति ॥ धात्रीसुरेषु भूसुरेषु अग्रणीः श्रेष्ठः । 'सत्सूद्विषेत्यादिना क्विप् । अग्रग्रामभ्यां नयतेरिति णत्वम् । सः आनन्दाचार्यः स्मेरं स्मितयुक्तं मुखारविन्दं यस्यास्तां तथोक्ताम् । नमिकम्पिस्म्यजसेत्यादिना रप्रत्ययः । प्रमदां कान्ताम् । 'प्रमदा कामिनी कान्ते' त्यमरः । इति उक्तरीत्या ईरयित्वा उक्त्वा रमेशं हरिं स्मरन् शरदभ्रं शरत्कालमेघः तेन ईषदसमाप्तं शरदभ्रकल्पम् तद्वच्छुभ्रमित्यर्थः । ईषदसमाप्तौ कल्पप्प्रत्ययः । तस्मिन् तल्पे शयने तलिनं स्तोकः प्रबोधो ज्ञानं यस्य सः तथोक्तः सन् नतु सर्वात्मना निद्रापरवश इत्यर्थः । निदद्रौ निद्रातिस्म 'तलिनं विरले स्तोके' इत्यमरः । निद्रातेः कर्तरि लिट् ॥३४॥ अथ तत्स्वप्ने श्रीनृसिंहः प्रादुरासीदिति वक्ष्यमाणं श्रीनृसिंहं पञ्चभिः श्लोकैर्विशिनष्टि तदात्व इति ॥ तदात्वे तस्मिन्काले एव । 'तत्कालस्तु तदात्वं स्यादि'त्यमरः । आत्मतनुप्रभाभिः विद्योतिताः प्रकाशिताः अशेषदिशानां अवकाशाः अन्तराणि यस्य सः तथोक्तः । अङ्कूरन्त्यौ बहिराविर्भवन्त्यौ एणाङ्कस्य चन्द्रस्य निरङ्के निष्कलङ्के ये रेखे शकले तयोः शङ्कते किमिमे चन्द्रलेखे इति भ्रान्तिं कुरुत इत्यङ्कूरदेणाङ्कनिरङ्करेखाशङ्काकरे । उदग्रे उन्नते कराले भीषणे दंष्ट्रे यस्य सः तथोक्तः । दंष्ट्रयोश्चन्द्रशकलसाम्यात् शुभ्रत्वं व्यजते । 'अङ्कूरश्चंकुरोपि चे'ति शब्दभेदप्रकाशे । 'कराले भीषणे तुङ्गः' इत्यमरः । अत्र विशेषण—द्वयस्यापि उत्तरत्र तदग्रतः कोऽपि पुमानाविरासीदित्यनेन विशेष्येण संबन्धः । इतः परं श्लोकचतुष्टयेऽपि एवमेव योज्यम् ॥३५॥ भृशमिति ॥ पुनः किंविधः । भृशं कनतोऽत्यंतप्रकाशमानस्य भालस्य ललाटस्य तटीं प्रदेशं विरूढाभ्यां भ्रुवौ लतिके इव भ्रूलतिके ताभ्यां अभिरामः । अत्र नृसिंहस्य सिंहास्यत्वात् भ्रुवोर्ललाटगतत्वं ताभ्यां अभिरामत्वं तु भक्तदृष्ट्यपेक्षयेति ज्ञातव्यम् । अन्यथा ललाटसङ्गतभ्रुवोर्भयङ्करत्वात् । तटीमिति तटस्य त्रिलिङ्गत्वं 'तटं त्रिष्वि'त्यभिधानात् । विसंकटं पृथु बृहद्विशालं पृथुलं महत् ।' इत्यमरः । ता एव तादृशः तत्तादृशः निरुपमा इत्यर्थः । तासां उत्तुङ्गानां सटानां केसराणां कदम्बेन समूहेन नुत्तं निरस्तं अखिलानां अम्भोधराणां मेघानां चक्रवालं मण्डलं यस्य सः तथोक्तः । 'सटा जटाकेसरयोरि'ति विश्वः ॥३६॥ सुवृत्तेति ॥ पुनः किंविधः । सुवृत्तस्य सुतरां वर्तुलस्य नेत्रत्रयस्य प्रभया कान्त्या प्रक्लृप्ता कृता विकर्तनेन्दुज्वलनानां सूर्यचंद्राग्नीनां अभिभूतिः तिरस्कारो यस्य सः तथोक्तः । तेजसातिशयितनेत्रत्रयकान्तिरित्यर्थः । अत्र नृसिंहस्य त्रिनेत्रत्वं 'ध्यायेन्नृसिंहमुरुवृत्तरवित्रिनेत्रम्' इत्यागमप्रसिद्धम् । चिरत्नानि पुरातनानि । 'नश्च पुराणे प्रादि'ति चिरशब्दात् त्नप्रत्ययः । चिरत्नैः रत्नैः उज्वलानां भूरीणां बह्वीनां भूषणानां मुकुटकैयूरादीनां महच्छटया

रिभूषामहच्छटाचित्रितमेघमार्गः ॥ ३७ ॥ भुजङ्गराड्भोगनिभप्रगल्भदोस्तम्भयुग्माङ्कितशङ्खचक्रः ॥ रत्नोर्मिकाक्षप्तिवितानराजज्जानूपरिन्यस्तकराब्जयुग्मः ॥ ३८ ॥ श्रीवत्समाकौस्तुभवैजयन्तीभावत्समत्यायतबाहुमध्यः ॥ काञ्चीगुणोद्भासिकटीतटाञ्चत्कल्याणवासाः कमनीयमूर्तिः ॥ ३९ ॥ पुङ्खानुपुङ्खप्रसरत्कटाक्षप्रेङ्खोलितापारकृपारसौघः ॥ आस्ये मृगेन्द्राकृतिराविरासीत्तदग्रतः कोऽपि पुमानुदग्रः ॥ ४० ॥ आकस्मिकस्वागतिविस्मितेन तेनोत्थितेनाशुकृतप्रणामः ॥ स्मेराननेन्दुः स तमित्यवादीद्धाराधरो-

---

तेजःसमूहेन चित्रितो मेघमार्गो आकाशो यस्य स तथोक्तः । 'तेजो धाम महो विभा' इत्यमरः । 'छटा समूहपरयोरि'ति विश्वः ॥ ३७ ॥ **भुजङ्गेति** । पुनः किंविधः भुजङ्गराट् शेषः तस्य भोगः कायः 'भोगः सुखे धने चाहेः शरीरफणयोर्मतः ।' इति विश्वः । तेन निभेन तुल्येन तद्वद्दीर्घेणेत्यर्थः । प्रगल्भेन प्रौढेन दोषौ भुजौ स्तम्भाविव दोस्तम्भौ तयोः युग्मेन अङ्कित गृहीते शंखचक्रे यस्य सः तथोक्तः । ऊर्मिकानाम अङ्गुलीयकम् । रत्नोर्मिकयोर्दीप्तिवितानेन कान्तिसमूहेन राजद्भासमानं जान्वोरूपरि व्यस्तं कराब्जयोः युग्मं यस्य स तथोक्तः । 'अङ्गुलीयकमूर्मिकम्' । 'पूगो वितानं प्रकरमि'ति चामरः । अत्र यद्यपि 'बिभ्रद्भुजानीकशतं नखायुधमि'ति भागवते नृसिंहस्य असंख्यबाहुत्वमुक्तं तथापि जानुप्रसक्तकरयुग्ममथापराभ्यां चक्रं दधानमित्यागमप्रकारेण अस्य चतुर्भुजत्वमुक्तमिति ज्ञातव्यम् ॥ ३८ ॥ **श्रीवत्सेति** ॥ पुनः किंविधः श्रीवत्सो लाञ्छनविशेषः मा लक्ष्मीः कौस्तुभो नाम मणिः वैजयन्ती नाम मालिका च तासां या कांतिरस्यास्तीति भावत् । 'मादुपधायाश्चे'ति मतोर्मस्य वकारः । तच्च तत्समं अविषमं अत्यायतं अतिविशालं बाहोर्मध्यं वक्षस्थलं यस्य स तथोक्तः । अत्र श्रीवत्सादीनां वक्षस्थलाश्रयत्वात्तस्य कान्तिमत्वं युक्तं । काञ्चीगुणेन मेखलासूत्रेण उद्भासि भासमानं कटीतटं मध्यप्रदेशं अञ्चत् प्राप्तं कल्याणवासाः कनकांशुकं यस्य स तथोक्तः । 'कल्याणं मङ्गले हेम्नी'ति प्रतापः । अत एव कमनीयमूर्तिः मनोहराकृतिः । काञ्चीत्यत्र 'स्त्रीकट्या मेखला काञ्ची पुंस्कट्यां शृङ्खलं त्रिष्वि'त्यमरात् काञ्याः स्त्रीभूषणत्वात् अत्र तु शृंखलाभिप्रायेणोक्तमित्यदोषः ॥ ३९ ॥ **पुंखेति** । पुंखशब्दो बाणाग्रवाचकः 'बाणाग्रं स्याद्वयोः पुंख'इति प्रतापः । पुंखमनुगतः पुंखो यस्मिन् कर्मणि तद्यथा पुंखानुपुंखं लक्षणया अविच्छिन्नेनेत्यर्थः । प्रसरन् उद्गच्छन् कटाक्षे आपाङ्गदर्शने प्रेङ्खोलितः तरलीकृतः अपारः कृपारसस्यौघः प्रवाहो यस्य स तथोक्तः । अत्यन्तदयार्द्रदृष्टिरिति फलितोर्थः । आस्ये मुखे मृगेन्द्रस्य सिंहस्य आकृतिरिव आकृतिर्यस्य स तथोक्तः । उदग्रः उन्नतः कोऽपि लोकाविलक्षणः पुमान् तस्य आनन्दाचार्यस्य अग्रतः अग्रे सार्वविभक्तिकस्तसिल् । आविरासीत् । उक्तविशेषणविशिष्टः नृसिंहः तत्स्वप्ने प्रादुर्बभूवेत्यर्थः ॥ ४० ॥ **आकस्मिकेति** ॥ अकस्माद्भावा आकस्मिकी तया स्वस्य आगत्या अतर्कितस्वागमनेन विस्मितेन अत एव आशु शीघ्रं उत्थितेन शयनादिति शेषः । तेनानन्दाचार्येण कृतप्रणामः स्मेराननेन्दुः स नृसिंहः धाराधरस्य मेघस्येव उदारो महान् गभीरश्च कण्ठो यस्य सः तथोक्तः सन् । कण्ठशब्देन ध्वनिर्लक्ष्यते । तं आनन्दाचार्यं इति वक्ष्य-

दारगभीरकण्ठः ॥४१॥ वत्स त्वया ते च वधूमतल्लच्या विधूय मायां विधिवच्चिराय ॥ सद्भक्तिभावेन समर्चितत्वात्संतुष्टचित्तोऽस्मि सदाश्रयोऽहम् ॥४२॥ प्रसादतो मे परमेष्ठिपूर्वैरप्यर्थनीयादतिमात्रतेजः ॥ भविष्यति द्राक् भजनीयमार्यैः आनन्द ते नन्दनरत्नमेकम् ॥ ४३ ॥ स बाल्य एवाखिलवेदशास्त्रपयोधिपारीणतयातिभास्वान् ॥ कर्ता महीभृच्छिरसा धृताङ्घ्रिरद्वैतविद्यातमसां निरासम् ॥ ४४ ॥ विधूय दुर्वादिघनान्स धीमान्विधाय लोकानतिवीततापान् ॥ जोत्स्नावदातैः सुरभीकरिष्यत्याशान्तराण्यात्मयशःप्रसूनैः ॥ ४५ ॥ क्रमेण गार्हस्थ्यकृतोपरामः ततः स मय्येव निवेशितात्मा ॥ तुरीयमेत्याश्रममत्युदारं संपत्स्यते लोकगुरुर्गरीयान् ॥ ४६ ॥ तत्रापि वैराग्यमनन्यकार्यमार्योऽधिगत्योर्जितमुर्वरायाम् ॥ मदीय-

---

माणरीत्या अवादीत् ॥ ४१ ॥ किमाहेत्याकाङ्क्षायां तदेव श्लोकषट्कैराचष्टे वत्सेत्यादि । हे वत्स हे पुत्रेत्यादिसस्नेहोक्तिः । ‘ उद्वाहो नन्दनो वत्सस्तुक् च जातश्च दारक ’ इति प्रतापः । त्वया ते तव वधूमतल्लया वधूश्रेष्ठया च । ‘ मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ । प्रशस्तवाचका ’ इत्यमरः । मायां कपटं विधूय सद्भक्तिभावेन दृढभक्तितया विधिवत् चिराय समर्चितत्वाद्धेतोः सतामाश्रयः अहं संतुष्टचित्तोऽस्मि ॥ ४३ ॥ संतुष्टे त्वयि किमस्माकं श्रेय इत्याशङ्कायामाह ॥ प्रसादत इति ॥ हे आनन्द परमेष्ठिपूर्वैरपि अर्थनीयात्प्रार्थनीयात् मे प्रसादतोऽनुग्रहात् अतिमात्रतेजः अधिकप्रभावं अधिककान्ति च आर्यैः श्रेष्ठैः वैश्यैश्च भजनीयम् ‘स्यादार्यः स्वामिवैश्ययोरि’त्यमरः । एकं नन्दनरत्नं पुत्रश्रेष्ठः मणिश्च । ‘ रत्नं श्रेष्ठे मणावपि ’ इति विश्वः । ते तव द्राक् भविष्यति इदमेव ते महच्छ्रेय इति भावः ॥ ४३ ॥ स इति । सः तव भविष्यत्पुत्रः बाल्ये बालभाव एव यौवने किमुतेति भावः । अखिलवेदशास्त्रपयोनिधेः पारं गच्छतीति पारीणः तस्य भावस्तत्ता तया हेतुना अत्यन्तं भासत इति अतिभास्वान् । अत एव महीभृतां राज्ञां शिरसा आदृताङ्घ्रिः । अद्वैतविद्या एव तमांसि तेषां निरासं कर्ता करिष्यति । डुकृञ् करण इत्यस्मात् भविष्यदनद्यतने लुट् । यथा सूर्यः समुद्रादुद्भूय महीभृच्छिरसा पूर्वपर्वतशिखरेण आदृताङ्घ्रिः आदृताकिरणः तमांनिरासं चकारेति तद्वदिति ध्वनिः ॥ ४४ ॥ विधूयेति । धीमान् विद्वान् स कुमारः दुर्वादिनो जगन्मिथ्येत्यादि दुर्वचनशीलाः त एव घनाः मेघाः तान् विधूय युक्तिभिर्विजित्य लोकान् साधुजनान् वीततापान् ज्ञानोपदेशेन निरस्ततापत्रयान् विधाय ज्योत्स्नावदातैः चन्द्रिकाधवलैः आत्मनो यशःप्रसूनैः कीर्तिकुसुमैः आशान्तराणि सुरभीकरिष्यति दिगन्तविश्रान्तकीर्तिर्भविष्यतीत्यर्थः । अत्र घनविधूननतापनिरसनदिगन्तसुरभीकरणानां वायुधर्मत्वात्कुमारे वायुत्वारोपणत्वस्य गम्यमानतया एकदेशविवर्तिरूपकम् ॥ ४५ ॥ क्रमेणेति ॥ सः कुमारः क्रमेण मय्येव निवेशितात्मा निविष्टबुद्धिः अत एव गार्हस्थ्यात् कृतोपरामः कृतविरतिः गृहस्थाश्रमं त्यक्त्वेत्यर्थः ‘ आरत्यविरतिविरतय उपराम ’ इत्यमरः । ततोऽनन्तरम् अत्युदारं सर्वाश्रमोत्कृष्टं तुरीयं चतुर्थम् । ‘चतुरच्छयतावाद्यक्षरलोपश्चे’ति छप्रत्ययः चकारलोपश्च । आश्रममेत्य प्राप्य गरीयान् श्रेष्ठतरः लोकानां गुरुः संपत्स्यते भविष्यति ॥ ४६ ॥ तत्रेति ॥ आर्यः श्रेष्ठोऽयं कुमारः तत्र चतुर्थाश्रमेऽपि अन्यैः कर्तुमशक्यं अनन्यकार्यं ऊर्जितं अप्रतिहतं वैराग्यं अधिगत्य

मेवार्जयिता प्रसादं विचित्रचारित्रपवित्रिताशः ॥ ४७ ॥ इत्यादि तत्कर्णसुधां विधाय स भारतीं भाविशुभावगत्यै ॥ पुरोऽनिशं तद्धृदयस्थिताङ्घ्रिसरोरुहोऽप्याशु तिरोबभूव ॥ ४८ ॥ प्रातः समून्मील्य ततः स नेत्रे चित्रार्णवे क्लृप्तचिरावगाहः ॥ स्वप्नं तमग्र्यसभासु पौनःपुन्येन संमोदवशादभाणीत् ॥ ४९ ॥ आकर्ण्य तेनाभिहितं तदानीं वृत्तान्तमेतद्विदुषां समाजः ॥ अन्तस्तताना श्रुतपूर्वभावात्संदेहमीषत्सहकौतुकेन ॥ ५० ॥ तत्रान्तरे कोऽपि नृसिंहनेतुरावेशवानुत्थित ऊर्ध्वबाहुः ॥ ननर्त सभ्रूकुटिविस्फुलिङ्गभूत्कारवद्भूरितराट्टहासः ॥ ५१ ॥ विश्वैर्जनैर्विश्वसनीयमेतत्स्वप्नोऽन्यथा स्यान्न कदा च नेति ॥ व्याहृत्य सर्वानपि चित्रसिन्धावमज्जयत्कण्टकिताकृतीन्सः ॥ ५२ ॥ तत्रेत्थं पुरुषमुखेन भाषितं तद्वाग्रूपं मधु नृहरेः पिबन् श्रुतिभ्याम् ॥ आनन्दद्विजमणिरादधात्स भूयोऽत्यन्तंतन्मनसि निजाभिधानमेव ॥ ५३ ॥ आमोदं सुममञ्जरीव महितं पूर्वक्ष्माभृत्तटीवेन्दुं क्षीरपयोनिधानलहरीवामर्त्य-

उर्वरायां भुवि ' उर्वरा सर्वसस्याढ्ये'त्यमरः । स्वस्य चित्रैः चरित्रैः पवित्रिताशः सन् मदीयं प्रसादं अर्जयिता श्रवणमननादिभिः संपादयिष्यति । अर्जतेः कर्तरि लुट् ॥४७॥ इतीति ॥ सः नृसिंहः इत्यादिकं यथा भवति तथा भाविनः शुभस्य पुत्रोत्पत्तिरूपस्य अवगत्यै ज्ञानाय भारतीं वाचं तस्य आनन्दाचार्यस्य कर्णसुधां विधाय श्रुतिसुखं कृत्वेत्यर्थः । अनिशं सन्ततं तस्य हृदये स्थिताङ्घ्रिसरोरुहोऽपि पुरोऽग्रे आशु तिरोबभूव न तु हृदयादिति भावः ॥ ४८ ॥ प्रातरिति ॥ ततो नृहरितिरोधानानन्तरं सः आनन्दाचार्यः प्रातः नेत्रे समून्मील्य स्वापात्प्रबुद्धः सन् इत्यर्थः । चित्रार्णवे आश्चर्यसमुद्रे क्लृप्तः चिरं अवगाहो येन सः तथोक्तः । स्वप्नश्रुतश्रीनृसिंहवाक्यस्मरणादत्यन्तविस्मितः सन्नित्यर्थः । अग्र्याः श्रेष्ठाः । ' घच्छचे'त्यग्रशब्दाच्छप्रत्ययः । तेषां सभासु तं स्वप्नं संमोदवशात् पौनःपुन्येन त्रिचतुरावृत्त्या अभाणीत् जगाद ॥ ४९ ॥ आकर्ण्येति ॥ विदुषां समाजः संघः । तेन आनन्दाचार्येण । अभिहितं उक्तं एतद्वृत्तान्तं स्वप्ने नृसिंहदर्शनादिकं आकर्ण्य श्रुत्वा अश्रुतपूर्वभावात् पूर्वं कुत्राप्यश्रुतत्त्वाद्धेतोः कौतुकेन आश्चर्येण सह ईषत् संदेहं इदं सत्यं नवेति संशयं अन्तः अन्तःकरणे ततान ॥ ५० ॥ तत्रेति ॥ तत्रान्तरे तस्मिन्समये नृसिंहनेतुः श्रीनृसिंहदेवस्य आवेशो अस्यास्तीत्यावेशवान् कोऽपि सभ्येषु कश्चित्पुतुमानिति शेषः। उत्थितः ऊर्ध्वबाहुः भृकुट्या भ्रूभङ्गेन सहितं यथा भवति तथा सः भ्रुकुटिविशेषेण स्फुलिङ्गा अग्निकणाः यस्य सन्तीति विस्फुलिङ्गः स चासौ भूत्कारश्च तद्वान्भूरितरो अट्टहासो यस्य स तथोक्तः सन् ननर्त । सभामध्ये नृसिंहावेशपारवश्यात् नर्तनं चकार ॥५१॥ विश्वैरिति॥ विश्वैरखिलैर्जनैः विश्वसनीयम् तद्वचो विश्रम्भनीयम्। कुतः एतस्य आनन्दाचार्यस्य स्वप्नः कदाचन जात्वपि अन्यथा असत्यः न स्यात् यथार्थ एव भवेदिति भावः। इत्येवं सः पुरुषः व्याहृत्योक्त्वा कण्टकिताकृतीन् भयेन रोमाञ्चिताङ्गान् सर्वाञ्जनान् चित्रसिन्धौ आश्चर्यसमुद्रे अमज्जयत् मज्जयामास। विस्मितांश्चकारेत्यर्थः । कण्टकः क्षुद्रशत्रौ च रोमाञ्चे तीक्ष्णकण्टके' इति विश्वः ॥ ५२ ॥ तत्रेति ॥ तत्र सभायां इत्थं पुरुषमुखेन भाषितं तत् नृहरेः संबन्धिवाग्रूपं मधु माक्षिकं श्रुतिभ्यां पिबन् सः आनन्दद्विजमणिः मनसि भूयः पुनरपि अत्यन्तमधिकं निजाभिधानं स्वनामपदं आनन्दमेव अदधात् ननन्देत्यर्थः । दधातेः कर्तरि लङ् । प्रहर्षणीवृत्तम् । ' म्नौज्रौगुस्त्रिदशयति प्रहर्षणीयमि'ति लक्षणात् ॥ ५३ ॥ आम्मोदमिति ॥ ततोऽनन्तरं द्विजवधूः गङ्गाम्बिका कैश्चि-

भूमीरुहम् ॥ त्द्द्यं पुण्ड्रलतेव पाण्डुरमणिः कैश्चित्ततो वासरैः गर्भं लोकहिताय सा द्विजवधूराधत्त गङ्गाम्बिका ॥ ५४ ॥ इति श्रीविद्याधीशविजये महाकाव्ये गदयकोनेरिणा जनार्दन सूरिकारिते प्रथमः सर्गः ॥ ॥

---

द्वासरैः कतिपयवासरैरेव गर्भं कुसुममञ्जरी कुसुमगुच्छः । ‘ कुसुमं प्रसूनमि’त्यमरः ॥ महितं आमोदं सौरभ्यमिव तथा पूर्वक्षमाभृतः उदयाद्रेः तटी इन्दु चन्द्रमिव तथा क्षीरपयोनिधानस्य क्षीराब्धेः लहरी वीचिः अमर्त्यभूमिरुहं देवतरुं कल्पवृक्षमिव ‘ वीचीभङ्गस्तरङ्गस्यात्तन्महत्त्वेऽथ कथ्यते । ऊर्मिरुत्कलिकोल्लोलकल्लोलौ लहरी तथे’ति हलायुधः ॥ तथा पुण्ड्रलता इक्षुदण्डः । ‘ रसाल इक्षुस्तद्भेदाः पुण्ड्रकान्तारकादयः’ । इत्यमरः । हृद्यं पाण्डुरं शुभं मणिं मौक्तिकमिव लोकहिताय साधुजनप्रीत्यै भविष्यतः पुत्रस्य साधुजनरक्षकत्वात् गर्भधारणस्य लोकहितत्वोक्तिः । सौरभ्यादीनां तु लोकहितत्वं स्पष्टम् । अधत्त दधार । इक्षुदण्डस्य मौक्तिकगर्भत्वं रत्ननिदाने ‘ करिद्रिशङ्खजीमूताः मत्स्यरम्भेक्षुवंशजाः । शुक्त्युद्भवाश्च विज्ञेयाः अष्टौ मौक्तिकयोनयः’ । इति । मालिकोपमालंकारः । शार्दूलविक्रीडितं वृत्तम् । ‘सूर्याश्वैर्मसजस्तताः सगुरवशार्दूलविक्रीडितमिति लक्षणात् ‘ सर्गैरनतिविस्तीर्णैर्भिन्नसर्गान्तलक्षितैः ’ । इतिवचनात्सर्गान्ते वृत्तभेदः कृतः इति सर्वमनवद्यम् ॥ ५४ ॥ अथ कविः सर्गसमाप्तिं वाक्येन कथयति इतीति । इत्येवं गदयकोनेरिणा गदयेति ग्रामनाम तदङ्कितवंशोत्पन्नत्वात् जनाः गदयकोनेरीति वदन्ति । तेन जनार्दनसूरिणा कर्त्रा कारिते श्रीविद्याधीशविजये प्रथमः सर्गः अभूदिति शेषः । एवमुत्तरःत्रापि ज्ञातव्यम् । इति श्रीजनार्दनसूरिकृतायां विद्याधीशविजयव्याख्यायां शब्दार्थदीपिकायां प्रथमः सर्गः समाप्तः ॥ १ ॥

---

# द्वितीयः सर्गः ।

तदनु प्रियमानसैधमानप्रमदेनैव समं सतीमतल्लचाः ॥ नवदौहदलक्षणानि तस्याः प्रकटत्वं प्रजगाहिरे क्रमेण ॥ १ ॥ जगदेकविभूषणीभविष्णौ पृथुके गर्भमुपेयुषि स्वकीयम् ॥ अनया किमतीव पर्यहार्षीद् द्विजयोषा तनुसादतो विभूषाम् ॥ २ ॥ अथ सा धरणावनन्यलभ्यं निजगर्भस्थितबालशीलयोग्यम् ॥ मनसि व्यतनोन्मनोरथानां शतमित्थं धरणीसुरेन्द्रपत्नी ॥ ३ ॥ अपटुः स्वसखीजनोक्तगीताभ्यसनेऽपीषदिलासुपर्वयोषित् ॥ पितुरेव समस्तवेदशास्त्रोत्करमध्येतुमसौ चकार चेतः ॥ ४ ॥ शनकैः स्वनिकेतनैकदेशप्रभुतायां गलिता-

---

आथास्या गर्भवर्णनमारभते **तदन्विति** । तदनु गर्भधारणानन्तरं सतीमतल्लचाः पतिव्रताश्रेष्ठायाः तस्याः गङ्गाम्बिकायाः नवदौहदलक्षणानि नूतनगर्भचिन्हानि प्रियस्य भर्तुः मानसे एधमानः अभिवर्धमानः यः प्रमोदः हर्षः तेन साकमेव क्रमेण प्रकटत्वं जगाहिरे भजन्तिस्म । प्रपूर्वाद् गाह् विलोडने इत्यस्मात्कर्तरि लिट् । यथा यथा गर्भचिन्हानि प्रकटानि तथा तथा तद्भर्तुर्हर्षोऽपि प्रकटबभूवेति सहोक्तिरलंकारः । 'सहोक्तिः सहभावश्चेद्भासते जनरञ्जनः' इति लक्षणात् । अस्मिन् सर्गे चन्द्रिकावृत्तम् । विषमे ससजा गुरुः समे स्युः सभरा यस्य यदीह चन्द्रिका सा । इति लक्षणात् ॥ १ ॥ संप्रति क्षामताख्यं गर्भलक्षणं वर्णयति **जगदिति** । द्विजयोषा ब्राह्मणस्त्री गङ्गाम्बा । 'स्त्री योषिदबला योषा' इत्यमरः । जगतो लोकस्य एकं मुख्यं विभूषणं अलङ्कारः भवितुं शीलमस्येति भविष्णुः । अलंकृञित्यादिना भुवश्चेत्यनुवृत्तेरिष्णुच् । 'भूष्णुर्भविष्णुर्भविता' इत्यमरः । तस्मिन्पृथुके शिशौ स्वकीयं गर्भमुपेयुषि सति अनया विभूषया किम् । सूर्यालोके दीपेन नैव किंचित् प्रयोजनमस्तीत्यर्थः । इतीव इतिमत्वेत्युत्प्रेक्षा । मत्वेति गम्यमानार्थत्वादप्रयोगः । तनुसादतः शरीरकार्श्यात् । विभूषां हारनूपुराद्यलंकारं पर्यहार्षीत् परिहृतवती । शरीरसादादिगर्भलक्षणान्याह वाग्भटः 'क्षामता गरिमा मूर्च्छा तथा छर्दिररोचकम् । जृम्भा प्रसेकः सदनं रोमराज्याः प्रसादनम्' ॥ इति ॥२॥ **अथेति** । कार्श्यादिदुःखानुभवानन्तरम् धरणीसुरेन्द्रपत्नी गङ्गाम्बा धरणौ भुवि अन्यैः लब्धुमशक्यं अनन्यलभ्यं निजगर्भस्थितस्य बालस्य यच्छीलं भविष्यत्सद्वृत्तं तस्य योग्यमनुरूपं मनोरथानां शतं इत्थं वक्ष्यमाणरीत्या मनसि व्यतनोत् । गर्भस्थशिशुः बाल्यात् प्रभृति यद्यत्कर्म करिष्यति तत्तदेव स्वयं कर्तुमिच्छति स्मेत्यर्थः । गर्भिणीनां नानामनोरथाः सम्भवन्तीति प्रसिद्धम् । यथाह वाग्भटः 'पादशोभा विदाहोऽङ्गे श्रद्धाश्च विविधात्मकाः' । इति ॥ ३ ॥ अथ तन्मनोरथप्रकारान्नवभिः श्लोकैराचष्टे । **अपटुरिति** । इलासुपर्वणो भूसुरस्य योषिदसौ गङ्गाम्बा स्वसखीजनेन उक्तस्य गीतस्य गानरूपमङ्गलाष्टकादेः ईषदेकवारमपि अभ्यसने अपटुरसमर्थापि गर्भवहनखेदालस्यादिति भावः । सर्वत्रायमेव हेतुरितिमन्तव्यम् । पटुशब्दस्य 'वोतो गुणवचनादि'ति विकल्पान्न ङीप् । पितुः निजजनकस्य सकाशादेव समस्तवेदशास्त्राणां उत्करं राशिं अध्येतुं चेतश्चकार इयेषेत्यर्थः । बालस्य पितुः सकाशादेव सर्वशास्त्राभ्यासस्य वक्ष्यमाणत्वात् । उत्तरत्राप्येवमेवानुसन्धेयम् ॥ ४ ॥ **शनकैरिति** । साध्वी गङ्गाम्बा शनकैः मन्दम् स्वनिकेतनस्य निजमन्दिरस्य य एकदेशः एकप्रदेशः तस्मिन् प्रभुतायां तत्रत्यजन-

दरापि साध्वी ॥ जगदेकगुरुत्वमेत्य तादृक् सदसद्रक्षणशिक्षणोत्सुकासीत् ॥ ५ ॥ निजकर्मकरीर्नियोगवाण्या स्ववशीकर्तुमपेशलापि तन्वी ॥ चकमे बहुशास्त्रचर्चिकाभिः स्वविधेयानखिलार्हतो विधातुम् ॥ ६ ॥ रहसि क्षणमात्मबन्धुतोक्तप्रियवार्ताश्रवणेऽप्यनुत्सुकापि । वरभागवतादिसत्पुराणान्यसकृच्छ्रोतुमनन्यधीरियेष ॥ ७ ॥ घृतसूपमनोज्ञशाकपूर्वैरपिमृद्वन्नमपारणी प्रभोक्तुम् ॥ परमेशपदार्पितैरमानीत्सुमुखी सा तुलसीदलैस्तदत्तुम् ॥ ८ ॥ अलसा किल सा सनीडसर्पिःकलशापातिबिडालतोलनेऽपि ॥ निगमार्थविरोधिमायिभिक्षुप्रकरं दिक्षु निरासितुं मनोऽधात् ॥ ९ ॥ स्वगुणालिनुतिश्रुतौ ह्रियेषन्मुखपद्मानमनेऽपि न प्रगल्भा ॥ प्रतिसन्ध्यमियेष राघवाय प्रणतीः कर्तुमसौ सहस्रकृत्वः ॥ १० ॥ प्रकटश्रमभाक् प्रियाय

---

नियमनेऽपीत्यर्थः । गलितादरा आदररहितापि तादृक् निरुपमं जगदेकगुरुत्वं एत्य स्वयं प्राप्य सतां असतां च रक्षणशिक्षणयोः उत्सुका आसीत् । साधून् रक्षितुं असाधून् शिक्षयितुमियेषेत्यर्थः ॥ ५ ॥ **निजेति** । तन्वी सा निजाः कर्मकर्यः दास्यः 'दासी कर्मकरी चेटी' इत्यमरः । ताः नियोगवाण्याः एवं कुरुत इति शासनरूपवचनेन स्ववशीकर्तुं अपेशला अदक्षापि च 'चारौ दक्षे च पेशलः' इत्यमरः । अखिलार्हतः समस्तपण्डितान् बहुशास्त्रचर्चिकाभिः गोष्ठीभिः स्वविधेयान् विधातुं चकमे कामयते स्म । कमु कान्तावित्यस्मात्कर्तरि लट् ॥ ६ ॥ **रहसीति** । सा रहसि क्षणं क्षणपरिमितकालम् । अत्यन्तसंयोगे द्वितीया । बन्धूनां समूहो बन्धुता । 'ग्रामजने'त्यादिना समूहार्थे तल् । आत्मनः बन्धुतया उक्तायाः प्रियवार्तायाः श्रवणे अनुत्सुकापि अनन्यधीः एकाग्रबुद्धिः सती वराणि श्रेष्ठानि भागवतादिसत्पुराणानि असकृत् पुनः पुनः श्रोतुमियेष ॥ ७ ॥ **घृतेति** । सुमुखी सा घृतसूपमनोज्ञशाकपूर्वैः साधनैः । पूर्वशब्देन दध्युपदंशादीनां सङ्ग्रहः । मृदु मृष्टं अन्नं प्रभोक्तुं अपारणी असमर्थापि केवलं ईशस्य हरेः पदार्पितैः तुलसीदलैः साधनैः तदन्नं अत्तुं भोक्तुं अमानीत् मनुते स्म ॥ ८ ॥ **अलसेति** । सा गङ्गाम्बा सनीडः समीपदेशः । 'सदेशाभ्याससविधसमर्यादाः सनीडवत्' । इति समीपपर्यायेष्वमरः । तस्मिन् यः सर्पिषो घृतस्य कलशः स्वसमीपस्थाज्यपूर्णकलशः । 'घृतमाज्यं हविः सर्पिः' इत्यमरः । तस्मिन् आपतति आगच्छतीत्यापतितस्य बिडालस्य मार्जारस्य तोलने निष्कासनेऽप्यलसा किल । किलेति वाक्यालङ्कारे । निगमार्थानां वेदार्थानां विरोधिनः अन्यथाप्रतिपादकत्वेन शत्रवः तेषां मायिभिक्षूणां प्रकरं समूहं दिक्षु निरासितुं शास्त्रवादेन विजित्य निष्कासयितुं मनः अधात् ऐच्छदित्यर्थः ॥ ९ ॥ **स्वेति** । असौ गङ्गाम्बा स्वगुणानां कर्मभूतानां आलीनां सखीनां कर्त्रीणां या नुतिः स्तोत्रं तस्याःश्रुतौ सखीजनकृतस्वगुणस्तुतिश्रवणे इत्यर्थः । ह्रिया लज्जया ईषत् किञ्चित् मुखपद्मानमने मुखपद्मस्य आनमने स्ववक्त्रनमनविषयेऽपि न प्रगल्भा असमर्थापि । नञ्शब्दस्य सुपसुपेति समासः । निजगुणप्रशंसायां लज्जया मुखानमनं उत्तमनायिकालक्षणम् । यथा निमित्तनिदाने "भूयो भर्तृगुणांस्तौति ह्रीणाति स्वगुणस्तुतौ" इति । प्रतिसन्ध्यं सन्ध्यासु सन्ध्यासु इति प्रतिसन्ध्यम् । विभक्त्यर्थेऽव्ययीभावः । सन्ध्याकालेषु राघवाय रामाय सहस्रकृत्वः सहस्रवारम् । 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' इति कृत्वसुच् । प्रणतीः नमस्कारान् कर्तुमियेष इच्छामकरोत् ॥ १० ॥ **प्रकटेति** । वधूटिकामतल्ली वधूश्रेष्ठा गङ्गाम्बा । 'वधूटी वेकटी तल्ली' इति वधूपर्यायेषु सज्जनः । प्रियाय भर्त्रे वीटीपुटस्य ताम्बूलपर्णपुटस्य

वीटीपुटदानेऽपि वधूटिकामतल्ली ॥ अमितं तनुते स्म वैष्णवेभ्यो द्रविणौघं करुणावती प्रदातुम् ॥ ११ ॥ कलितालिकराब्जमप्रगल्भा स्वगृहोद्यानतलाटने तु सुभ्रूः ॥ अभवद्बदरीपदादिपुण्यस्थलयात्रोत्सुकिनी हरिं वहन्ती ॥ १२ ॥ अथ पुंसवनाद्यमग्रजातिप्रवरोऽसौ प्रमदामणेरशेषम् ॥ विधिवद्विदधे सुकर्म तादृङ्महितोत्साहमनोरथानुरूपम् ॥ १३ ॥ प्रसवाभिमुखीं परिश्रमाढ्यामवलोक्यात्मवधूमपूर्वकान्तिम् ॥ अविता जगतामसौ मम द्राक् भविता सूनुरिति द्विजोऽभ्यनन्दत् ॥ १४ ॥ शुभदग्रहतारयोगरम्ये दिवसेऽथ द्विजवर्यवल्लभा सा ॥ सुषुवे तनयं सुधामयूखं दिगिवामर्त्यपतेः सतां हिताय ॥ १५ ॥

---

दानेऽपि प्रकटं श्रमं भजतीति प्रकटश्रमभाक् करुणावती दयालुः वैष्णवेभ्योऽमितं द्रविणौघं प्रदातुं मनुते स्म इच्छति स्म ॥ ११ ॥ कलितेति । सुभ्रूः गङ्गाम्बा कलितं गृहीतं आल्याः कराब्जं यस्मिन् कर्मणि तद्यथा भवति तथा । स्वकरेण सखीकरमवलम्ब्येत्यर्थः । स्वगृहे यदुद्यानं तत्तलाटने संचरणे अप्रगल्भा असमर्थापि हरिं वहन्ती मूलरघुनाथवेदव्यासप्रतिमाः स्वभुजेन धारयन्तीत्यर्थः । बदरीपदादीनां बदरिकाश्रमादीनां पुण्यस्थलानां यात्रासु आदरणी आदरवती अभवत् ॥ १२ ॥ अथेति । अथ कामनानुभवानन्तरं अग्रजातिप्रवरः आनन्दाचार्यः प्रमदामणेः प्रियायाः तादृशःनिरुपमस्य महितस्य अतिमात्रस्य उत्साहस्य च मनोरथस्य संकल्पस्य च अनुरूपं पुमान् सूयते अनेन इति पुंसवनं तदाद्यं अशेषं सुकर्म विधिवत् यथाशास्त्रं विदधे कृतवान् । अत्र आद्यशब्देन अनवलोमनसीमन्तोन्नयनयोः संग्रहः । अत्र मासि द्वितीये तृतीये वा पुंसवनम् । यदाह 'पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात्' इति पारस्करः । 'चतुर्थे मासि अनवलोमनम्' इत्याश्वलायनः । 'षष्ठेऽष्टमे वा सीमन्तः' इति याज्ञवल्क्यः ॥१३॥ प्रसवेति । असौ द्विजः प्रसवस्य गर्भमोचनस्य अभिमुखीं आसन्नप्रसवामित्यर्थः । स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने ।' इत्यमरः । अत एव परिश्रमाढ्यां अपूर्वकान्तिं गर्भस्थशिशुमाहिम्नेतिभावः । आत्मवधूं अवलोक्य जगतां अविता ज्ञानोपदेशादिना जगद्रक्षकः मम सूनुः द्राक् शीघ्रं भविता भविष्यतीत्येवं मत्वेति शेषः । अभ्यनन्दत् । तदसाधारणकान्तिमत्त्वान्यथानुपपत्त्या शिशोर्महानुभावत्वमुप्रेक्ष्य ननन्देत्यर्थः ॥ १४ ॥ शुभेति । अथ सीमन्तादिविधेरनन्तरं सा द्विजवर्यवल्लभा प्रिया शुभानि भाग्यानि ददतीति शुभदाः ग्रहाः सूर्यादयः तेषां राशिभिः मेषादिभिः साकं योगः उच्चगत्वं तेन रम्ये दिवसे तनयं पुत्रं सतां जनानां हिताय अमर्त्यपतेः इन्द्रस्य दिक् प्राची सुधामयूखं सुधांशुं चन्द्रमिव सुषुवे । षूङ् प्राणिप्रसवे इत्यस्माल्लिट् । चन्द्रपक्षे सतां नक्षत्राणां हितायेति । 'भवान्यां तु सती स्त्री स्यान्नक्षत्रे तु नपुंसकम् ।' इति शेषकारः । अत्र ग्रहाणामुच्चत्वं नाम "अजवृषभमृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादितुङ्गाः ॥ दशशिखिमुनियुक्तिथीन्द्रियांशैस्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः ॥" इति । अत्र यथायोग्यं केचिच्छुभग्रहा उच्चस्था इति अनुसन्धेयम् । यस्य जन्मकाले ग्रहा उच्चस्थाः स श्रीमान् भवति तदुक्तं 'ये सुखिनः प्रकृष्टकार्या राजप्रतिरूपकाश्च राजानः । एकद्वित्रिचतुर्भिर्जायन्तेऽतः परं दिव्या इति ॥ १५ ॥

शिशुरेष मुखानि मायिविद्वज्जनदुष्कीर्तिमलीमसान्यलं वः ॥ स्वयशःसुधयाभिषिच्य कर्ता विशदानीति दिशो दधुः प्रसादम् ॥१६॥ मम मध्वतनोर्मतप्रकाशं पृथुकोऽसौ तनितातरां भुवीति ॥ प्रमदोत्करधूर्वहप्रतोल्यां मरुदाधत्त पदानि मन्दमन्दम् ॥१७॥ अतितृप्तिमपूपसूपसर्पिःप्रचुरान्नैरुदराश्रितः सतां मे ॥ शिशुरेष करिष्यतीति हर्षात् प्रननर्त ज्वलनः प्रदक्षिणार्चिः ॥१८॥ तनयोदयशंसिने तदानीं पुरुषाय द्विजपुंगवः स हर्षात् ॥ द्रविणाभरणाम्बरादि दत्वाप्यमतात्मानममुष्य चाधमर्णम् ॥ १९ ॥ तनुजातमहोदये द्विजन्मप्रवरोऽसौ परितः

---

तदानीं दिक्प्रसादादिशुभनिमित्तान्याह शिशुरिति । एषः जातः शिशुः मायिविद्वज्जनानां दुष्कीर्तिभिः जगन्मिथ्यात्वादिवेदविरुद्धपक्षावलम्बनोत्थैः अयशोभिः मलीमसानि मलिनानि । 'मलीमसं तु मलिनं कच्चरं मलदूषितम् ।' इत्यमरः । वः अस्माकं मुखानि पुरोभागान् स्वस्य यशःसुधया अभिषिच्य प्रक्षाल्य अलं अत्यन्तं धवलानि स्वच्छानि कर्ता करिष्यति । भविष्यदनद्यतने लुट् । इति मत्वेवेत्युत्प्रेक्षा । व्यञ्जकाप्रयोगाद् गम्या । दिशः कर्त्र्यः प्रसादं दधुः प्रसेदुः ॥ १६॥ ममेति । असौ पृथुकः अर्भकः 'पृथुकौ चिपटार्भकौ' इत्यमरः । भुवि मध्वतनोः श्रीमदानन्दतीर्थरूपस्य मतप्रकाशं द्वैतसिद्धान्तप्रसिद्धिं तनितातरां अतिशयेन तनिष्यति । तनोतेर्लुट् । द्विवचनविभज्येत्यादिना अतिशयार्थे तरपि किमेत्तिङव्ययेत्यादिना आमुप्रत्ययः । इति मत्वेति शेषः । मरुत् वायुः प्रमदोत्करस्य हर्षराशेः धूर्वहः सन् प्रतोल्यां पुरवीथ्यां 'रथ्या प्रतोली विशिखा' इत्यमरः । पदानि पादन्यासान् मन्दं मन्दं अत्यन्तमन्दं आधत्त धूर्वहत्वादितिभावः । मन्दवायुर्वाति स्मेत्यर्थः । अत्र वायोः शुभसूचकस्वाभाविकमान्द्यस्य स्वमतप्रकाशकशिशुजनजनितहर्षातिशयहेतुकत्वेनोत्प्रेक्षणादुत्प्रेक्षा पूर्ववद्गम्या । सा च भूतवायोः स्वाभिमानिमुख्यप्राणेन सह भेदेऽप्यभेदोक्तिरूपयातिशयोक्त्या संकीर्यते इति परस्परसापेक्षत्वादुत्प्रेक्षातिशयोक्त्योः नीरक्षीरवत्संकरः । 'प्रकृतस्याप्रकृतत्वेनाध्यवसायो गुणादिसंबन्धात् । यत्र यदि साध्यते स्यादुत्प्रेक्षा सेति कथ्यते तज्ज्ञैः ॥ सिद्धादध्यवसायात्प्रकृतस्यान्यत्वकल्पनं चेत्स्यात् । यत्र कविप्रौढोक्त्या स भवत्ययमित्यतिशयोक्तिरलंकारः ॥ नीरक्षीरन्यायादन्योन्यमिश्रणात्तेषाम् । यत्रालंकाराणां संकरमाहुस्तमेष च त्रिविधः ॥' इति लक्षणानि यथाक्रमं योजनीयानि ॥ १७ ॥ अतीति । एषः शिशुः सतां उदरं श्रयते इति उदराश्रित् । श्रयतेः क्विप् । तस्य मे मम अपूपसूपसर्पिःप्रचुरैः भक्ष्यभोज्यबहुलैः अन्नैः साधनैः अतितृप्तिं अत्यन्तं सौहित्यं 'सौहित्यं तर्पणं तृप्तिः' इत्यमरः । करिष्यति सज्जनैर्भृष्टान्नं भक्षयिष्यतीत्यर्थः । इति मत्वेति शेषः । हर्षात् ज्वलनोऽग्निः प्रदक्षिणार्चिः प्रदक्षिणाकारज्वालः सन् प्रननर्त यज्ञवेदिषु प्रजज्वालेत्यर्थः । मत्वेवेति गम्योत्प्रेक्षा । सा च वैतानिकजाठरयोरग्न्योः भेदेप्यभेदोक्तिरूपातिशयोक्त्या पूर्ववत्संकीर्यते ॥ १८ ॥ तनयेति । द्विजपुङ्गवो द्विजश्रेष्ठः स आनन्दाचार्यः तदानीं तस्मिन् समये तनयोदयं पुत्रोत्पत्तिं शंसतीति शंसी तस्मै पुरुषाय कस्मैचित् हर्षात् द्रविणाभरणाम्बरादि दत्वापि आत्मानं स्वं अमुष्य पुरुषस्य अधमर्णं ऋणग्राहकं अमत मनुते स्म । तादृक्शुभवार्ताकथनस्य स्वदत्तमननुरूपमूल्यमिति ज्ञातवानित्यर्थः । 'उत्तमर्णाधमर्णौ द्वौ प्रयोक्तृग्राहकौ क्रमात्' इत्यमरः ॥ १९॥ तदन्विति । असौ द्विजन्मप्रवरः तदानीं तनुजातस्य पुत्रस्य महति उदये अभ्युदये परितः

**पुरादुपेतान् ॥ धरणीविबुधान् धनैस्तदानीं विदधे नन्दथुनीरधौ निमग्नान् ॥ २० ॥ कृतमङ्गलमज्जनः स भूमीसुरराट् धौततराम्बरं दधानः ॥ समलोकयदात्मजातमग्रे वरपर्यङ्कशयं मनोज्ञरूपम् ॥ २१ ॥ बहुवैष्णवलोकरक्षणाख्यक्रतुदीक्षाविधियोग्यतां स्वकीयाम् ॥ विवरीतुमिव स्वपाणिपङ्केरुहयुग्मे कृतचारुमुष्टिबन्धम् ॥ २२ ॥ विदुषो भुवि मायिनः सुधार्थैर्वचनैस्तर्कयुतैर्विजित्य वादे ॥ हृदि ताडयितास्मि चेत्थमित्युल्ललता पादयुगेन सूचयन्तम् ॥२३॥ शतपत्रदलत्रपादनेत्रं श्रितपत्त्राणलसच्चरित्रपत्रम् ॥ खगपत्रदयातनुत्रगात्रं सविचित्रं सपवि-**

---

समन्तात् पुरात् पुण्यस्तम्भात् उपेतान् स्वगृहं प्रत्यागतान् धरणीविबुधान् भूसुरान् धनैः धनदानैः नन्दथुनीरधौ आनन्दसमुद्रे निमग्नान् विदधे हृष्टांश्चकारेत्यर्थः । 'स्यादानन्दथुरानन्दः' इत्यमरः । पुत्रजन्मदिनस्य पुण्यत्वाद्दानप्राशस्त्यम् । यथाहज्योतिः । 'जाते कुमारे पुण्यं तदहः पितॄणां तन्महोदयः' इति । अत्र महोदयो नाम अलभ्ययोगविशेषः । तत्र धनं दत्त्वा ब्राह्मणैः समुद्रस्नानमकारयदिति ध्वनिः । 'अलभ्ययोगेषु तथा सिन्धुस्नानं प्रशस्यते' इति शास्त्रात् ॥२०॥ **कृतेति** स भूमिसुरराट् द्विजराजः कृतमङ्गलमज्जनः कृतमङ्गलस्नानः धौतवराम्बरे धौतवस्त्रद्वयं दधानः वसानः सन् वरपर्यङ्के श्रेष्ठशयने शेते इति शयं मनोज्ञरूपं हृद्याकृतिं आत्मजातं कुमारं अग्रे पुरस्तात् समलोकयत् ददर्श ॥ २१ ॥ तमेव त्रिभिः विशिनष्टि **बह्विति** । स्वकीयां स्वसंबन्धिनीं बहूनां वैष्णवानां लोकस्य रक्षणं परिपालनमित्याख्या यस्य तस्य क्रतोः रक्षणरूपयज्ञस्य यो दीक्षाविधिः तस्य योग्यतां विवरितुं प्रकटीकर्तुमिवेत्युत्प्रेक्षा । स्वपाणिपङ्केरुहयुग्मे कृतः चारुमुष्टिबन्धो येन तं तथोक्तम् पाण्योर्मुष्टिबन्धनं शिशूनां स्वाभाविकं तदेव भाविव्यवैष्णवरक्षणक्रतोर्दीक्षाङ्गत्वेनोत्प्रेक्षितवान् । मुष्टिबन्धस्य दीक्षाङ्गत्वे 'कृष्णाजिनेन वेष्टयत्यथौदुम्बरं दण्डं यजमानस्य प्रयच्छत्यसौ मुष्टिं बध्नाति ।' इति विधानात् ॥ २२ ॥ **विदुष इति** । भुवि मायिनः मायावादिनः विदुषः पण्डितान् सुधा नाम जयतीर्थयोगिकृतानुव्याख्यानटीकाग्रन्थविशेषः । तदर्थैः तद्वाक्यानुगतैः अत एव तर्कयुतैः युक्तियुतैः वचनैः वादे विजित्य हृदि तेषां वक्षसि 'हृद्वक्षसि च मानसे' इति सज्जनः । इत्थं एवं प्रकारेण ताडयितास्मि ताडयिष्यामीत्यर्थः । ताडयतेर्लुट् । इत्येवं उल्लुलता चञ्चचलेन पादयुगेन सूचयन्तम् । अत्र शिशुस्वाभाविकपादोत्क्षेपणक्रियायाः प्रतिवादिवक्षस्ताडनानुकरणसूचनात्वेनोत्प्रेक्षणात्क्रियानिमित्तोत्प्रेक्षा । सा च व्यञ्जकाप्रयोगाद् गम्या । सा च स्वभावोक्तिरनुप्राणितेति संग्रहः ॥ २३ ॥ **शतेति** । शतपत्रं कुशेशयम् 'शतपत्रं कुशेशयम्' इत्यमरः । तस्य दलेभ्यः उपमानेभ्यः त्रपां दत्त इति त्रपादे ततोऽप्यधिकचारुत्वाल्लज्जाप्रदे नेत्रे यस्य स तथोक्तः तम् । श्रितः पद् अङ्घ्रिः यैस्ते श्रितपदः 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः । तेषां स्वपदाश्रितानां त्राणेन रक्षणेन लसतः शोभमानस्य चरित्रस्य पात्रं योग्यम् । 'योग्यभाजनयोः पात्रम्' इमत्यमरः । खगः पक्षी गरुडः स एव पत्रं वाहनं यस्य सः 'पत्रं वाहनपक्षयोः' इत्यमरः । स खगपत्रो हरिः तस्य दयैव तनुत्रं कवचं यस्य तत् गात्रं शरीरं यस्य स तथोक्तः । तं हरिं कृपारक्षितशरीरमित्यर्थः । पवित्रितं आत्मनो गात्रं शरीरं येन तं आत्मजातं स आनन्दाचार्यः सविचित्रं आश्चर्यसहितं यथा भवति तथा समलोकयदितिश्लोकत्रयस्य पूर्वेण संबन्धः । त्रवर्णस्यासकृदावृत्त्या वृत्त्यनुप्रासः शब्दालंकारः । 'एकद्वित्रिप्रभृतीनां पुनरुक्तिर्हियत्र वर्णानाम् । संख्यानियमाभावे भवेदयं वृत्त्यनुप्रासः॥' इति

त्रितात्ममात्रम् ॥ २४ ॥ तनयाननमादरेण दृग्भ्यां पिबतोऽम्भोजमनोहरं द्विजातेः ॥ परितः पुलकाङ्कुरापदेशाद्बहिरन्तः प्रमदोत्करा निरीयुः ॥ २५ ॥ प्रमदागतपौरलोकवाञ्छा कलनप्रोद्यदनूनवैभवर्धिः ॥ विधिवद्धरणीसुपर्वनेता विदधेऽसौ तनयस्य जातकर्म ॥ २६ ॥ नृहरेरनुकम्पयैव लब्धं जनतामान्यमसद्घटामृगेन्द्रम् ॥ स विचिन्त्य कृती ततोऽर्थवत्या विदधे नन्दनमाख्यया नृसिंहम् ॥ २७ ॥ अधिरोप्य च दोलिकां विचित्राम्बरमाल्यामथ बालकं शुभंयौ ॥ दिवसे परिषत्सुवासिनीनामतिमाधुर्यमगायदुत्सवेन ॥ २८ ॥ कृतहूतिगिरां प्रसार्य हस्तौ सुदृशामङ्कमगात्सुतो यदङ्कात् ॥ तदसूचयदाश्रमे तुरीये बहुतीर्थाचरणैर्निजा-

---

लक्षणात् ॥ २४ ॥ **तनयेति** । अम्भोजमनोहरं कमलवत् चारु तनयस्य आननं आदरेण दृग्भ्यां पिबतः सानुरागं पश्यत इत्यर्थः। द्विजातेः द्विजस्य परितः समन्तात् पुलकाङ्कुराणां रोमाञ्चप्ररोहाणां अपदेशात् व्याजात् 'व्याजोऽपदेशं लक्ष्यं च' इत्यमरः । प्रमदोत्कराः संतोषराशयः अन्तः हृदयात् बहिः निरीयुः निरगुः । अत्र पुलकाङ्कुरानपह्नुत्य संतोषाङ्कुरत्वारोपणस्यापदेशः अपदेशपदेन निर्दिष्टत्वादपह्नवालंकारः । 'निषिध्यारोपविषयमन्यदारोपयेद्यदि । यत्र साम्येन विद्वद्भिः कथितोऽयमपह्नवः ॥' इति लक्षणात् ॥ २५ ॥ **प्रमदेति** । प्रमदेन हर्षेण आगतपौरलोकस्य पुरजनस्य या वाञ्छा तस्या आकलने वाञ्छितार्थप्रदत्वविषये इत्यर्थः। प्रोद्यन्ती प्रोद्युक्ता अनूनवैभवर्धि अधिकसंपत्समृद्धिः यस्य सः तथोक्तः । धरणीसुपर्वाणां भूसुराणां नेता श्रेष्ठः असौ आनन्दाचार्यः तनयस्य जातकर्म विधिवत् विदधे कृतवान् । नान्दीश्राद्धानन्तरं करणीयं जातकर्मविधिं कृत्वा दानादिकं चकारेत्यर्थः। तथा च कारिकायाम् 'जाते सुतेऽवगाह्यापः श्राद्धं कृत्वा विधानतः। जातकर्मविधानेन कुर्याद्दानादिकं ततः ॥' इति ॥२६॥ **नृहरेति**। ततो जातकर्मानन्तरं कृती शब्दार्थकुशलः स द्विजः नृहरेः नृसिंहस्य अनुकम्पयैव नान्यसाधनैरिति भावः। लब्धं प्राप्तं जनसमूहेषु मान्यं पूज्यम्। असन्तः दुर्जना एव घटा गजसमूहः तस्या मृगेन्द्रं सिंहं तन्निरासकमित्यर्थः । 'करिणां घटना घटा' इत्यमरः । नन्दनं पुत्रं विचार्य उक्तगुणत्रयविशिष्टं विचिन्त्य अर्थवत्या अन्वर्थया आख्यया नाम्ना नृसिंहं व्यतनोत्। नृसिंहकृपालब्धत्वात् नृषु सिंहत्वात् श्रेष्ठत्वात् नृणामसत्पुरुषाणां सिंहत्वाच्च नृसिंह इति नाम चकारेत्यर्थः । अत्र मनुः 'नामधेयं दशम्यां तु द्वादश्यां वापि कारयेत्' इति ॥ २७ ॥ **अधीति** अथ नामकरणानन्तरं सुवासिन्यः पितृभर्तृमत्यः स्त्रियः 'पितृभर्तृमती या तु सा चिरण्टा सुवासिनी।' इति प्रतापः। तासां परिषत् सभा समूहः 'आस्थानंच सदःस्थानी परिषद्परिषदौ समौ।' इति सभापर्यायेषु रभसः। शुभंयौ शुभान्विते दिवसे विचित्राम्बरमाल्यां नानाविधांशुकमालिकालंकृतां डोलिकां दोलां बालं शिशुं अधिरोप्य उत्सवेन हर्षेण अतिमाधुर्येण यथा भवति तथा अगायत् जगौ । लौकिकोऽयं पन्थाः न स्मार्तः ॥ २८ ॥ **कृतेति** । सुतः कुमारः हस्तौ प्रसार्य कृतहूतिगिरां अत्रागच्छेति कृताह्वानवाचां सुदृशां स्त्रीणां अङ्कात् समीपात् अङ्क समीपं अगात् उत्साङ्गादुत्सङ्ग वा । 'समीपोत्सङ्गयोरङ्कः' इति विश्वः । इति यत् अङ्कादङ्कगमनं अमुना सुतेन तुरीये आश्रमे भाविसंन्यासाश्रमे बहुतीर्थाचरणैः अनेकतीर्थयात्राभिः निजानवस्था कचिद्ग्रामे चिरकालमवस्थानराहित्यं असूचि । इत्थं ग्रामाद् ग्राममटिष्यमीति सूचितमित्यर्थः । यथा भागवते 'कल्पस्त्वेवं परिव्रज्य देहमात्रावशेषितः । ग्रामैकरात्रविधिना निरपेक्ष्यश्चरेन्महीम् ॥' इति। अत्र बालस्वाभा-

नवस्था ॥ २९ ॥ आधिरोहति देहलीं कुमारप्रवरेस्मिन्करजानुचङ्क्रमेण ॥ हृदयादवरोहति स्म चित्रं निखिलाद्वैतिततेर्मताभिमानः ॥३०॥ अवलम्ब्य कराङ्गुलिं स धात्र्याः समभाद् वक्रपदक्रमो धरित्र्याम् । धृतराम्भकरः कचङ्गलायामटितास्म्येवमिति प्रसूचयन्वा ॥ ३१ ॥ अथ भाविवयःस्फुटीभविष्यन्निजसौशील्यगुणानुरूपमेव ॥ बहुमानपदानि बालभावेऽप्यभवन्नित्थममुष्य चेष्टितानि ॥ ३२ ॥ हरिरित्युपलं निधाय पीठे तुलसीपत्रपयःकृतोपचारः ॥ नतिपूर्वमसौ मुदा तदग्रे सवयोभिः सह ताण्डवानि तेने ॥ ३३ ॥ गुरुरस्म्यहमेव वोऽखिलानामिति जल्पन्सवयःकुमारवर्गम् ॥ उपवेश्य पुरः किमप्युदारं कलभाषी कलयाञ्चकार शास्त्रम् ॥ ३४ ॥ सवयोभिरधिप्रतोलि बालो विहरन् रेणुषु मायिनां कुमारान् ॥ निरकासयदागता-

---

विकप्रत्यङ्घाटनस्य भविष्यत्तुरीयाश्रमाविध्युक्तभूसंचारसूचनात्वेनोत्प्रेक्षणादुत्प्रेक्षालंकारः ॥ २९ ॥ **अधीति** । अस्मिन् कुमारप्रवरे करजानुचङ्क्रमेण करजानुसाध्येन संचारेण देहलीनाम ग्रहद्वारशाखा ‘ गृहावग्रहणी देहल्यङ्गनं चत्वराजिरे । ’ इत्यमरः । तां अधिरोहति सति निखिलानां अद्वैतिनां ततेः समूहस्य हृदयात् मताभिमानः अद्वैताभिनिवेशः अवरोहति स्म क्षीणोऽभूदित्यर्थः । चित्रं वैयधिकरण्यवत्योरारोहणावरोहणक्रिययोर्यौगपद्यं आश्चर्यम् । बालोपचय एव द्वैतमतापचय हेतुरासीदिति भावः । अत्र क्रियाद्वयस्य यौगपद्यासंबन्धेऽपि तत्संबन्धोक्तेरतिशयोक्तिः ॥ ३० ॥ **अवलम्ब्येति** । धात्री उपमाता ‘ धात्री स्यादुपमातापि क्षितिरप्यामलक्यपि । ’ इत्यमरः । तस्याः करस्य अङ्गुलिं तर्जन्याख्यां अवलम्ब्य स्वकरेण गृहीत्वा धरित्र्यां भुवि वक्रपदक्रमः पादन्यासो यस्य स तथोक्तः स बालः राम्भो वेणुदण्डः । अहमिति शेषः । कचङ्गलानाम जन्तुप्रायाभूमिः । ‘ नारदा स्फुटिता भूमिर्जन्तुप्राया कचङ्गला । ’ इति शाश्वतः । तस्यामेवं वक्रपदक्रमत्वेन अटितास्मि अटिष्यामि । जन्तुहिंसादोषभयादिति भावः । इत्येवं प्रसूचयन् वा सूचयन्निव ‘ इव वद्वा यथा शब्दाः ’ इति दण्डी । समभात् भाति स्म । स्वभावोक्त्यानुप्राणितेयमुत्प्रेक्षा ॥ ३१ ॥ **अथेति** । अथ अनन्तरं भाविनि भविष्यति वयसि यौवने स्फुटीभविष्यतां निजानां सुशीलस्य भावः सौशील्यं तस्य च गुणानां हरिभक्त्यादीनां च अनुरूपं अनुगुणमेव बालस्वभावेऽपि बहुमानपदानि सतां बहुमानास्पदानि अमुष्य बालस्य चेष्टितानि कृत्यानि इत्थं वक्ष्यमाणप्रकारेण अभवन् ॥ ३२ ॥ तान्येव पञ्चभिराचष्टे । **हरिरिति** । असौ बालः उपलं शिलाशकलं हरिरिति परमात्मेति पीठे निधाय तुलसीपत्रदलैः पयोभिश्च कृतोपचारः सन् समानं वयो येषां ते सवयसः । ‘ज्योतिर्जनपदे’ त्यादिना समानस्य सः । तैः सवयोभिः सुहृद्बालकैः सह नतिपूर्वं प्रणामपुरःसरं तस्य हरित्वेन भावितस्योपलस्य अग्रे मुदा ताण्डवानि तेने ॥ ३३ ॥ **गुरुरिति** । कलं अव्यक्तमधुरं भाषते इतिकलभाषी बालकः अखिलानां वः युष्माकं अहं गुरुः उपदेष्टास्मि इत्येवं जल्पन् सवयःकुमाराणां वर्गं पुरः स्वाग्रभागे उपवेश्य उदारं अतिमात्रं किमप्यव्यक्ताक्षरत्वाद्विलक्षणं शास्त्रं स्वेन शास्त्रत्वेनैव मन्यमानं शब्दमात्रं कलयांचकार अध्यापयामासेत्यर्थः ॥ ३४ ॥ **सवयोभिरिति** । सवयोभिः सह प्रतोल्यां अधिप्रतोलि रेणुषु विहरन् गृहनिर्माणादिभिः क्रीडमानः बालः आगतान् विजिहीर्षया समीपमुपेतान् मायिनां कुमारान् सहासं यथा भवति तथा मूर्धनि मुष्टिकुट्टनानि कलयन् कुर्वन् निरकासयत्

न्सहासं कलयन्मूर्धनि मुष्टिकुट्टनानि ॥ ३५ ॥ उपगोदमितः समं जनित्र्या वरपौराणिकवक्त्रतो मुरारेः ॥ कलयन्सुचिरं कथाः स नैच्छत्प्रतिगन्तुं सदनं बुभुक्षितोऽपि ॥ ३६ ॥ यतिराडहमत्र यूयमात्मप्रियशिष्या इति बालकान्स जल्पन् ॥ प्रणतान्पदयोर्जगाद नारायणरामेत्यभिरामहासपूर्वम् ॥ ३७ ॥ इति तं विहरन्तमात्मजातं स कदाचित्धरणीसुपर्वचर्यः ॥ प्रमदेन ददर्श पक्वबिम्बाधरचञ्चद्दरहासभासुरास्यम् ॥ ३८ ॥ मणिकुण्डलचाकचक्यराजत्पृथुगण्डस्थलयुग्ममुच्चनासम् ॥ कुटिलालकभृङ्गसङ्गभास्वन्निटिलाग्रस्फुटचित्रिकासिताब्जम् ॥३९॥ कलधौतभुवा कराब्जयुग्मे वलयेनाविलितं च वल्गुभासा ॥ कटिलम्बितशातकुम्भकाञ्चीघटितकाणमनोज्ञकिङ्किणीकम् ॥ ४० ॥ अथ सत्वरमाकलय्य दोर्भ्यां स कुमारं सुकुमारपे-

---

निष्कासितवान् । एते हरिद्वेषिणां पुत्रा इति बुध्वेति भावः ॥ ३५ ॥ उपेति । जनित्र्या मात्रा समं गोदायाः समीपे उपगोदम् समीपार्थेऽव्ययीभावः । इतः प्राप्तः सः बालकः वरस्य पौराणिकस्य वक्त्रतः मुखात् मुरारेः कथाः भागवतादिकाः सुचिरं कलयन् शृण्वन् सन् बूभूक्षितोऽपि सदनं स्वगृहं प्रति गन्तुं नैच्छत् । हरिकथाश्रवणानुरागातिशयादितिभावः ॥ ३६ यतिराडिति । अत्रास्माकं मध्ये अहं यतिराट् अस्मि । यूयं आत्मनः प्रियाशिष्या भवथेतिशेषः । इति बालकान् जल्पन् वदन् स बालकः पदयोः प्रणतान् शिष्यत्वमङ्गीकृत्य स्वपादनम्रान् तान् प्रति नारायणरामेति अभिरामहासपूर्वं जगाद ॥ ३७ ॥ इतीति । इति उक्तरीत्या विहरन्तं पक्वं यद बिम्बं बिम्बफलं तत्कल्पे अधरोष्ठे चञ्चता प्रसर्पता दरहासेन मन्दस्मितेन भासुरं आस्यं आननं यस्य सः तथोक्तः तम् । 'दरोऽस्त्रियां भये स्वभ्रेऽप्यीषदर्थे तु वाच्यवत् ।' इति सज्जनः । भासुर इत्यत्र 'भञ्जभासे' त्यादिना घुरच् । आत्मजातं पुत्रं धरणीसुपर्ववर्यः स आनन्दाचार्यः प्रमदेन ददर्श । अधरस्य पक्वबिम्बसाम्यं च मार्दवरक्तिमत्वादिभिर्ज्ञेयम् । मृदुरक्ताधरत्वस्य सुलक्षणत्वं च यथा निनिसानिमित्तनिदाने 'यस्याधरोऽष्ठो मृदुलो रक्तवर्णो निसर्गतः । दीर्घायुः स पुमान् लोके भाग्यवान् पूज्यतेऽखिलैः ।' इति ॥३८॥ तमेव द्वाभ्यां विशिनष्टि मणीति । मणिकुण्डलयोः चाकचक्येन कान्तिविशेषेण राजत्पृथुगण्डस्थलयुग्म् । उच्चनासं उन्नतनासिकं कुटिलाः वक्राः अलकाः चूर्णकुन्तला एव भृङ्गाः तेषां संगेन भास्वता निटिलाग्रे ललाटमूले स्फुटेन व्यक्तेन चित्रकं तिलकमेव असिताब्जं इन्दीवरं तेन अभिरामं 'कालो निटालं निटिलम्' इति शाश्वतः । 'तमालपत्रतिलकचित्रकाणि विशेषकम्' । 'अथ नीलाम्बुजन्म च' 'इन्दीवरं च नीलेऽस्मिन्' इति चामरः । अत्र अलकतिलकयोः भ्रमरेन्दीवरत्वनिरूपणात् रूपकालंकारः ॥ ३९ ॥ कलधौतेति । वलगुभास रमणीयकान्त्या 'कमनीयं हारि वल्गु' इत्यमरः कलधौतेन हेम्ना उपादानकारणेन भवतीति कलधौतभूः । 'कलधौतं रौप्यहेम्नोः' इति विश्वः। तेन वलयेन कराब्जयुग्मे आवलितम् । सौवर्णकटकटकवेष्टितकरपद्मद्वयमित्यर्थः । कट्यां लम्बिता लम्बमाना या शातकुम्भस्य सुवर्णस्य काञ्ची मेखला तस्यां घटिता गुम्फिता काणेन ध्वनिना मनोज्ञा किङ्किण्यः क्षुद्रघण्टा यस्यां तं तथोक्तम् । 'शेषाद्विभाषा' इति कप्प्रत्ययः। 'भर्म रुक्मं हाटकं शातकुम्भम्' इति सुवर्णपर्यायेषु हलायुधः । श्लोकद्वये 'आत्मजातं ददर्श' इति पूर्वेणान्वयः ॥ ४० ॥ अथेति । अथ दर्शनानन्तारं स द्विजः सुकुमार

शलाङ्गम् ॥ अधिरोप्य निजाङ्कमन्तिकस्थां स्मितपूर्वं निजगाद धर्मपत्नीम् ॥ ४१ ॥ अयि सुभ्रु दयासुधाम्बुराशेर्नृहरेस्तादृगनुग्रहानुरूपम् । जनतादरणीयशीलमेतत्सुतमुक्ताफलमावयोरुदीतम् ॥ ४२ ॥ उपनीयविनीतमेनमस्मत्कुलनव्याभरणं कुशाग्रबुद्धिम् । सकलागमपारदर्शिनं द्राक् रचयिष्याम्यहमीश्वरप्रसादात् ॥ ४३ ॥ इत्यालप्य निजां प्रियां प्रकटितस्नेहः सुते भूसुरप्राग्र्योऽथ प्रमदाम्बुराशिलहरीप्रेङ्खोलितस्वान्तरः । आप्तैर्बन्धुजनैः सुहृद्भिरधिकैरालोच्य तत्रोचितं बालं शीलगुणाढ्यमेष विदधे मङ्क्षूपनेतुं मनः ॥ ४४ ॥ इति श्रीविद्याधीशविजये महकाव्ये गदयकोनेरिणा जनार्दनसूरिणा कारिते द्वितीयः सर्गः ॥२॥

---

पेशलाङ्गं मृदुचाटुगात्रं 'चारौ दक्षे च पेशलः । 'इत्यमरः । कुमारं दोर्भ्यां आकलय्य आलिङ्ग्य निजाङ्कं आधिरोप्य च वात्सल्यादिति भावः । अन्तिकस्थां धर्मपत्नीं भार्यां स्मितपूर्वं निजगाद ॥ ४१ ॥ किमाहेत्यतस्तदेव द्वाभ्यामाह **अयीति** । अयि हे सुभ्रु दयासुधाम्बुराशेः नृहरेः तादृङ् निरूपमः योऽनुग्रहः तस्यानुरूपं योग्यं अत एव जनतया आदरणीयशीलं बहुमान्यस्वभावं एतत्पुरोवर्ति सुतमुक्ताफलं पुत्रलक्षणमौक्तिकं अहं च त्वं च आवां तयोः आवयोः उदीतं उत्पन्नमभूदितिशेषः । तेनावां कृतार्थौ स्व इति भावः ॥ ४२ ॥ इतः किं कर्तव्यमित्याशङ्क्याह **उपनीयेति** । विनीतं विनयसंपन्नं अस्मत्कुलनव्याभरणं नूतनभूषणायमानं कुशाग्रबुद्धिं एनं कुमारं उपनीय उपनयनं कृत्वा अहं ईश्वरप्रसादात् न स्वातन्त्र्यादितिभावः । सकलागमपारदर्शिनं सकलशास्त्रपारद्रष्टारं द्राक् शीघ्रं रचयिष्यामि । रचयतेर्लृट् ॥ ४३ ॥ **इतीति** । इत्येवं निजप्रियां आलप्य उक्त्वा सुते प्रकटितस्नेहः भूसुरप्राग्र्यः द्विजोत्तमः एषः आनन्दाचार्यः प्रमदाम्बुराशिलहरीभिः आनन्दाब्धितरङ्गैः प्रेङ्खोलितं आन्दोलितं स्वान्तरं यस्य स तथोक्तः अत्यन्तहृष्टचित्तः सन्नित्यर्थः । प्रेङ्खोलितस्तरलितश्चलितान्दोलितौ धुते ' इत्यमरः । अथ अनन्तरं आप्तैः बन्धुजनैश्च अधिकैः ज्ञानादिश्रेष्ठैः सुहृद्भिश्च साकं तत्र समये उचितं कर्तव्यं कार्यं आलोच्य शीलगुणैः निसर्गज्ञानादिगुणैः आढ्यं पूर्णं बालं मङ्क्षु सपदि 'द्राङ्मङ्क्षु सपदि द्रुतम्' इत्यमरः। उपनेतुं उपनयनं कर्तुं मनो विदधे इच्छति स्मेत्यर्थः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं तु ' सूर्याश्वैर्मसजस्ततः सगुरवः शार्दूलविक्रीडितम् ॥ ४४ ॥ इति श्रीजनार्दनसूरिविरचितायां विद्याधीशविजयव्याख्यायां शब्दार्थदीपिकायां द्वितीयः सर्गः ॥ २ ॥



ततः समं ज्योतिषकैरुदारधीरधीतशास्त्रैरतिमात्रशोभनम् । दिनं विनिश्चित्य स ताव-दातनोदलंकृतं शिल्पिभिरात्मनो गृहम् ॥ १ ॥ प्रतिप्रतीहारनियन्त्रितांशुमत्फलाग्रसंरूढचला-म्बरध्वजम् । विचित्रलाक्षारसभक्तितोरणप्रलम्बिनव्याम्रपलाशतोरणम् ॥ २ ॥ सुधारसाले-पविधानपाण्डुरप्रधानचित्रालिनिधानभित्तिकम् । विभूषितानेकवितानमाल्यावद्वितर्दिकासीनवि-पश्चिदालिकम् ॥ ३ ॥ इतस्ततः कार्यवशत्वराचलत्सुवासिनीलोकसमाकुलान्तरम् । विशाल-शालास्रतलाधिराशितप्रभूतगोधूमयवादिधान्यकम् ॥ ४ ॥ कुमारिकालेपितगोमयस्फुरद्धराजि-

---

अथास्मिन्सर्गे कुमारोपनयनादिकं वक्ष्यमाणः कविस्तावदुपयोगित्वेन गृहवर्णनमारभते । **तत इति** । ततः सुहृदालोचनानन्तरं अधीतशास्त्रैः ज्योतिःशास्त्रविद्भिः ज्योतिषकैः दैवज्ञैः समं साकं 'सांवत्सरो ज्योतिषको दैवज्ञगणकावपि ।' इत्यमरः । अतिमात्रं शोभनं उपनयनस्यात्यन्त-प्रशस्तं दिनं निश्चित्य निर्णीय उदारधीः महामतिः 'उदारो दातृमहतोः' इत्यमरः । सः आनन्दा-चार्यः तावत् प्रथमं आत्मनः गृहं शिल्पिभिरलंकृतमातनोत् कारुभिः सुशोभितमकारयदित्यर्थः । अस्मिन्सर्गे वंशस्थवृत्तम् । 'जतौ तु वंशस्थमुदीरितं जरौ ।' इति लक्षणात् ॥ १ ॥ तद्वर्णनप्रकार-मेव श्लोकचतुर्भिराचष्टे **प्रतीति** । प्रतिप्रतीहारं प्रतिद्वारं नियन्त्रिताः बद्धाः अंशुमत्फलाः कदल्यः 'कदली वारणबुसा रम्भा मोचांशुमत्फला ।' इत्यमरः । तासामग्रेषु संरूढानि प्रक्षिप्तानि चला-म्बराणि चञ्चलांशुकवन्ति ध्वजानि ध्वजदण्डा यस्य तत्तथोक्तम् । लाक्षारसः आलक्तकरसः 'लाक्षा राक्षा जतु क्लीबे यावोऽलक्तो द्रुमामयः ।' इत्यमरः । विचित्रा द्रष्टॄणामद्भुतकरी लाक्षारसस्य भक्तिः पार्श्वद्वये शोभार्थं विरचिता पङ्क्तिका यस्य तत्तस्मिन् । तोरणे बहिर्द्वारे प्रलम्बानि ऊर्ध्वं लम्बमानानि नव्याम्रपलाशानां नूतनचूतपर्णानां तोरणानि वन्दनमालाख्यमाल्यानि यस्य तत्त-थोक्तम् । 'भवनं बभौ' इति पञ्चमश्लोकेन श्लोकत्रयस्यापि संबन्धः । 'तोरणोऽस्त्री बहिर्द्वारम्' 'माङ्गल्या तोरणोत्थिता । स्रक् सा वन्दनमाला स्यात् ।' इत्यमरः । (?) 'बुधैर्वन्दनमाला तु तोरणं परिकीर्तितम् ।' इति हलायुधः ॥ २ ॥ **सुधेति** । पुनः कीदृशं सुधा नाम लेपनद्रव्यविशेषः 'सुधालेपोऽमृतं सुधा' इत्यमरः । सुधारसस्य आलेपविधानेन लेपनकर्मणा पाण्डुराः शुभ्राः प्रधानाः चित्रालेः निधानानि स्थानभूता इत्यर्थः । भित्तयः कुड्यानि यस्य तत्तथोक्तम् । 'शेषाद्विभाषा' इति कप्प्र-त्ययः । 'आलेख्याश्चर्ययोश्चित्रम्' इत्यमरः । विभूषितासु रङ्गवल्लीरचनादिभिरलंकृतासु अनेकवितानमा-ल्यवतीषु बहुविधोल्लासमालिकायुक्तासु वितर्दिकासु वेदिकासु आसीना उपविष्टा विपश्चितां विदुषां आलिः पङ्क्तिः यस्मिन् तत्तथोक्तम् । 'अस्त्री वितानमुल्लोचः' 'स्याद्वितर्दिस्तु वेदिका' इत्यमरः ॥ ३ ॥ **इत इति** । पुनः कीदृशं इतस्ततः समन्तात् कार्यवशः कार्यायत्तत्वं 'वश आयत्ततायां च' इत्यमरः । तेन या त्वरा वेगः तया चलन्तीनां संचरन्तीनां सुवासिनीनां लोकेन जनेन समाकुलं संकुलं अन्तरं अन्तःपुरं यस्य तत्तथोक्तम् । 'लोकस्तु भुवने जने' इत्यमरः । विशालाः याः शालाः गृहैकदेशा 'शाला गृहे ततस्कन्धशालागारैकदेशयोः ।' इति विश्वः । तासां अस्रतलाः कोणप्रदेशाः तेषु अधिराशितानि राशीकृतानि प्रभूतानि बहुलानि गोधूमयवादिधान्यानि यस्मिन् तत्तथोक्तम् ॥ ४ ॥

रासङ्गतरङ्गवल्लिकम् । अखर्वलक्ष्मीपरिपूर्णमुर्वरासुपर्वमौलेर्भवनं तदा बभौ ॥ ५ ॥ तदा स तावत्तरसा समागतैर्दिगन्तरेभ्यो द्विजपुङ्गवैर्गृहे । अकारयद्धोमजपादिसत्क्रियाममन्दमाराधनमिन्दिरापतेः ॥ ६ ॥ स लक्षहोमादिकृतः स्वमन्दिरे यथेष्टमिष्टान्नभुजो द्विजन्मनः । अतोषयद्भागवतान्दिनत्रयीविभक्तभूरिद्रविणौघदक्षिणः ॥ ७ ॥ ततो दशम्यामहरीशवासरे स रेवतीशाद्यखिलग्रहानघे । शुभे मुहूर्ते सुधियां गणैर्वृतो धृतोपवीतं विधिवद्व्यधात्सुतम् ॥ ८ ॥ शिरोल्लसच्चारुशिखः स बालको निटालराजद्घसृणोर्ध्वपुण्ड्रकः । पितुर्मुदे किंशुकदण्डवानभूत्स मञ्जुमौञ्जिस्फुरितालमल्लकः ॥ ९ ॥ इतोऽहमद्यैतिपलाशदण्डभृद्भवामि भूमा विति सूचयन्निव ।

---

कुमारिकेति । कुमारिकाभिः कन्यकाभिः लेपितेन गोमयेन स्फुरत्सु प्रकाशमानेषु वरेषु श्रेष्ठेषु अजिरेषु अङ्गणेषु आसञ्जिता विन्यस्ता रङ्गवल्यः पञ्चवर्णचूर्णलेखनानि यस्मिन् तत्तथोक्तम् । 'अङ्गणं चत्वराजिरम्' इत्यमरः । अखर्वा अनल्पा 'खर्वो ह्रस्वश्च वामनः' इत्यमरः । या लक्ष्मीः शोभा 'शोभासंपत्तिपद्मासु लक्ष्मीः श्रीश्च निगद्यते ।' इति विश्वः । तया परिपूर्णं उर्वरासुपर्वमौलेः भूसुरश्रेष्ठस्य आनन्दाचार्यस्य तद्भवनं गृहं आबभौ भाति स्म । भातेर्लिट् ॥ ५ ॥ तदेति । तदा तस्मिन् महोत्सवसमये स आनन्दाचार्यः तावत् प्रथमं गृहे मन्दिरे दिगन्तरेभ्यः तरसा शीघ्रं समागतैः उपनयनमहोत्सवदर्शनाय अभ्यागतैः द्विजपुंगवैः होमजपादिसत्क्रियां वायुस्तुतिपुरश्चरणसत्कर्म अमन्दं अनल्पं इन्दिरापतेः आराधनमकारयत् । जपहोमादिकं हरिपूजात्वेन कारयामासेत्यर्थः ॥६॥ स इति । स आनन्दाचार्यः स्वमन्दिरे लक्षहोमादिकं लक्षसंख्यापरिमितहोमपूर्वम् आदिशब्देन जपसंग्रहः । कुर्वन्तीति लक्षहोमादिकृत् तान् लक्षहोमादिकृतः भागवतान् भगवद्भक्तान् यथेष्टं इष्टान्नभुजः प्रतिदिनं स्वगृहे मिष्टान्नभोजिनः द्विजन्मनो ब्राह्मणान् दिनत्रय्यां दिनत्रयेषु विभक्ता विभज्य दत्ता भूरिद्रविणौघरूपा दक्षिणा येन स तथोक्तः सन् अतोषयत् । मिष्टान्नानल्पद्रव्यदानैः तोषयामासेत्यर्थः ॥ ७ ॥ तत इति । ततो ब्राह्मणतोषणानन्तरं दशम्यां तिथौ अहरीशवासरे भानुवासरे रेवतीशाद्यखिलग्रहैश्चन्द्रादिसमस्तनवग्रहैः अनघे निर्दोषे शुभे मुहूर्ते स आनन्दाचार्यः सुधियां गणैर्वृतः सन् सुतं विधिवत् शास्त्रोक्तप्रकारेण धृतोपवीतं यज्ञोपवीतधारिणं व्यधात् । अत्र विधिवदित्यनेन मात्रासह भोजनादीनां संग्रहः । तथा स्मृत्यर्थसारे । 'समाप्य मात्रा सह भोजनं च बहिर्विदध्याद्वपनाभिषेकम् ॥ अलंकृतो लग्नपरिग्रहस्यान्मुखं निरीक्षेत परस्परं च ।' इत्यादि ॥ ८ ॥ शिर इति । शिरसि लसन्ती चारु शिखा यस्य स तथोक्तः । 'निटालो ललाटम् । फालो निटालनिटिलः' इति शाश्वतः । तस्मिन् राजत् घसृणस्य कुङ्कुमस्य ऊर्ध्वं पुण्ड्रकं यस्य स तथोक्तः । कुङ्कुमचूर्णकृतोर्ध्वपुण्ड्रकः इत्यर्थः । 'प्रियङ्गु घसृणं वर्णं, इति कुङ्कुमपर्यायेषु शाश्वतः । किंशुकस्य पलाशस्य दण्डः अस्य अस्ति इति किंशुकदण्डवान् 'तेषां दण्डः पालाशः ब्राह्मणस्य' इत्याश्वलायनोक्तेः । मञ्जुः मनोहरः मौञ्जिः यस्य सः मञ्जुमौञ्जिः । तेषां मौञ्जिमेखला ब्राह्मणस्य इति तस्यैवोक्तेः । स्फुरितं प्रकाशितं अलमल्लकं कौपीनं यस्य स स्फुरितालमल्लकः । 'कौपिनमलमल्लकम्' इति शाश्वतः । बालकः पितुः स्वजनकस्य मुदे हर्षाय अभूत् मुदं जनयामासेत्यर्थः ॥ ९ ॥ अस्य पलाशदण्डधारणमुत्प्रेक्षते । इत इति । इतोऽद्यप्रभृति अहं भूमौ पलं मासं अश्नन्ति इति

गुरूदितादेशकरोऽयमर्भकः पलाशदण्डं समधत्त पाणिना ॥ १० ॥ प्रदेहि भिक्षां भवतीत्युदीरिणे गुरुस्त्रियो राजतपात्रपाणये । मुदा ददुर्मौक्तिकशुभ्रतण्डुलप्रशस्तभैक्ष्यं बटवे प्रसूमुखाः ॥ ११ ॥ पुरोहितोक्त्या तदनुक्रमाद्धरेः प्रणामपूर्वं पुरतः कृतानतिम् । तमन्वगृह्णात् परिषत्सतां मुदा कुमारमाशीभिरमोघवाक्तदा ॥ १२ ॥ महोत्सवे तत्र महिष्ठपोलिकाद्यपूपसत्सूपसिताज्यपायसम् । अभुञ्जतासञ्जितकोष्णमञ्जुलं जनो बहुव्यञ्जनमञ्जसोदनम् ॥ १३ ॥ अयत्नमभ्यस्तसमस्तमातृकाक्षरालिमानन्द्य सनन्दनं निजम् । त्रयीमथाध्यापयदाहिताद्भुतस्तदीयतादृक्प्रतिभाढ्यभावतः ॥१४॥ निशातबुद्धिः पितरं नियामकं परं पुरस्कृत्य ततश्चिराद्धरेः ।

---

पलाशाः राक्षसा अद्वैतिनः एव पलाशाः तेषु दण्डं शिक्षां बिभर्ति इति अद्वैतिपलाशदण्डभृत् भवामि । अद्वैतिनः शिक्षयामीत्यर्थः । इत्येव सूचयन् इत्युत्प्रेक्षा । गुरूदितादेशकरः गुरुणोक्तशासनकरोऽयमर्भकःपाणिना पलाशदण्डं समधत्त गृहीतवान् । पलाशदण्डग्रहणं अद्वैतिपलाशदण्डज्ञापनायेत्यर्थः ॥१०॥ प्रदेहीति । प्रसूः मातेव मुखं अग्र्याः यासां ताः मात्राद्याः गुरुस्त्रियः गुरुपत्न्यः 'उपाध्यायः पिता ज्येष्ठो भ्राता चैव महीपतिः । मातुलः श्वशुरस्त्राता मातामहपितामहौ । वर्णज्येष्ठ पितृव्यश्च पुंसस्तु गुरवः स्मृताः ॥ माता मातामही गुर्वी पितुर्मातुश्च सोदराः । श्वश्रूः पितामही ज्येष्ठधात्री च गुरवः स्त्रियः । इत्युक्तो गुरुवर्गेषु एभ्यो माता गरीयसी ॥' इत्युक्ताः । राजतपात्रं पाणौ यस्य तं तस्मै 'भवति भिक्षां देहि' इत्युदीरिणे भाषमाणाय 'पूर्वं ब्राह्मणो भिक्षां याचेत' इति शास्त्रात् । बटवे ब्रह्मचारिणे मौक्तिकशुभ्रतण्डुलानां प्रशस्तं भैक्ष्यं भिक्षाकदम्बकं मुदा हर्षेण ददुरित्यन्वयः । दत्तवत्यः ॥ ११ ॥ पुरोहितेति । तदा पुरोहितस्योक्त्या शासनेन हरेः प्रणामपूर्वकं पूर्वं हरिं प्रणम्य इत्यर्थः । तदनुक्रमाद् पुरतः अग्रे कृतानतिं स्वस्वपदेषु कृतनमस्कारं तं कुमारं अमोघवाक् अमोघवचना सतां परिषद् सभा मुदा हर्षेण आशीर्भिः आशीर्वादैरन्वगृह्णात् अनुगृहीतवती ॥ 'आशीरुरगदंष्ट्रायां हिताशंसाभिलाषयोः' इत्यमरः ॥ १२ ॥ महेति । तत्र महोत्सवे उपनयनोत्सवे पोलिका भक्ष्यविशेषाः तदाद्यानि अपूपानि सन् मनोज्ञरूपः सूपः सिता शर्करा पायसं परमान्नं महिष्ठानि अतिमात्राणि एतानि यस्मिन् तत्तथोक्तम् । बहुव्यञ्जनं अनेकशाकं आसञ्जितेन आसक्तेन कोष्णं किञ्चिदुष्णं ओदनं अन्नं जनः ब्राह्मणजनः अञ्जसा सम्यक् अभुञ्जत भुक्तवान् । 'भुजोऽनवने' इत्यात्मनेपदम् । अतिशयेन महत् महिष्ठ 'अतिशयने तमबिष्ठनौ' इति इष्ठन् । 'कोष्णं कवोष्णं मन्दोष्णं' इत्यमरः । ईषदर्थे च कदादेशः ॥ १३ ॥ अयत्नमिति । अयत्नं यथा भवति तथा । गुरुयत्नं विनैवेत्यर्थः । अभ्यस्ता समस्ता अक्षराणां अकारादिक्षकारान्तानां संज्ञारेखाणां आलिः पङ्क्तिर्यस्य तं तथोक्तम् । निजनन्दनं पुत्रं आनन्द्य संतोष्य तदीया नन्दनसंबन्धिनी तादृक् निरुपमा या प्रतिभा बुद्धिविशेषः । 'स्मृतिर्व्यतीतविषया मतिरागामिगोचरा । बुद्धिस्तात्कालिकी ज्ञेया प्रज्ञा त्रैलोक्यगोचरा । ' प्रज्ञां नवनवोन्मेषशालिनीं प्रतिभां विदुः । इत्युक्तलक्षणा । तया आढ्यभावतः पूर्णत्वाद्धेतोः पञ्चम्यास्तसिल् । आहिताद्भुतः मनसि निविष्टाश्चर्यः स आनन्दाचार्यः अथ उपनयनानन्तरं त्रयीं वेदान् अध्यापयत् नन्दनं अध्यापयामास । 'उपनीय गुरुः शिष्यं वेदमध्यापयेत्ततः ।' इति याज्ञवल्क्यस्मरणात् ॥ १४ ॥ निशातेति । ततोऽनन्तरं

द्विपारिवक्त्रस्य भजन् कृपातरिं स पारगो वेदपयोनिधेरभूत् ॥ १५ ॥ श्रुतावहंकारवतामसन्मताश्रितामसौ धाम कुतूहलाद्यताम् । अतिक्रमं कर्तुमवक्रधीः क्रमात् प्रचक्रमे पालिपदक्रमादिभिः ॥ १६ ॥ पपाठ सप्रश्रयमन्तिके पितुः स मध्वशास्त्राद्यखिलागमानपि । तदीयदैनंदिनहोमकन्दलत्कृशानुपक्वोदनक्लृप्तभोजनः ॥ १७ ॥ समस्तविद्यालिनिरूढसंस्तवः सतीर्थसार्थैरसकृत्कृतस्तवः । रमेशपादार्पितशस्तमानसस्तदात्मशीलेन यशस्ततान सः ॥ १८ ॥ कृतार्थनस्तत्र पुरेऽथ केनचिद्द्विजन्मनोद्वाहमहं वितन्वता । ययौ प्रमोदेन तदीयमन्दिरं कदाचिदानन्दकृती सनन्दनः ॥१९॥ सभामितस्तत्र सहात्मजन्मना बभावसौ मायिसमूहमध्यगः ।

---

निशातबुद्धिः तीक्ष्णमतिः स कुमारः पितरं केवलं नियामकं नियन्तारं एवं पठेति शिक्षामात्रकारणमित्यर्थः । पितैव नियामकः पोतवाहः तरीप्रवर्तकः ' नियामकः पोतवाहः ' इत्यमरः । तं पुरस्कृत्य अग्रे निधाय चिरात् चिरकालं द्विपारिवक्त्रस्य सिंहमुखस्य हरेः नृसिंहस्य कृपैव तरिः नौः ' स्त्रियां नौस्तरणिस्तारः ' इत्यमरः । तां भजन् सन् वेदपयोनिधेः पारं गच्छतीति वेदपारगः अभूत् । श्रीनृसिंहकृपाबलादेव वेदपारीणोऽभूत पिता तु निमित्तमात्रम् । यथा समुद्रतरणे मुख्यसाधनं नौकैव कर्णधारस्तु निमित्तमात्र तद्वदिति भावः ॥१५॥ श्रुतावहमिति । अवक्रधीः ऋजुबुद्धिः असौ कुमारः श्रुतौ वेदविषये अहंकारवतां वयमेव कुशला इति अभिमानिनां असन्मतं अद्वैतमतं आश्रयन्तीति असन्मताश्रिनः । श्रयतेः क्विप् । तेषां कुतूहलात् वेदपरीक्षाकौतुकात् धाम निजगृह यतां प्राप्तानां ' इण् गतौ ' इत्यस्माल्लटः शत्रादेशः । द्विजानामिति शेषः । अतिक्रमं उल्लङ्घनं तिरस्कारमिति यावत् । पालिपदक्रमादिभिः आदिशब्देन जटाघनक्रमावरोहणावरोहणानां संग्रहः । कर्तुं प्रचक्रमे उद्युक्तवान् । तान् सर्वाञ्जिगायेत्यर्थः । अत्र पूर्वोत्तरार्धयोः त, क, प, स्मसंयुक्तककारस्याप्यसकृदावृत्तौ वृत्त्यनुप्रासः शब्दालंकारः ॥ १६ ॥ पपाठेति । सः कुमारः पितुरानन्दाचार्यस्यान्तिके तदीयः पितुः सम्बन्धी यो दैनंदिनहोमः प्रातःसवनस्तेन कन्दलति प्रज्वलति अग्नौ कृशानौ पक्वेनौदनेनान्नेन क्लृप्तभोजनः सन्मध्वशास्त्राद्यखिलागमानपि न वेदमात्रमिति भावः । सप्रश्रयं सविनयं पपाठ । बाल्यात्प्रभृति तादृक्पवित्रान्नभुगेव सच्छास्त्रमधीतवानित्यर्थः । आनन्दाचार्यः कुमारस्य बुभुक्षां विज्ञाय वैतानिकाग्नौ चरुं कृत्वा तं चरुं भोजयित्वा प्रतिदिनमध्यापयदिति प्रसिद्धिः ॥ १७ ॥ समस्तेति । समस्तविद्यालिषु सकलसच्छास्त्रेषु निरूढसंस्तवः दृढपरिचयः ' संस्तवः स्यात्परिचयः ' इत्यमरः । अत एव सतीर्थ्यानां स्वेन साकं पठतां कुमाराणां सार्थैः सङ्घैरसकृत्पुनः पुनः कृतस्तवोऽद्भुतप्रतिभोऽयमिति कृतस्तोत्रः ' सतीर्थ्यास्त्वेकगुरवः ' ' संघसार्थौ तु जन्तुभिः ' इति चामरः । रमेशपादयोरर्पितं शस्त प्रशस्तं मानसं येन स तथोक्तः । नाहं कर्ता हरिः कर्तेति ज्ञातवानित्यर्थः । अत्र पूर्वोत्तरार्धयोः पादान्तेषु व्यञ्जनयुग्मस्य नियमेनावृत्त्या यमकप्रभेदशब्दालङ्कारः ॥ १८ ॥ कृतेति । अथ सच्छास्त्रोपदेशानन्तरं तत्र पुरे पुण्यस्तम्भे कदाचिज्जातु उद्वाहं स्वकन्याविवाहोत्सवम् । ' मह उद्धव उत्सवः ' इत्यमरः । वितन्वता केनचिद्द्विजन्मना ब्राह्मणेन कृतार्थनः स्वगृहं प्रत्यागन्तव्यमिति कृतप्रार्थन आनन्दकृत्यानन्दाचार्यः सनन्दनः कुमारसहितः सन् प्रमोदेन तदीयमन्दिरं ब्राह्मणगृहं ययौ ॥ १९ ॥ सभामिति । तत्र ब्राह्मणगृहे आत्मजन्मना

स शावको भूरि बकोत्करान्तरस्थितिर्यथा हंसपतिः सरोवरे ॥ २० ॥ तदा महाभाष्यविशारदावुभावुदारवाचावुरुगर्वधूर्वहौ । सदोन्तराले शिवविश्वपण्डितौ वितेनतुर्व्याकरणेषु नैपुणीम् ॥ २१ ॥ दृशा स्वतातेन कृतप्रचोदनो विशारदस्तत्र विहस्य बालकः । तदुक्तसूत्रार्थमशेषमप्यसावखण्डयद्युक्तिमतीभिरुक्तिभिः ॥ २२ ॥ कृताभ्यसूयस्तदमुष्य भाषितं निशम्य गोलिङ्ग इति द्विजोऽपरः । रुषाधिचिन्तामणिवादचर्चिकां ततान नैयायिकतन्त्रमर्मविद् ॥ २३ ॥ मणिं तमप्यद्भुतधीर्विदारयन्नुदारवाक्पाटवटङ्ककोटिभिः । सभाजितः सर्वसभाजनैस्तदा स्वदारकत्वं स दधार सार्थकम् ॥ २४ ॥ जितेषु तेषु त्रिषु तानभट्ट इत्युदूढनाम्ना स पुनर्द्विजन्मना । सहातनोच्छ्रौतकलाभिमानिना प्रसङ्गमुद्दामवचोविजृम्भणः ॥ २५ ॥

---

कुमारेण सह सभामितः प्राप्तः मायिसमूहमध्यगोऽद्वैतिसंघमध्यस्थोऽसावानन्दाचार्यः सरोवरे । 'कासारः सरसी सरः' इत्यमरः । भूरिणां बकानामुत्करस्य समूहस्यान्तरे मध्ये स्थितिर्यस्य स तथोक्तः । सशावकः स्वशिशुना सहितः । 'पृथुकः शावकः शिशुः' इत्यमरः । हंसपतिर्यथा हंसश्रेष्ठवद् बभौ । बिम्बप्रतिबिम्बभावेनोपमालङ्कारः ॥ २० ॥ तदेति । तदा तस्मिन्समये महाभाष्ये पतञ्जलिकृतशब्दभाष्ये विशारदावुदारवाचौ प्रगल्भवाचावत एवोरुगर्वधूर्वहौ धुरिणावत्यन्तगर्विताविित्यर्थः । उभौ शिवपण्डितश्च विश्वपण्डितश्च शिवविश्वपण्डिताख्यौ वादिनौ सदोऽन्तराले सभामध्ये व्याकरणेषु शब्दशास्त्रेषु नैपुणीं स्वकौशलं वितेनतुः प्रकटयामासतुरित्यर्थः ॥ २१ ॥ दृशेति । तत्र सभायां विशारदः शब्दशास्त्रकुशलोऽसौ बालक आनन्दाचार्यसुतो नरसिंहाख्यः स्वतातेनानन्दाचार्येण दृशा दृक्संज्ञया कृतचोदनः आक्षेपं कुर्विति कृतप्रेरणः सन् विहस्येदं कियन्मात्रमिति हेलयेति भावः । ताभ्यां शिवविश्वपण्डिताभ्यामुक्तो यः सूत्रार्थस्तमशेषमपि युक्तिमतीभिः युक्तियुक्ताभिरुक्तिभिर्वचनैरखण्डयत्खण्डितवान् ॥ २२ ॥ कृतेति । अमुष्य नरसिंहस्य तद्भाषितं ताभ्यां प्रतिपादितशब्दसूत्रार्थखण्डनरूपं निशम्य कृताभ्यसूयस्तस्मिन् कृतेर्ष्यः नैयायिका न्यायशास्त्रप्रवर्तकास्तेषां तन्त्रं शास्त्रं तस्य मर्मविद्रहस्यज्ञो गोलिङ्ग इति प्रसिद्धोऽपरो द्विजः 'अहो बालस्येह का प्रौढिमेति कोपेन चिन्तामणौ चिन्तामण्याख्यतर्कशास्त्रे विभक्त्यर्थेऽव्ययीभावः वादचर्चिकां नरसिंहेन साकं विवादचर्यां विततान ॥ २३ ॥ मणिमिति । अद्भुतधीः आश्चर्यकरबुद्धिः नरसिंहः उदारायाः महत्याः वाचः स्ववचनस्य यत्पाटवं पटुत्वं तदेव टङ्कः पाषाणदारणः 'टङ्कः पाषाणदारणः' इत्यमरः । तस्य कोटिभिरग्रैः तं गोलिङ्गप्रतिपादितमणिमिव मणिं इति रूपकम् । विदारयन् स्ववाक्पाटवेन तदुक्तिं खण्डयन्नित्यर्थः । तदा तस्मिन्समये सर्वैः सभाजनैः सभाजितः पूजितः सन् स्वस्य यद्दारकत्वं भेदकत्वं सार्थकं अन्वर्थं दधार । तस्मिन्पूर्वं बालकपर्यायवाची दारकशब्दः । तदानीं बुद्धिटङ्को मणिं बिभेद इति हेतुना दारयति इति दारकः इति सार्थकोऽभूदित्यर्थः ॥ 'दारकौ बालभेदकौ' इत्यमरः ॥२४॥ जितेष्विति । त्रिषु तेषु शिवविश्वगोलिङ्गाख्येषु मायिषु जितेषु सत्सु श्रौतकलायां श्रौतविद्यायामभिमानिनः अहमेव श्रौतं वेद्मि इत्यहंकारवता तानभट्ट इत्युदूढनाम्ना प्रसिद्धनाम्ना द्विजन्मना ब्राह्मणेन मायिना सह उद्दामविशृङ्खलं वचसां विजृम्भणं यस्य स तथोक्तः सन् नरसिंहः प्रसङ्गमातनोत् । श्रौतविद्याप्रसङ्गं चकारेत्यर्थः ॥२५॥ वितानित इति ।

**वितानिते तत्र च तानभट्टके नताननने सभ्यजने सविस्मये। अनर्घ्यचीराम्बरपारितोषिकं गृहस्थतः प्राप स तातपूर्वकम् ॥२६॥ स्वबालचापल्यविगर्हितारवाः परास्तगर्वाः प्रतिवादिफेरवाः। पुरो नृसिंहस्य निवस्तुमक्षमा बभूवुरूरीकृतविद्रवोद्यमाः ॥२७॥ स्वधिष्ण्यमानन्दसुधीरुपेयिवान् महानुभावेन सहात्मजन्मना। सुहृत्पुरोऽमुष्य जगत्युदञ्चितं जगाद तं प्राथमिकं जयाङ्कुरम्।। २८॥ स रुक्मिणीति प्रथिताभिधानया द्विजन्मनाग्रीयकुलस्य कन्यया। शुभे वयोरूपगुणानुरूपया व्यधत्त लग्ने गृहमेधिनं सुतम् ॥ २९॥ महे परं तत्र महीसुरावलिर्न तृप्तिमिष्टाशनभुग्व्यगाहत। सुरावलिश्चापि पुरःपरिस्फुरद्धुताशनान्तर्हुतभूरिहव्यभाक् ॥ ३०॥ अशेषशास्त्रालिनिरूढशेमुषीविशेषसंपादितकीर्तिसम्पदम्। तमेवमूरीकृतदारसङ्ग्रहं**

किंचेति चकारः। तत्र सभायां तानभट्टके वितानिते नरसिंहेन विवादविषये तुच्छीकृते अत एव नतानने लज्जया नम्रशिरसि सति 'वितानं त्रिषु तुच्छकम्' इत्यमरः। सभ्यजने सविस्मये सर्वशास्त्रेषु अप्रतिहतप्रतिभोऽयं कुमारः इति साश्चर्ये सति स नरसिंहः तातो जनकः आनन्दाचार्यः स एव पूर्वः सत्कारस्य प्रथमो यस्मिन्कर्मणि यथा भवति तथा अनर्घ्याणि अमौल्यानि चीराम्बराणि सूक्ष्मवस्त्राण्येव पारितोषिकं परितोषाद्दीयमानं वस्तु ततः गृहस्थतः गृहपतेः सकाशात्प्राप प्राप्तवान् 'मूल्ये पूजाविधावर्घः' इत्यमरः ॥ २६ ॥ **स्वेति**। नृसिंह एव सिंह इति रूपकम्। तस्य पुरः अग्रे निवस्तुं स्थातुमक्षमाः असमर्थाः अतएव स्वेषां यद्बालचापल्यं अज्ञचापल्यं 'शिशावज्ञेऽपि बालः स्याद्' इति सज्जनः। तेन विगर्हितः आरवो वादरूपध्वनिः येषां ते अन्यत्र स्वेषां यद्बालचापल्यं बवयोरभेदात् वालचापल्यं पुनः पुनः लाङ्गूलचालनं तत्प्रधानः विगर्हितः श्रवणकटुकः आरवो येषां ते तथोक्ताः परास्तगर्वाः निरस्तदर्पाः उभयत्र समानमेतत्। प्रतिवादिनः पूर्वोक्तशिवपण्डितादयः एव फेरवः जम्बूकाः 'शृगालो वञ्चकः क्रोष्टुफेरुफेरवजम्बुकाः' इत्यमरः। ऊरीकृतः अङ्गीकृतः विद्रवे पलायने उद्यमः प्रयत्नः येषां ते तथोक्ताः बभूवुः पलायनैकशरणा बभूवुः। श्लेषसाङ्कर्णोऽयं रूपकालङ्कारः ॥२७॥ **स्वेति**। आनन्दसुधीः आनन्दाचार्यः महानुभावेन सर्वाधिकमतिनिश्चयेन आत्मजन्मना पुत्रेण सह 'अनुभावः प्रभावे च सतां च मतिनिश्चये' इत्यमरः। स्वधिष्ण्यं स्वगृहं प्राप्तवानुपेयिवान् 'दाश्वांश्चेत्यादिना क्वसन्तो निपातः'। जगति लोके उदञ्चितमुत्पन्नं प्रथमं भावं प्राथमिकं अमुष्य पुत्रस्य जयाङ्कुरं प्रतिवादिविजयलक्षणप्ररोहं सुहृदां पुरो जगाद हर्षेण पुत्रविजयं कथयामासेत्यर्थः ॥ २८ ॥ **स इति**। स आनन्दाचार्यः शुभे विवाहप्रशस्ते लग्ने अग्रीयकुलस्य श्रेष्ठवंशस्य द्विजन्मनो ब्राह्मणस्य कन्यया कुमार्या वयोरूपगुणैरनुरूपया स्वसुतस्य योग्यया रुक्मिणीति प्रथिताभिधानया प्रसिद्धाख्यया 'आख्याह्वे अभिधानं च' इत्यमरः। बालिकया इति शेषः। सुतं गृहमेधिनं गृहस्थं चकार वेदशास्त्रोपदेशानन्तरं सुतस्य विवाहं चकारेत्यर्थः। अत्र याज्ञवल्क्यः 'गुरवे तु वरं दत्वा स्नायीत तदनुज्ञया। वेदव्रतानि वा पारं नीत्वा ह्युभयमेव वा॥ अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्' इति ॥ २९ ॥ **मह इति**। तत्र तस्मिन्महे विवाहोत्सवे परं केवलं महीसुरावलिः ब्राह्मणपङ्क्तिरेव इष्टाशनभुक् भक्ष्यभोज्यादि इष्टान्नभुक् तां तृप्तिं न व्यगाहत न प्राप। किं च पुरः वेदिकाग्रभागे परिस्फुरतः हुताशनस्य अन्तः मध्ये हुतानि भूरीणि हव्यानि हवींषि भुङ्क्ते इति हव्यभुक्। अग्निमुखा वै देवाः इति श्रुतेः। सुरावलिर्देवसमूहोऽपि तृप्तिमगाहत इति सम्बन्धः। लाजाहोमादिकं ब्राह्मणसन्तर्पणं च कृतमित्यर्थः ॥ ३० ॥ **अशेष इति**। अशेषशास्त्रालिषु रूढेन परिचितेन इत्यर्थः।

ननन्द निर्वर्ण्य स नन्दनं निजम् ॥ ३१ ॥ सुतस्य तत्तादृशसर्वदर्शनप्रगल्भतामात्मविधेयतामसौ । तथानुरूपप्रमदाप्तिभावमप्यमन्यतानुग्रहमेव शार्ङ्गिणः ॥ ३२ ॥ कुमारवैवाहिकमङ्गलाधिकप्रमोदवानम्बरभूषणादिकम् । स वैष्णवेभ्यो विततार केवलं सतां धनं भुज्यत एव सज्जनैः ॥ ३३ ॥ स्वयं ततोऽध्यापयदागमान्गुरोरनुज्ञया मध्वयतीन्द्रनिर्मितान् । क्रमेण शिष्यांश्च कुशाग्रधीरयं त्रिविक्रमागारकृतासिकोऽन्वहम् ॥ ३३ ॥ यदृच्छया तत्र कदाचिदागमप्रवीणभावाधिगताधिकस्मयः । समेत्य शिष्यावलिसंवृतं पुरो ददर्श तं कश्चन मायिमस्करी ॥ ३५ ॥ द्विरष्टसंवत्सरजातिशोभनप्रतीकमाजानुभुजार्गलद्वयम् । वदन्तमुच्चैर्वरकर्मनिर्णयप्रगल्भवाक्यार्थविशेषमञ्जसा ॥ ३६ ॥ वचोऽदसीयं कलयन् श्रवःसुधां चिरं पुरोभागितया तदं-

---

शेमुषीविशेषेण बुद्धिविशेषेण सम्पादिता कीर्तिसंपद् यशः समृद्धिः यस्य तं तथोक्तं । एवमुक्तप्रकारेण ऊरीकृतदारसङ्ग्रहं अङ्गीकृतभार्यासङ्ग्रहं कृतोद्वाहमित्यर्थः नन्दनं पुत्रं नरसिंहं निर्वर्ण्य दृष्ट्वा स आनन्दाचार्यः ननन्द हृष्टोऽभूत् ॥ ३१ ॥

**सुतस्येति** । असौ आनन्दाचार्यः सुतस्य सम्बन्धिनीं तत्तादृशीं निरुपमा या सर्वदर्शनेषु सर्वशास्त्रेषु प्रगल्भतां च आत्मनः स्वस्य विधेयतां वचनकारित्वं च । 'विधेयो विनयग्राही वचने स्थित आश्रवः' इत्यमरः । तथानुरूपायाः प्रमदायाः स्त्रियाः आप्तिर्यस्य सः अनुरूपप्रमदाप्तिरितिव्यधिकरणबहुव्रीहिः तस्या भावं तत्तां च शार्ङ्गिणो हरेरनुग्रहजन्यमेव, न साधनान्तरजन्यमिति भावः । अमन्यत ज्ञातवान् ॥ ३२ ॥ **कुमारेति** । कुमारस्य वैवाहिकमङ्गलेन विवाहोत्सवेन अधिकप्रमोदोऽस्यास्ति इति अधिकप्रमोदवान् अत्र स्फुटेऽपि बहुव्रीहिसमासे मतुप्प्रयोगस्तु 'कोकप्रीतिचकोरपारणपटुज्योतिष्मतीलोचना' इत्यादिप्रयोगवदयम् । आनन्दाचार्यः अम्बरभूषणादिकं केवलं वैष्णवेभ्यः वैष्णवेभ्यः एव विततार दत्तवान् । विमतेभ्यः किमर्थं न ददौ, इति शङ्कां अर्थान्तरेण परिहरति । **सतामिति** । तथाहि सतां सज्जनानां धनं साधुभिरेव भुज्यते न तु दुर्जनैरिति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासालङ्कारः ॥ ३३ ॥ **स्वयमिति** । ततो विवाहानन्तरं कुशाग्रधीः अयं नरसिंहः अन्वहं प्रतिदिनं त्रिविक्रमागारे त्रिविक्रमदेवालये कृता आसिका स्थितिर्यस्य सः तत्र स्थितः सन्नित्यर्थः । गुरोः पितुः अनुज्ञया शिष्यान् कांश्चन मध्वयतीन्द्रनिर्मितानागमान् शास्त्राणि क्रमेण स्वयमध्यापयत् अधिपूर्वादिङध्ययन इत्यस्माण्ण्यन्तात्कर्तरि लङ् । प्रमाणपद्धतिमारभ्य दर्शनं स्वयं शिष्येभ्य उपदिदेशेत्यर्थः ॥ ३४ ॥ **यदृच्छयेति** । तत्र त्रिविक्रमागारे कदाचिदागमेषु शास्त्रेषु प्रवीणभावेन प्रवीणत्वहेतुना अधिगतः प्राप्तः अधिकस्मयः अतिमात्रदर्पः यस्य सः तथोक्तः कश्चन मायिमस्करी मायिसन्यासी यदृच्छया समेत्य स्वेच्छाचारेण तत्रागत्य शिष्यावलिसंवृतं तं नरसिंहं पुरोऽग्रे ददर्श ॥३५॥ कीदृशमिति तत्राह । **द्विरिति** द्विरावृत्ता अष्टसंख्या येषां ते द्विरष्टसंवत्सरः षोडशवर्षवयस्क इत्यर्थः । तस्य भावः तत्ता । तया अतिशोभनप्रतीकं अतिसुन्दराङ्गम् । 'अङ्गं प्रतीकोऽवयवः' इत्यमरः । भुजे अर्गले इव भुजार्गले । जानुनी अनुसृत्य आजानु जानुपर्यन्तं लम्बमानामित्यर्थः । बाह्वोःभुजार्गलयोः द्वयं यस्य तं तथोक्तम् । वरस्य कर्मनिर्णयस्य कर्मनिर्णयाख्यग्रन्थस्य प्रगल्भानां प्रौढानां वाक्यानामर्थविशेषं अशेषं समस्तमपि अञ्जसा निःसंशयमपि उच्चैः वदन्तं तं ददर्शेति पूर्वेणान्वयः ॥ ३६ ॥ **वच इति** । श्रवसोः श्रवणयोः

कधीः । अतिष्ठदाश्चर्यसरस्वदन्तरा मुहूर्तमात्रं प्लवमानमानसः ॥३७॥ तदीयताहङ्निरवद्य-वाङ्मयप्रवाहधाटीपरिपाटितो यतेः । चिरैधितोऽप्याशु पपात मायिनो मनोगतोऽद्वैतिमताग्रहद्रुमः ॥ ३८ ॥ अयं महात्मा खलु कश्चिदन्यथा मनुष्यमात्रस्य न हीदृशी मतिः । इति स्वचित्ते विमृशन् हृदैव तं प्रणम्य तूर्ष्णीं प्रययौ यथागतम् ॥ ३९ ॥ इत्थं स्वकीयवरनन्दन चित्रचर्या–प्रोद्वेल्लदद्भुतरसाब्धिनिमज्जिचेताः । निन्ये वपुः स जरसापलितं रमेशपादाम्बुजातभजनेन कृतार्थभावम् ॥ ४० ॥ भित्वाद्वैतमतान्धकारमभितः सद्वृन्दसंभावितः । संमोद्यद्वि-

---

सुधां सुधावत्सुखकरामित्यर्थः अमुष्य नरसिंहस्य सम्बन्धि अदसीयम् । वचः वचनं व्याख्यानरूपं कलयन् शृण्वन् इत्यर्थः । पुरोभागी दोषैकदृक् । 'दोषैकदृक् पुरोभागी' इत्यमरः । तस्य भावः तत्ता । तया हेतुना चिरं तस्मिन् तद्वचने एका मुख्या धीः यस्य स तदेकधीः । अप्रमादेन तद्वचनं शृण्वन्नित्यर्थः । दोषान्वेषणबुद्धिरिति शेषः । आश्चर्यमेव सरस्वान् समुद्रः । 'सरस्वान् सागरोऽर्णवः' इत्यमरः । तस्य अन्तरा मध्ये । अन्तरेत्यव्ययम् । मुहूर्तमात्रं प्लवमानं मानसं यस्य सः तथोक्तः सन् शङ्कानवकाशादत्यन्ताश्चर्याविष्टमानस इत्यर्थः । मुहूर्तमात्रं घटिकाद्वयपरिमितकालम् । कालाध्वनोरत्यन्तसंयोगे इति द्वितीया । 'मुहूर्तमल्पकालेऽपि घटिकाद्वितयेऽपि च' इति विश्वः । अतिष्ठत् स्थितवान् । ष्ठा-गतिनिवृत्तौ इत्यस्मात् लङ् । प्रकाशनस्थेयाख्यानामित्यात्मनेपदम् ॥ ३७ ॥ **तदीयेति** । मायिनः मायावादिनः यतेः तस्य मनोगतः चिरैधितः चिरकालादभिवर्धमानोऽपि रूढमूलोऽपीत्यर्थः । अद्वैतमते आग्रहः अभिनिवेशः स एव द्रुमः वृक्षः तस्य नृसिंहस्य इदं तदीयम् ताहक् निरुपमं निरवद्यं निर्दोषं यद्वाङ्मयम् । स्वार्थे मयट् । तदेव प्रवाहः तस्य धाट्या बलादाक्रमणेन । 'बलादाक्रमणं धाटी' इति शाश्वतः । परिपाटितः निर्मूलितः सन् आशु पपात । यथा नदीतीरगो वृक्षः प्रवाहवेगेन निर्मूलितः पतति तद्वदिति रूपकोऽलङ्कारः । युक्तियुक्ततद्व्याख्याकर्णनेन स्वमताभिमानं जहाविति फलितोऽर्थः ॥ ३८ ॥ **अयमिति** । अयं पुरोवर्ती नरसिंहः कश्चित् कोऽपि महात्मा खलु देवतांशः किलेत्यर्थः । अन्यथा तादृशो न भवति चेन्मनुष्यमात्रस्य केवलमनुष्यस्य ईदृशी ईदृगद्भुता मतिः न हि नास्त्येव । 'अद्भुतप्रतिभा यस्य श्रुतिस्मृत्यविरोधिनी । विश्रुता नृषु सञ्जातं तं विद्याद्देवतांशकम् ॥' इति शास्त्रादिति भावः । इत्यवं स्वचित्ते विमृशन् विचारयन् सः सन्यासी हृदैव मनसैव तं नरसिंहं प्रणम्य तूर्ष्णीं मौनेन शङ्काङ्कुरानवकाशादिति भावः ययौ पूर्वमार्गेणैव प्रययौ ॥ ३९ ॥ **इत्थमिति** । इत्थं उक्तप्रकारेण स्वकीयवरनन्दनस्य चित्राभिः आश्चर्याभिः चर्याभिः चरित्रैः प्रोद्गता उल्लङ्घिता वेला मर्यादा येन सः प्रोद्वेलः तद्वदाचरतीति प्रोद्वेलवेलातीत इत्यर्थः । आचारार्थेऽपि लट् शः । स चासौ अद्भुतरसाब्धिश्च आश्चर्यरससमुद्रः तस्मिन्निमज्जतीति निमज्जि चेतः चित्तं यस्य स तथोक्तः । स्वपुत्रचरित्रेण विस्मितहृदय इत्यर्थः । स आनन्दाचार्यः जरसा वार्धक्येन पलितं केशादौ प्राप्तशौक्ल्यं 'पलितं जरसा शौक्ल्यं केशादौ' इत्यमरः । वपुः स्वदेहं रमेशपादाम्बुजातभजनेन हरिचरणनलिनसेवया कृतार्थभावं कृतकृत्यत्वं निन्ये निनाय । वसन्ततिलकावृत्तम् । 'उक्ता वसन्ततिलका तभजा जगौ गः ।' इति लक्षणात् ॥ ४० ॥ **भित्वेति** । अद्वैतिमतमेव अन्धकारं अभितः समन्तात् भित्वा

जसंसदं च वसुभिर्दूरीकृतारिव्रजः ॥ आशाः पूर्णकलाभिविस्तृतयशोज्योत्स्नाश्रिया शोधयन् । आनन्दद्विजराडगाद्धरिपदं यज्वादिभूरूर्जितम् ॥ ४१ ॥ ततोऽवस्थां कामप्ययति जनके साधुजनता–प्रमोदर्धिस्तेनां सपदि नरसिंहद्विजमणिः ॥ विधिज्ञश्चामुष्मै सकलमपिचक्रेऽग्रजनुषा । समेतः पारोक्ष्यं विधिवदुचितं कर्म मखिने ॥ ४२ ॥ तातानन्तरमेव संसृतिधुरां तत्तादृशीमु-

---

विभिद्य सद्वृन्देन साधुसमूहेन अन्यत्र नक्षत्रसमूहेन संभावितः । द्विजानां ब्राह्मणानां अन्यत्र चकोरपक्षिणां संसदं वसुभिः धनैः अन्यत्र किरणैः संमोद्य संतोष्य 'दन्तविप्राण्डजा द्विजाः' 'देवभेदेऽनले रश्मौ वसू रत्ने धने वसु' इति चामरः । दूरीकृतः दूरं निरस्तः अरीणां बाह्याभ्यन्तरशत्रूणां अन्यत्र चक्रवाकपक्षिणां व्रजः येन सः । अरिः पुमान् चक्रवाके रिपौ चक्रे तु न द्वयोः ।' इति सज्जनः । पूर्णानां चतुर्दशसंख्यानां षोडशसंख्यानां कलानां विद्यानां प्रतिपदादिसंज्ञानां च अभिविस्तृततया विशेषव्याप्तया यशः एव ज्योत्स्ना कौमुदी तस्याः श्रिया समृध्या आशाः दिशः शोधयन् शुभाः कुर्वन् । विद्यानां चतुर्दशत्वे याज्ञवल्क्यः 'अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या एताश्चतुर्दश ।' इति । चन्द्रकलानां प्रतिपदादिसंज्ञायां माधवाचार्यः 'प्रतिपन्नाम विज्ञेया चन्द्रस्य प्रथमा कला ।' इति । इति चन्द्रपक्षे । कीर्तिरेव ज्योत्स्नेति योजना । यज्वानः विधिवदिष्टवन्तः 'यज्वा तु विधिनेष्टवान्' इत्यमरः । तेषां अधिभूः नायकः श्रेष्ठ इत्यर्थः । अन्यत्र 'पद्मारिः कलादो यज्वनां पतिः' इति चन्द्रपर्यायेषु शाश्वताभिधानात् । आनन्दाचार्य इति द्विजराट् ब्राह्मणश्रेष्ठः अन्यत्र आनन्दयतीत्यानंदः । पचाद्यच् । स चासौ द्विजराट् चन्द्रः 'द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः' इत्यमरः । ऊर्जितं च्युतिरहितं हरिपदं आकाशं च अगात् । एकत्र कालधर्मं अन्यत्र आकाशमार्गं च प्रापेत्यर्थः । अत्रप्रकृताप्रकृतयोः आनन्दाचार्यचन्द्रयोः एकनालावलम्बिकमलद्वयवदर्थद्वयप्रतीतेः प्रकृताप्रकृतश्लेषालंङ्कारः । 'प्रकृताप्रकृतोभयमुक्तं चेच्छब्दमात्रसाधर्म्यात् । श्लेषोयं श्लिष्टपदात्' इति लक्षणात् । शार्दूलविक्रीडितं वृत्तम् । लक्षणमुक्तम् ॥४१॥ तत इति । ततः अनन्तरं जनके पितरि । आनन्दाचार्ये साधुजनतायाः सज्जनसमूहस्य प्रमोदर्द्धेः संतोषसमृद्धेः स्तेनां अपहन्त्रीं दुःखकारिणीमित्यर्थः । 'चौरैकागारिकस्तेनदस्युतस्करमोषकाः' इत्यमरः । कामप्यवस्थां चरमदशामित्यर्थः । अयति प्राप्तवति सति विधिज्ञः शास्त्रज्ञः नरसिंहद्विजमणिः नरसिंहनामको द्विजवर्यः अग्रजनुषा स्वाग्रजेन श्रीनिवासाचार्येण समेतः सन् मखिने याज्ञिने अमुष्मै पित्रे उचितं पारोक्ष्यं कर्म विधिवत् शास्त्रोक्तप्रकारेण सकलमपि सपदि शीघ्रं चक्रे कृतवान् । 'ज्येष्ठः कुर्याद्यथाविधि' इति शास्त्रात् स्वाग्रजेनैव कारयामासेत्यर्थः । हरिणीवृत्तम् ॥ ४२ ॥ तातेति । एष नरसिंहः तातस्यानन्तरं निजाग्रजातं श्रीनिवासाचार्यं अग्रेकृत्य पुरस्कृत्य तत्तादृशीं दुर्भरामित्यर्थः । संसृतिधुरां संसारभारं 'ऋक्पूरब्धूःपथामानक्ष' इत्यचः प्राप् । उद्वहन् अभितः समन्तात् चर्याविशेषैः चरित्रविशेषैः हेतुभिः सज्जनैः मुहुः संभावितः सन् दूरमुत्सारिताः निरस्ताः कण्टकानां अन्तःशत्रूणां आलिः येन सः तथोक्तः अनिशं अजस्रं सन्मार्गमेव श्रयन् सन् घनतरां अतिशयेनमहतीं ईशस्य हरेः प्रीतिं उपार्जयत् । संसारे वर्तमानोऽपि अरिषड्वर्गं निगृह्य श्रवणमननादिसाधनैः हरिप्रीतिं संपादयामासेत्यर्थः यथा लोके कश्चिद्भारवाहः कण्टकादिकं दूरीकृत्या

**द्रहन्नग्रे कृत्य निजाग्रजातमभितःश्चर्याविशेषैर्मुहुः । दूरोत्सारितकण्टकालिरनिशं सन्मार्गमेवाश्रयन्नीशप्रीतिमुपार्जयन्ननतरं सम्भावितः सज्जनैः ॥ ४३ ॥ इति श्रीविद्याधीशविजये तृतीयः सर्गः ॥ ३ ॥**

**एकदा निजनिकेतनान्तरे द्वारदेशविलसद्वितर्दिकाम् । आवसन्सह सुधीभिरातनोत्तत्त्वनिर्णयविचारणामसौ ॥ १ ॥ तत्र कोऽपि पथिको यदृच्छया तं समेत्य विनयात्कृतानतिः । द्रागतर्कितनिजागमाहृताशेषसभ्यनयनोऽभ्यभाषत ॥ २ ॥ भूसुराग्रिम बहूनि गौतमीभासुरान्तरतटाग्रजाग्रतिः । पट्टणानि परितोऽतिशून्यतामानिनाय यवनावनीपतिः ॥ ३ ॥ सैन्यमस्य समुदस्तपट्टसप्रासमुद्गरपरश्वधायुधम् । उत्कटाहकुलहेषितं पुरो वीक्ष्य विद्रवपरायणो न कः ॥ ४ ॥ कोणपा इव कठोरकर्बुरश्मश्रुभारपरिचुम्बितोदराः । तद्भटाः**

---

सत्पथं संचरमाणः हरिप्रीतिं सम्पादयामासेत्यर्थः ॥ ४३ ॥ इति श्रीमज्जनार्दनसूरिविरचितायां विद्याधीशविजयव्याख्यायां शब्दार्थदीपिकायां तृतीयः सर्गः ॥ ३ ॥

**एकदेति** । असौ नृसिंहाचार्यः एकदा एकस्मिन्समये । ' सर्वैकान्यार्किंयत्तदः ' इत्यादिना दाप्रत्ययः । निजनिकेतनस्य स्वगृहस्य अन्तरे मध्ये यो द्वारदेशः तस्मिन् तत्प्रान्ते इत्यर्थः । विलसन्ती वितर्दिकां वेदिकां आवसन् वितर्दिकायां वसन्नित्यर्थः । ' उपान्वध्याङ्वसः ' इत्याधारस्य कर्मत्वम् । सुधीभिः सह तत्त्वानां चतुर्विंशतिसंख्याकानां निर्णये विचारणां विमर्शनं आतनोत् । ' वेदशास्त्रविनोदेन कालो गच्छति धीमताम् । इति न्यायादिति भावः । अस्मिन्सर्गे रथोद्धतावृत्तम् । ' रान्नराविह रथोद्धता लगौ । ' इति तल्लक्षणात् ॥१॥ **तत्रेति** । तत्र अवसरे कोऽपि कश्चनाविज्ञातकुलनामा पथिकः मार्गतः तं नरसिंहाचार्यं समेत्य प्राप्य विनयात् कृतानतिः कृतप्रणामः सन् द्राक् शीघ्रं अतर्कितः पूर्वं अनुत्प्रेक्षितः आकस्मिक इत्यर्थः । यो निजागमः स्वागमनं तेन आहृतानि आकृष्टानि अशेषसभ्यानां समस्तसभ्यानां नयनानि येन सः तथोक्तः । कोऽयमिति सर्वैर्विलोकितः सन्नित्यर्थः । अभ्यभाषत वक्ष्यमाणप्रकारेण बभाषे ॥ २ ॥ तद्भाषितमेवाष्टभिराचष्टे । **भूसुरेति** । भूसुराग्रिम हे ब्राह्मणश्रेष्ठ यवनावनीपतिः कश्चन यवनदेशराजः गौतम्याः गोदावर्याः भासुरेषु प्रकाशमानेषु अन्तरतटेषु प्रान्ततीरभागेषु जाग्रति जागरूकाणि स्थितानीत्यर्थः । पुराणि परितः समन्तात् अतिशून्यतां प्रजोपद्रवादत्यन्तरिक्तत्वं आनिनाय नीतवान् । नयतेर्द्विकर्मकत्वम् । तत्पुरवास्तव्यकुटुम्बिनः सर्वान् निष्कासयामासेत्यर्थः ॥ ३ ॥ तद्दौक्ष्यमेव वर्णयति । **सैन्यमिति** । समुदस्तानि प्रजाजिघांसया समुत्क्षिप्तानि पट्टसः चतुरस्रः आयुधविशेषः ' पट्टसः चतुरस्रकः ' इति सज्जनः । प्रासः कुन्तः ' प्रासस्तु कुन्तः ' इत्यमरः मुद्गरः द्रुघणः ' द्रुघणो मुद्गरघणौ ' इत्यमरः । परश्वधः कुठारः ' द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः । ' इत्यमरः । इति आयुधानि येन स तत्तथोक्तम् उत्कटानि मत्तानि मदवशादुत्थितानि अर्हाणां हयानां कुलस्य हेषितानि ध्वनिविशेषा यस्मिंस्तत्तथोक्तम् । ' वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः ' । ' हेषा ह्रेषा च निस्वनः । ' इत्यमरः । हेषेरेव कर्तरिक्तप्रत्यये हेषितम् । अस्य यवनराजस्य सैन्यं सेनां पुरः अग्रे वीक्ष्य कः को वा पुमान् विद्रवपरायणः पलायनपरायणो न भवतीति काकुः । सर्वोऽपि पलायत एवेत्यर्थः । दूरे तावद्युद्धकथेति भावः ॥ ४ ॥ **कोणपा इति** । कोणपा इति क इति श्लोकद्वयं

स्फुटजपाभशोणिमोद्गारिभीषणमुखोन्नटद्भ्रुवः ॥ ५ ॥ क्वापि भूसुरकुलान्यतर्जयन्कुत्राचित्कुल वधूग्रहं व्यधुः । चिक्षिपुः क्वचन हन्त निर्दयाः सप्रजेषु सदनेषु पावकम् ॥ ६ ॥ एवमाकुलयतामकालजं मेदिनीप्रलयमात्मदुर्नयैः । गोद्विषां भुजबलेन पीडिता भूरपेत-शरणा न शोभते ॥ ७ ॥ ग्रामतः पुनरितोऽपि योजने ते वितत्य शिबिरं समन्ततः । आसते हि पटमन्दुरोल्लसद्घोटकालिपरिवेषदुर्गमाः ॥ ८ ॥ पूर्वजन्मसुकृतेन केनाचिन्निःसृतोऽहमतदक्षिगोचरः । पाणिना परिमृशन् शिरोऽधुना प्राप्तवान्पुनरिहैव चेतनाम् ॥ ९ ॥ यावदेष्यति न भूसुरद्रुहां ग्राममेनमपि सा वरूथिनी । तावदत्रभवता सहाखिलैराशु गूढमपथेन गम्यताम् ॥ १० ॥ इत्युदीर्य नतमस्तकेऽध्वगे पारितोषिकमवाप्य निर्यति ।

---

एकान्वयत्वेन व्याख्यायते । कठोराणां कठिनानां कर्बुराणां रक्तकृष्णवर्णानां श्मश्रूणां भारेण बाहुल्येन परिचुम्बितानि उदराणि येषां ते तथोक्ताः । उदरपर्यन्तलम्बमानश्मश्रुरोमाण इत्यर्थः । स्फुटानां विकसितानां जपानां जपाख्यकुसुमविशेषाणां आभेव आभा येषां तानि अतिशोणिमानं रक्तत्वं उद्गिरन्तीति शोणिमोद्गिरीणि भीषणानि यानि मुखानि तेषु उन्नटन्त्यौ कोपादुच्चलन्त्यौ भ्रुवौ एषां ते तथोक्ताः । तस्य यवनराजस्य भटाः योधाः कोणपाः राक्षसा इव निर्दयाः सन्तः क्वापि स्थले भूसुरकुलानि ब्राह्मण यूथानि अतर्जयन् तर्जयामासुः प्रजह्रुः इत्यर्थः । कुत्राचित्स्थले कुलवधूनां कुलस्त्रीणां ग्रहं ग्रहणं व्यधुः चक्रुः ! कुलाङ्गना अपजह्रुरित्यर्थः । क्वचन स्थले सप्रजेषु प्रजासहितेषु सदनेषु गृहेषु पावकं अग्निं चिक्षिपुः विससृजुः । गृहानदहन्नित्यर्थः ॥ ६ ॥ **एवमिति** । एवं उक्तरीत्या आत्मनां दुर्नयैः दुष्टनीतिभिः प्रवृत्तैः मेदिनीं भुवं आकलयतां ' चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते ' इत्युक्तकालनियमं उल्लङ्घ्य द्रागेव उद्भूतं प्रलयं आकलयतां प्रापयतां गाः द्विषन्तीति गोद्विषः धेनुघातिनः यवनाः तेषां भुजबलेन पीडिता भूः अपेतानि शून्यानि शरणानि गृहाणि यस्याः सा तथोक्ता सती अपेतरक्षका च ' शरणं गृहरक्षित्रोः ' इत्यमरः । न शोभते न प्रकाशते ॥ ७ ॥ इदानीमतिदूरस्थास्ते किमस्मान् करिष्यन्ति इत्यत्राह **ग्रामतः इति** । पुनः किं तु ' पुनरप्रथमे भेदे ' इत्यमरः । इतः अस्मात् ग्रामतः ग्रामादपि योजने योजनाध्वपरिमिते देशे ' यतश्चाध्वकालनिर्माणम् ' इत्यादिना पञ्चमी । ' तद्युक्तादध्वनः प्रथमा सप्तम्यौ ' इति सप्तमी । ते यवनाः शिबिरं निवेशं समन्ततः वितत्य विस्तार्य ' निवेशः शिबिरं षण्ढे ' इत्यमरः । पटानां मन्दुरासु वस्त्रमयवाजिशालासु उल्लसतां वेगगर्वेण उच्चलतां घोटकानां अश्वानां अल्याः पङ्क्तेः परिवेषेण वलयाकारस्थित्या दुर्गमाः इतरजनदुरवापाः सन्त आसते हि वर्तते एव । ' वाजिशाला तु मन्दुरा ' ' हिर्हेतावधारणे ' इति चामरः ॥ ८ ॥ तर्हि त्वया सचेतनेनैवात्र कथमागतमिति तत्राह । **पूर्वेति** केनचित् अनिर्वाच्येन पूर्वजन्मसुकृतेन अहं तेषां अक्षिगोचरो न भवतीत्यतदक्षिगोचरः । दैवात्तेषाद्दृष्टि-मप्राप्तः सन्नित्यर्थः । निःसृतोऽपि निर्गतः अधुना शिरः स्वमस्तकं पाणिना अपमृशन् दुर्वारापदुल्लङ्घनं अभिनयन्नित्यर्थः । पुनः किं तु अत्रैव चेतनां संज्ञां प्राप्तवानस्मीति शेषः ॥ ९ ॥ किमिदानीमस्माभिः कार्यमित्याशङ्कायामाह । **यावदिति** । भूसुरेभ्यो द्रुह्यन्तीति भूसुरद्रुहः ब्रह्मद्वेषिणः यवनाः तेषां सा वरूथिनी सैन्यं ' वरूथिनी बलं सैन्यम् ' इत्यमरः । एनं ग्राममपि यावन्नैष्यति नागमिष्यति ' इण गतौ इत्यस्माद्धातोः भविष्यति लृट् । तावत्ततः प्रागेव ' यावत्तावच्च साकल्येऽवधौ नामावधारणे ' इति

**भूसुरानिति सभासदः सुधीः प्राह स स्म चरितास्मितो गिरम् ॥११॥ पापिना यवनभूभुजा क्षिताबीश्वरोऽहमिति हन्त जानता। ग्रामसन्ततिरभूदपार्थता सङ्करेण निगमावलिर्यथा॥१२॥ तद्व्रजाम वयमाशु कुत्रचिन्नोचिता क्षणमपीह नः स्थितिः। इत्यसौ समभिधाय तत्सदो निर्ययौ निजजनैः सहालयात् ॥१३॥ संपदालिरिव साधुकारिणं सौरभानिलमिवालिधोरणी। अंशुपालिरिव भानुमन्वगात्तं व्रजन्तमखिलाः पुरप्रजाः ॥१४॥ तामवन्पथि स भूमिभृद्धृति-गौतमीप्रथितमातृकालयम्। प्राप नीपपरिशोभि नासिकात्र्यम्बकाख्यनगरं मनोहरम् ॥१५॥**

---

विश्वः। अत्रभवता पूज्येन 'अत्रभवत्तत्रभवच्छब्दौ' पूज्यवाचकौ। 'पूज्ये वात्रभवांस्तत्रभवांश्च भगवानपि' इत्यमरशेषे। त्वयेतिशेषः अपथेन अमार्गगमनेन यवनभयादिति भावः। गूढं अप्रकाशं यथा तथा आशु द्रुतं गम्यतां एतद्ग्रामात् निर्गम्यताम्। ॥ १० ॥ **इतीति**। इत्येवमुदीर्य उक्त्वा नतमस्तकेन नम्रशिरसा कृतप्रणाम इत्यर्थः। अध्वगे पथिके पारितोषिकं परितोषदानं यवनागमनात्पूर्वमेवोक्तवानिति परितोषेण नृसिंहाचार्येण दत्तं वस्त्रादिकमवाप्य गृहीत्वा निर्यति निर्गच्छति सति सुधीः सुबुद्धिः स नृसिंहाचार्यः चरितास्मितः कदा वा किं भविष्यतीति हरिसंकल्पं को वेदेति कृतमन्दहासः सन् सभासदः भूसुरानिति वक्ष्यमाणरीत्या प्राह स्म जगाद ॥ ११ ॥ तदेवाह **पापिनेति**। क्षितौ क्षितिविषये अहमीश्वर इति जानता अहमेव भूमेः कर्ता नान्य इति मन्वानेन पापिना ब्रह्महत्यादिपापकारिणा यवनभूभुजा म्लेच्छराजेन क्षितौ भुवि ईश्वरः परमात्मा अहमिति जानता सोऽहं ज्ञानवता अत एव पापिना यथा गीतायां 'ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी। आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ॥ यक्ष्ये दास्यामि मोदिष्ये इत्यज्ञानविमोहिताः। अनेकचित्तविभ्रान्ताः मोहजालसमावृताः ॥ प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ' ॥ इति। संकरो नाम ब्रह्मसूत्रस्यापार्थकभाष्यकर्तृत्वेन मिथ्यावादिमतोद्धारकः कश्चिन्मस्करी तेन निगमानां वेदानां अवलिर्यथा पङ्क्तिरिव ग्रामसंततिः ग्रामसमूहः अपार्थिता अपगताश्च ते अर्थाः धनधान्यादिपदार्थाः ते संजाता यस्यामिति अपार्थिता। तारकादित्वादितच्। निगमपक्षे अपार्थाः विपरीता अर्थाः संजाता यस्यामिति अपार्थिता विपरीतार्थवत्त्वेन व्याख्यातेत्यर्थः अभूत्। ' अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु।' इत्यमरः। उपमालंकारः ॥१२॥ **तदिति**। तत् तस्मात्कारणात् अस्य देशस्य म्लेच्छापद्ग्रस्तत्वादित्यर्थः। वयं आशु कुत्रचित् क्वापि देशान्तरे व्रजाम गच्छाम। व्रज गतावित्यस्माद् विधौ लोट्। देशान्तरं वस्तुं व्रजामेत्यर्थः। इह अस्मिन् ग्रामे नोऽस्माकं स्थितिरवस्थानं उचिता न भवति। आसन्नोपद्रवत्वादिति भावः। इत्येवमसौ नृसिंहाचार्यः तत्सदः सभां समभिधाय सभ्यानुक्त्वेत्यर्थः। सदःशब्दो लक्षणया सदस्यवाची। निजजनैः आप्तजनैः सह आलयात् निर्ययौ ॥१३॥ **संपदिति**। साधुकरोतीति साधुकारी श्रुतिविहितभगवदुपासनादिसत्कर्मकर्ता। तं संपदालिः ऐश्वर्यसमृद्धिः इव। सौरभ्यप्रधानोऽनिलः सौरभानिलः। सुगन्धवायुस्तं अलिधोरिणी भ्रमरपङ्क्तिरिव परिमललोभादिति भावः। भानुं सूर्यं अंशुपालिः किरणपङ्क्तिरिव व्रजन्तं ग्रामं विहायान्यतो गच्छन्तं नृसिंहाचार्यं अखिलाः पुरप्रजाः तद्ग्रामवास्तव्यजनाः 'प्रजा स्यात् सन्ततौ जने' इति विश्वः। अन्वगात् अनुसत्य ययौ ॥१४॥ **तामिति**। भूमिभृतः पर्वतस्य धृतिरिव धैर्यं यस्य सः तादृशविपद्यपि अनाकुलचित्त इत्यर्थः। अत एव पथि मार्गे तां प्रजामवन् अन्नदानादिभिः परिपालयन् सन् गौतम्याः गोदावर्याः प्रथितः प्रसिद्धः मातृकालयः मातृगृहमुत्पत्तिस्थानमित्यर्थः तत्तथाभूतः नीपाः कदम्बवृक्षाः 'तूलं

**तत्क्षणश्रुतनिजागमोदितानन्दतुन्दिलमनोभिरादरात् । तत्र सद्भिरभिगम्य पूजितस्त्र्यम्बकेश्वरमसाववन्दत ॥१६॥ मस्तकोरगनिबद्धचन्द्रमस्यन्दनी नवसुधेव सन्ततम् । यज्जटाग्रविगलज्जलोत्करा भाति वृद्धसुमनस्तरङ्गिणी ॥ १७ ॥ यो बिभर्ति गिरिराजकन्यकाविस्तृताम्बकविभावलोकने । एककेन करनीरजन्मना कौतुकादिव कुरङ्गशावकम् ॥ १८ ॥ यस्य कण्ठगरलोत्थकज्जलप्रौढमेचकमहोभिराचिता । तन्महीभृदुपलावलिर्विभामाश्रयत्यमरराण्मणीपतेः ॥ १९ ॥ शेखरीकृतरमाधिभूपदाब्जावपावनधुनीपयोभरम् । तं प्रणम्य शिवमादरादसौ तत्र वासमतनोच्छरद्द्वयम् ॥ २० ॥ तत्पुरे स्थितमथाकलय्य तं नागनाथसुतदत्त**

---

च नीपप्रियककदम्बास्तु हरिप्रियः ' इत्यमरः । तैः परिशोभिते इति नीपपरिशोभि अत एव मनोहरं नासिकात्र्यम्बकाख्यनगरं नासिकात्र्यम्बकं नाम गोदावर्युत्पत्तिस्थलं कश्चिद्गिरिः तत्समीपनगरं प्राप प्राप्तवन् ॥ १५ ॥ **तदिति** । स एव क्षणः तत्क्षणः तस्मिन् । श्रुतेन आगन्तुकमुखादाकर्णितेन निजागमेन संजातः य आनन्दः तेन तुन्दिलं बृहत्कुक्षिपूर्णमित्यर्थः । मनो येषां तैः तथोक्तैः । स्वागमेन तुष्टमनोभिः । तत्र नासिकत्र्यम्बकपुरे सद्भिः वर्तमानैः जनैरिति शेषः । यद्वा सद्भिरिति द्विरावृत्त्या योजनीयम् । सद्भिः सत्पुरुषैः अभिगम्य प्रत्युद्गम्य पूजितः वन्दनादिभिः संभावितः असौ नरसिंहाचार्यः त्र्यम्बकेश्वरं तद्गिरिस्थरुद्रदेवमित्यर्थः । अवन्दत वन्दितवान् ॥ १६ ॥ तमेव त्रिभिर्विशिनष्टि । **मस्तकेति** । सततं यस्य शिवस्य जटाग्रात् विगलन् प्रस्रवन् जलानां उत्करो राशिः धारेत्यर्थः । यस्याः सा तथोक्ता । सुमनसां देवानां तरङ्गिणी नदी गङ्गा वृद्धसुमनस्तरङ्गिणी वृद्धगङ्गा गोदावरी मस्तके उरगैः सर्पैः यो निबद्धश्चन्द्रमाः तस्मात्स्यन्दते क्षरतीति स्यदिनी नवसुधेव नूतनामृतमिव भाति । नासिकत्र्यम्बके शिवप्रतिमायाः शिरसः सकाशात् गोदावरी स्यन्दते इति प्रसिद्धम् । तदम्बुधाराया हरमस्तकस्थचन्द्रादुरगबन्धनिर्बन्धवशाद्गलदमृतत्वेनोत्प्रेक्षणादुत्प्रेक्षा ॥ १७ ॥ **स इति** । यः शिवः गिरिकन्यकायाः पार्वत्याः विस्तृतयोः विशालयोः अम्बकयोः नेत्रयोः विभेव विभा तस्या विलोकने विषये कौतुकात् कुतूहलात् इव इत्युत्प्रेक्षायाम् । एककेन एकेन ' एकाकी त्वेक एककः ' इत्यमरः । करवारिजन्मना पाणिकमलेन कुरङ्गशावकं हरिणशिशुं बिभर्ति । पार्वतीनयनसौन्दर्यं हरिणनयने वर्तते वा न वेति द्रष्टुमिव हरिणं बिभर्ति इत्यनेन उपमानादुपमेयस्याधिक्यकथनरूपो व्यतिरेको व्यज्यते ॥ १८ ॥ **यस्येति** । तस्य महीभृतः त्र्यम्बकाद्रेः उपलावलिशिलापङ्क्तिः यस्य शिवस्य कण्ठे यद्गरलं कालकूटविषं तस्मादुत्थैः उत्थितैः कज्जलवत्प्रौढमेचकैः अत्यन्तनीलैः महोभिः कान्तिभिः आचिता व्याप्ता सती अत एव अमरराण्मणीनां इन्द्रनीलरत्नानां ततेः समूहस्य विभां शोभां आश्रयति । अत्र मणिशब्दः ईकारान्तः स्त्रीलिङ्गः ' मणिर्द्वयोरित्यभिधानात् । सौत्रामणीनां प्रभया मणीनां इत्यादिप्रयोगदर्शनाच्च । अत्र त्र्यम्बकाद्रिशिलानां सर्वासां स्ववर्णत्यागेन गरलवर्णसंक्रान्त्या इन्द्रनीलत्वापादनात् तद्गुणालंकारः । ' तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणाहृतिः । ' इति लक्षणात् । स च अन्यधर्मस्य अन्यत्रायोगाद्विभामिव विभां इति निदर्शनाक्षेपान्निदर्शनेन संकीर्यते । ताभ्यां च गरलकान्तेः सकलशिलामेचकीकरणासंबन्धेऽपि तत्संबन्धोक्तिरूपातिशयो व्यज्यते इत्यलंकारेणालंकारध्वनिरिति संग्रहः ॥ १९ ॥ **शेखरीति** । शेखरः शिरोमाल्यम् ' शिखास्वापीडशेखरौ ' इत्यमरः अशेखरः शेखरः संपद्यमानः शेखरीकृतः । अभूततद्भावे च्विः । शिरसा धृतं इत्यर्थः । रमाधिभुवः श्रीपतेः हरेः तं

**पण्डितः । सङ्गमोपपदनीरनामकग्राममानयदुदञ्चितोत्सवः ॥ २१ ॥ वास्तु तत्र स वितीर्य निस्तुलानेकवस्तुविभवप्रशस्तिमत्।माननोचितगुणं दिने दिने बहुमानयदमुं विचक्षणः ॥२२॥ ब्राह्म एव स मुहूर्त उत्थितो भावयन् हृदि रमापतेः पदम् । प्रातरपचितसत्क्रियोऽन्वहं व्याकरोन्निजजने सदागमान् ॥ २३ ॥ तत्र दत्तसचिवाश्रयाः परे मायिनोऽनृतमताभिमानिनः । अन्तिकं समधिगत्य शुश्रुवुस्तस्य तादृशवचोविजृम्भणम् ॥ २४ ॥ अग्रतोऽस्य बहवोऽपि तेऽधरस्पन्दने खगपतेरिवोरगाः । अक्षमाः सपदि हन्त जज्वलुः स्वान्त एव**

---

पदस्य चरणस्य आप्लवेन अभिषेचनेन पावनायाः पवित्रायाः धन्यायाः गङ्गानद्याः पयसां भरः येन सः तथोक्तम् । ' यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्नि विधृतेन शिवः शिवोऽभूत् । ' इति भागवतोक्तं शिवं महादेवं आदरात्प्रणम्य नत्वा असौ नृसिंहाचार्यः तत्र नासिकत्र्यम्बकपुरे शरद्द्वयं वर्षद्वयं ' कालाध्वनोरत्यन्तसंयोगे ' इति द्वितीया । वासमकरोत् । उवासेत्यर्थः । ' संवत्सरो वत्सराब्दौ हायनोऽस्त्री शरत्समाः । ' इत्यमरः ॥ २० ॥ **तदिति** । अथानन्तरं नागनाथस्य सुतः दत्तपण्डितः दत्तोजीपण्डितः कश्चन महाराष्ट्रमन्त्री तस्मिन् पुरे स्थितं तत्पुरस्थितं अमुं नृसिंहाचार्यमाकलय्य आगन्तुकमुखादाकर्ण्य उदञ्चितोत्सवः प्रघटितवाद्यवाहनाद्युत्सवः सन् सङ्गमेत्युपपदं यत् तत् नीरेति नाम यस्य सः सङ्गमोपपदनीरनामकः संगमनीराख्य इत्यर्थः । तं ग्रामं आनयत् आनीतवान् । नयतेर्द्विकर्मको लुङ् ॥ २१ ॥ **वस्त्विति** । विचक्षणः सदनुग्रहसंपादननिपुणः सः दत्तपण्डितः तत्र संगमनीरपुरे निस्तुलानि निरुपमानि अनेकानि बहुनि वस्तूनि शयनासनादीनि तेषां विभवः समृद्ध्या प्रशस्तिः श्लाघ्यता अस्तीति प्रशस्तिमत् वास्तु गृहं ' वास्तुधामकुलानि च ' इति यादवः । वितीर्य नृसिंहाचार्याय दत्त्वा माननोचिताः संभावनार्हाः गुणाः सौशील्यादयो यस्य तममुं नृसिंहाचार्यं दिने दिने प्रतिदिनं बहुमानयत् बहुमानितवान् ॥ २२ ॥ **ब्राह्म इति** । स नृसिंहाचार्यः अन्वहं प्रतिदिनं ब्राम्हे मुहूर्ते एव उत्थितः सन् रमापतेः श्रीपतेः पदं चरणं हृदि भावयन् चिन्तयन् ' ब्राम्हे मुहूर्ते चोत्थाय चिन्तयेदात्मनो हितम् ' । इति याज्ञवल्क्यः । प्रातः प्रातःकाले ' सायं साये प्रगे प्रातः प्रभाते निकषान्तिके । ' इत्यव्ययेष्वमरः । अपचितसत्क्रियः अनुष्ठितस्नानादिसत्कर्मा सन् निजजने स्वशिष्यजनविषये सदागमान् सच्छास्त्राणि व्याकरोत् व्याख्यातवान् । शिष्यजनाय मध्वशास्त्रमुपदिदेशेत्यर्थः ॥ २३॥ **तत्रेति** । तत्र पुरे दत्तसचिवः दत्तमन्त्री आश्रयो येषां ते तदुपजीविन इत्यर्थः । अनृतमते जगन्मिथ्येति मते अभिमानिनः अभिनिवेशवन्तः परे अन्ये मायिनः मायावादिनो विद्वांसः तस्य नृसिंहाचार्यस्य अन्तिके समीपं अधिगत्य प्राप्य तादृशाश्रुतपूर्ववचसः व्याख्यानरूपवचनस्य विजृम्भणं प्रौढिं शुश्रुवुः शृण्वन्ति स्म ॥ २४ ॥ **अग्रत इति** । बहवोऽपि ते मायिनः खगपतेः गरुडस्य अग्रतः उरगाः सर्पा इव अस्य नृसिंहाचार्यस्य अग्रतः पुरस्तात् अधरस्पन्दनेऽपि अक्षमाः असमर्थाः सन्तः आक्षेपे किमुतेतिभावः । अत एव परिशान्तः धियः बुद्धेर्मदो गर्वो येषां ते तथोक्ताः सन्तः वयमेव शास्त्रेषु निरङ्कुशबुद्धयः इति विचारात् प्राप्तं अहङ्कारं विसृष्टवन्त इत्यर्थः । स्वान्ते मनस्येव सपदि शीघ्रं जज्वलुः कोपात्परितेपुः इत्यर्थः । तत्प्रतिकारकरणासामर्थ्यादिति भावः । ' स्वान्तं हृन्मानसं मनः ' इत्यमरः । हन्तेति हर्षे । विमतपराभवकथनेन कविहर्षः सूचितः ' हन्त हर्षेऽनुकम्पायाम् '

परिशान्तधीमदाः ॥ २५ ॥ ते तदा किमपि कर्मकैतवं कर्तुमत्र धृतराष्ट्रनन्दनाः । भीमसेन इव तत्पदद्वयसेवकेऽपि विदधुर्मिथो मतिम् ॥ २६ ॥ वेत्ति सर्वमिति योऽत्र घुष्यते वैष्णवैः सह नृसिंहनामकः । काव्यनाटककलानभिज्ञ इत्यब्रुवन् सचिवमेत्य ते रहः ॥ २७ ॥ एवमीरितममीभिरीर्ष्यया सोऽवधार्य हृदि नैषधार्थिनः । प्राहिणोन्महिसुरांस्तदन्तिके पठ्यतामितिपरीक्षणोत्सुकः ॥ २८ ॥ ते तथेत्य नरसिंहमप्यमी वैरसेनिचरितं हि नो भवान् । वक्तुमर्हति विचक्षणाग्रिमेत्यूचुरानतिपुरःसरं वचः ॥२९॥ ओमिति स्मितसमञ्चिताननः स द्विजाननुनिशात्ययेऽन्वहम् । नैषधं प्रतिपदप्रकल्पिताक्लिष्टभूरिसरसार्थमभ्यधात् ॥ ३० ॥ काव्यकौशलमिदं हि कर्कशाशेषशास्त्रविदुषीह नाद्भुतम् । लङ्घिताखिलगभीरवारिधेः पल्वलालितरणं पटोः कियत् ॥ ३१ ॥ विश्वमार्गविधुतार्गलामदःशेमुषीमिति परीक्षयन्मुहुः । निश्चिकाय नरसिंहमेव तं वादिनोऽस्य सचिवः स फेरवान् ॥ ३२ ॥

---

इत्यमरः ॥ २५ ॥ त इति । तदा समये ते मायिनः भीमसेने भीमसेनविषये धृतराष्ट्रनन्दनाः दुर्योधनादय इव तस्य भीमसेनस्य पदद्वयासेवके भीमसेनस्य मुख्याप्राणरूपत्वात् तत्पादद्वयभजकेऽपि तादृक्महानुभावेऽपि इत्यपेरर्थः । अत्र अस्मिन्नृसिंहाचार्यविषये किमपि कैतवं धौर्त्यं कर्म कर्तुं मिथः परस्परं रहसि वा ' मिथोऽन्योन्यं रहस्यपि ' इत्यमरः । मतिं विदधुः संकल्पितवन्त इत्यर्थः ॥ २६ ॥ कैतवप्रयोगमेवाह वेत्तीति । ते मायिनः रहः एकान्ते सचिवं दत्तपण्डितं एत्य प्राप्य अस्मिन्नगरे यो नृसिंहाचार्यः नरसिंहनामकः स द्विजः काव्यनाटककलासु विद्यासु विषये अनभिज्ञः अविज्ञातकाव्यनाटकादिविद्यारसः इत्येत अब्रुवन् उक्तवन्त इत्यर्थः ॥ २७ ॥ एव मिति । सः दत्तपण्डितः अमीभिः मायिभिः ईर्ष्यया एवं उक्तरीत्या ईरितं उक्तं वचनं हृदि अवधार्य मनस्येवं गृहीत्वा बहिरप्रकाश्येत्यर्थः नैषधं श्रीहर्षकृतनैषधनामकं काव्यं अर्थयन्ते इत्यर्थिनः नैषधं गुरुमुखेन पठितुकामान् महीसुरान् कांश्चन द्विजान् तस्य नृसिंहाचार्यस्य अन्तिके समीपे पठ्यतां भवद्भिरिति शेषः । इत्येवमुक्त्वेति शेषः । प्राहिणोत् प्रहितवान् । प्रपूर्वाद्धिनोतेर्लङ् ॥ २८ ॥ तमिति । द्विजा अपि तथा दत्तपण्डितोक्तप्रकारेण तं नृसिंहं एत्य प्राप्य हे विचक्षणाग्रिम भवान् नोऽस्मभ्यं वीरसेनस्य राज्ञोऽपत्यं पुमान् वैरसेनिः नलः तस्य चरितं नैषधमित्यर्थः । हीत्यवधारणे । वक्तुमर्हति । शेषे प्रथमः । इति एवं आनतिपुरःसरं नमस्कारपूर्वकं ऊचुः ॥ २९ ॥ ओमिति । स नृसिंहाचार्यः ओमित्यङ्गीकारे ओं तथा वदामीत्युक्त्वेतिशेषः । ' ओमेव परमं मतम् ' इत्यमरः । स्मितेन मन्दहसितेन समञ्चिताननः अलंकृतास्यः सन् इदं कियन्मात्रं ममेति स्मित्वेत्यर्थः । अन्वहं निशात्यये प्रातःकाले द्विजाननुदिश्य पदे पदे प्रतिपदं प्रकल्पिताः निजबुद्धिबलादूहिताः अक्लिष्टाः निःसंशयाः भूयः अनेके सरसाः रसयुक्ताः अर्थाः यस्मिन्कर्मणि तद्यथा भवति तत्तथा नैषधमभ्यधात् जगाद । अभिपूर्वाद्दधातेर्लङ् ॥ ३० ॥ इदं चोद्यं किमित्याशङ्क्य कविः समाधत्ते काव्येति । कर्कशानि काठिनानि अशेषशास्त्राणि वेत्तीति विद्वान् तस्मिन् इह नरसिंहे इदं बह्वर्थकल्पनारूपं काव्येषु कौशलं निपुणत्वं अद्भुतं न भवति । इतिः हेतौ । ' देवालयं भक्षयतः कपाटं पर्पटायते । इति भावः । तत्र दृष्टान्तमाह लङ्घिताखिलगभीरवारिधेः सप्तसमुद्रान् लाङ्घितवतः पटोः कस्यचित् समर्थस्य पल्वलालेः वेशन्तपङ्क्तेः तरणं लङ्घनं कियत् न दुष्करमित्यर्थः । ' वेशन्तः पल्वलं चाल्पसरो वापी तु दीर्घिका ' । इत्यमरः ॥ ३१ ॥ विश्वेति । स सचिवः दत्तपण्डितः विश्वेषु मार्गेषु समस्तविद्यास्वित्यर्थः ।

**जातुचित् निजसभागतं मुदा तं प्रणम्य शिरसा कृतार्हणः । शृण्वतां च सुधियाममात्य इत्यूचिवान् धुरि गरीयसीं गिरम् ॥ ३३ ॥ अन्तरूर्जितगुणोत्करं तमोहारिणं द्युतिविभासिताशकम् । त्वां सुवृत्त महतां विभूषणं सत्कुलार्णवमणिं विभावये ॥ ३४ ॥ त्वय्युदारतरगोगणेऽधुना भाति मायिकृतिनो गतस्मयाः । चण्डरोचिषि विजृम्भिते क्व वा तादृशो द्धुरतमिस्रताण्डवम् ॥ ३५ ॥ इत्यनर्घ्यतरभूषणादिकं दत्तवन्तमथ दत्तपण्डितम् । सोऽभिनन्द्य सुजनावलीवृतः पैठणीपुरमगादगाधहृत् ॥ ३६ ॥ तत्र साधुरचिते मठान्तरे चित्रवाक्यरचनातिविस्मितान् । सत्रपांश्च रचयन्स वादिनः सूत्रभाष्यमवदत्सुधीजने ॥ ३७ ॥**

---

विधुतार्गलां निर्गलां अप्रतिहतां अस्य नृसिंहस्य शेमुषीं अदःशेमुषीं तां इत्युक्तरीत्या मुहुः परीक्षयन् सन् तं नृसिंहमेव अस्य वादिनो प्रतिवादिनः विमतान् फेरवान् जम्बूकानेव निश्चिकाय । सिंहस्य जम्बूकानां च यदन्तरं तदन्तरं अस्य च प्रतिवादिनां चेति निश्चितवान् । निःपूर्वाच्चिनोतेर्लिट् ॥ ३२ ॥ **जात्विति** । जातुचित् मुदा न तु निर्बन्धेन निजसभागतं तं नरसिंहं शिरसा प्रणम्य कृतार्हणः कृतपूजः 'पूजा नमस्यापचितिः सपर्यार्चार्हणाः समाः' इत्यमरः । अमात्यो दत्तपण्डितः शृण्वतां स्ववचनमाकर्णयतां सुधियां विदुषां च धुरि अग्रे गरीयसीं अर्थतो गुरुतरां 'प्रियस्थिर' त्यादिना गुरोर्गरादेश ईयसुन् । गिरं इति वक्ष्यमाणरीत्या ऊचिवान् उक्तवान् । 'उपेयिवाननाश्वाननूचानश्च' इति क्वसन्तनिपातनात्साधुः ॥ ३३ ॥ तदुक्तिमेव द्वाभ्यामाह **अन्तरिति** । सुवृत्त हे शोभनचरित्र अन्यत्र सुतरां वर्तुलाकार अन्तः हृदये ऊर्जितः सारवान् गुणानां सौजन्यादीनां उत्करो राशिर्यस्य तं तथोक्तम् । अन्यत्र अन्तरूर्जितगुणोत्करं अन्तर्गुम्फितदृढतन्तुसन्तानम् । 'गुणास्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु ।' इति कोशः । तमो हारिणं ज्ञानोपदेशेन सतां अज्ञाननिवर्तकं अन्यत्र स्वतेजसा अन्धकारनिवारकम् । द्युतिविभासिताशकं स्वतेजःप्रकाशितदिशं समानमेतत् । महतां ज्ञानिनां विभूषणं अलंकारकरणं त्वां सत् प्रशस्तं कुलं वंशो तदेवार्णवस्तस्य मणिं अर्णवे माणिरिव सत्कुले उत्पन्नमित्यर्थः । विभावये उत्प्रेक्षे । अहमिति शेषः । अत्र सत्कुले अर्णवत्वरूपणात् प्रकृताप्रकृतश्लेषः ॥ ३४ ॥ **त्वयीति** । उदारतरगोगणे प्रौढतरवाक्प्रपञ्चे त्वयि भाति सति 'भा दीप्तौ' इत्यस्माल्लटः शत्रादेशः । अधुना मायावादिविद्वांसः गतस्मयाः गतदर्पाः बभूवुरिति शेषः । उक्तार्थं दृष्टान्तकथनेन द्रढयति । उदारतरगोगणे अतिमात्ररश्मिसमूहे चण्डरोचिषि उष्णरश्मौ सूर्ये विजृम्भिते सति तादृशानां निरुपमानां उद्धुराणां अप्रतिहतानां तमिस्राणां तिमिराणां ताण्डवं नर्तनं प्रावल्यमित्यर्थः क्व वा न क्वापीति काकुः ॥ 'स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौर्लिङ्गं चिन्हशेफसोः' इत्यमरः ॥ ३५ ॥ **इतीति** । अगाधहृत् गभीरहृदयः स नृसिंहः इत्येवमुक्त्वेति शेषः । अनर्घ्यतरभूषणादिकं आदिशब्देन वस्त्रादीनां ग्रहणं दत्तवन्तं स्वस्मै समर्पितवन्तं तं दत्तपण्डितं अभिनन्द्य आशीर्वचनेन संमोद्य अथ अनन्तरं सुजनावलीवृतः सन् पैठणीपुरमगात् ॥ ३६ ॥ **तत्रेति** । सः नृसिंहाचार्यः तत्र पैठणीपुरे साधुरचिते पूर्वैः कृते मठस्य कस्यचित् यतिनिवासस्थानयोग्यस्य अन्तरे मध्ये स्थित्वेतिशेषः । वादिनः मायावादिपण्डितान् चित्राणां बहुविधानां वाक्यानां शास्त्रव्याख्यानरूपाणां रचनया हेतुना अतिविस्मितान् अहो अस्य निर्गलावाग्वैखरीत्याश्चर्ययुक्तान् तथा सत्रपान्

वत्सरार्धमुषितः स तत्पुरे भर्त्सिताखिलविपक्षरोहिषः । मेरुकन्दरमिवाथ केसरी पाण्डुरङ्गमगमद्बुधाश्रयम् ॥३८॥ भीमरथ्यनुतरङ्गपाणिभिः फुल्लवारिजकुलं विवृण्वती । मञ्जुलालिरवमन्त्रपूर्वकं यत्र पूजयति विट्ठलेश्वरम् ॥३९॥ तिष्ठतीह परदैवते प्रजाकामितार्थकलनापटीयसि । किं मयेत्यखिलसस्यमण्डली न प्ररोहति यदङ्कभूमिषु ॥ ४० ॥ तादृगेत्य नगरीललाम सः प्राविशत्सदनमिन्दिरापतेः । तद्विभूषणसमुज्ज्वलन्मणीभानुपुञ्जपरिलीढदिक्तटम् ॥ ४१॥ अत्र मत्पदजुषां ददाम्यहं शंखकप्रभृतिशेवधीनिति । कम्बुराजकलितेन पाणिना

---

स्वमतनिराकरणेन सलज्जांश्च रचयन् कुर्वन् सन् सुधीजने विषये सूत्रभाष्यमवदत् । ब्रह्मसूत्रभाष्यं व्याचख्यौ इत्यर्थः ॥ ३७ ॥ **वत्सरेति** । स नृसिंहः तस्मिन्पुरे तत्पुरे वत्सरार्धं षण्मासान् 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । उषितः स्थितः वसः कर्तरि क्तः । भर्त्सिता वादेन विजित्य निराकृताः अखिलाः विपक्षा विमता एव रौहिषाः मृगविशेषाः येन स तथोक्तः सन् 'कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहिषाः' इत्यमरः । अथ अनन्तरं केसरी सिंहः मेरोः सुमेरोः कन्दरं गुहामिव बुधानां विदुषां आश्रयं पाण्डुरङ्गं पाण्डुरङ्गनामकपुरं अगमत् जगाम । रौहिषग्रहणं केसरिसाम्यादिति ज्ञेयम् । बुधानामाश्रयमित्यत्र मेरुपक्षे बुधानां देवानां आश्रयकरणमिति रूपकश्लेषानुप्राणितोऽयमुपमालंकारः॥ ३८ ॥ तत्पुरमेव द्वाभ्यां वर्णयति **भीमरथीति** । यत्र यस्मिन् पुरे भीमरथी भीमरथीनाम नदी 'गोदावरी भीमरथी कृष्णवेणी मलापहा'। इति नदीविशेषे अभिधानम् । तरङ्गा एव पाणयः तैः करणैः फुल्लवारिजकुलं विकचाम्भोजसमूहं विवृण्वती प्रकटयन्ती सतीत्यर्थः । 'नाभ्यस्ताच्छतुः' इति निषेधान्नुमभावः । मञ्जुलनां मनोज्ञानां अलीनां रव एव मन्त्राः पूर्वे आदिर्यस्मिन् कर्माणि तत्तथा । विठ्ठलेश्वरं विठ्ठलनामपरमात्मानं पूजयति । अत्र पाण्डुरङ्गपरिसरे प्रवहन्त्या भीमरथ्याः विठ्ठलेश्वरपूजकत्वेनोत्प्रेक्षणाद् व्यञ्जकाप्रयोगाद्गम्योत्प्रेक्षा । सा च तरङ्गेषु पाणित्वरूपणाद् अलिरवस्य मन्त्रत्वनिरूपणाच्च रूपकेण संकीर्यते । ताभ्यां च पुरस्य लोकोत्तरमहिमा व्यज्यते इत्यलंकारेणालंकारध्वनिः ॥३९॥ **तिष्ठतीति** । इह पुरे प्रजाभिः ये कामितार्थाः तेषां कलनायां घटनायां पटीयान् पटुतरः । पटुशब्दादतिशयार्थे ईयसुन् । परदैवते विठ्ठलनामपरमात्मानि तिष्ठति स्थितवति सति 'ष्ठा गतिनिवृत्तौ' इत्यस्माल्लटः शत्रादेशः । मया किंकार्यमस्तीत्यर्थः । इत्येवं मत्वेत्युप्रेक्षा । अखिला सस्यमण्डली कलमादिसस्यपाङ्क्तिः यस्य पाण्डुरङ्गस्य अङ्कभूमिषु समीपस्थलेषु न प्ररोहति नोत्पद्यते । पाण्डुरङ्गस्य परितो योजनपरिमितभूतलेषूसान्यपि नोत्पद्यन्ते सस्यानीति प्रसिद्धम् । तन्मूलाचेयमुत्प्रेक्षा ॥ ४० ॥ **तादृगिति** । स नृसिंहः तादृग् तादृशं नगरीललाम पुरीप्रधानं 'ललामं पुच्छपुण्ड्राश्वभूपाप्राधान्यकेतुषु' । इत्यमरः । ललमं च ललम च इत्यभिधानान्नकारान्तोऽयं शब्दः । तदेत्य प्राप्य तस्य विठ्ठलाख्येन्दिरापतेः विभूषणेन समुज्जलन्तीनां मणीनां भानुपुञ्जैः किरणसमूहैः परिलीढदिक्तटं व्याप्तदिगन्तं इन्दिरापतेः श्रीवल्लभस्य विठ्ठलस्य सदनं देवालयं प्राविशत् प्रविष्टवान् ॥ ४१ ॥ अथ द्वाभ्यां विठ्ठलविग्रहं वर्णयति **अत्रेति** । अत्र पुरे मत्पदजुषां मच्चरणसेविनां पुंसामिति शेषः । शंखकप्रभृतिशेवधीन् शंखादिनिधीन् अहं ददामि । निधिर्ना शेवधिर्भेदाः पद्मशंखादयो निधेः । ' इत्येवं कम्बुराजकलितेन शंखश्रेष्ठशोभितेन धृतशंखेनेत्यर्थः । तस्मात् शंखवत्पाणेरितरेण दानमुद्राभृता दक्षिणकरेणेत्यर्थः । आशंसतीति आशंसिनं तं ऐक्षतेत्युत्तरेणान्वयः ।

**शंसिनं तदितरेण च स्फुटम् ॥ ४२ ॥ शम्बराहितपितुर्वराम्बरं बिम्बमम्बुधिसुताम्बकोत्सवम् । सोऽसितद्युतिविडम्बिताम्बुदं लम्बमानसुममाल्यमैक्षत ॥ ४३ ॥ तस्य पादयुगले सदार्पितस्वीयमानसरोरुहोऽप्ययम् । मौलिना कृतनतिर्मनोरमाण्यादरात्सरसिजानि चार्पयत् ॥ ४४ ॥ प्रत्यहं प्रणतिपूर्वकैः स्तवैरित्यनन्यमनसामुना हरिः । तोषितोऽभवदुदारशीलतोऽशेषदेशविदुषामपि व्रजः ॥ ४५ ॥ मध्वयोगिचरणाब्जमार्दवाभिज्ञभूतलतयातिपावनम् । प्राक्तनं मठमसावकारयत्तत्र नूतनमिव चित्रदारुभिः ॥ ४६ ॥ तत्पुरोदयधरे प्रकाशिते गोगणेन नरसिंहभास्वता । सद्विजा मुमुदुरेककं विना तत्र मायिनरसाख्यकौशिकम् ॥ ४७ ॥ वादतः सदसि दुर्जनोऽमुना निर्जितः स विजयापुरासिकम् । लिङ्गयाख्य-**

---

पाण्डुरङ्गविठ्ठलः सव्येन पाणिना शंखं दक्षिणेन दानमुद्रां बिभर्तीति प्रसिद्धस्फुटमित्युत्प्रेक्षा ॥ ४२ ॥ **शम्बरेति** । असितद्युत्या श्यामकान्त्या विडम्बिताम्बुदं अनुकृतजलदं मेघवन्नीलकान्तिमित्यर्थः । लम्बमानसुममाल्यं कण्ठलम्बिकुसुममालिकं वराम्बरं कटिबद्धदिव्यवसनं अत एव अम्बुधिसुतायाः श्रीदेव्या अम्बकयोः नेत्रयोः उत्सवं उत्सवभूतं हर्षजनकमित्यर्थः । अतिसुन्दरत्वादिति भावः । 'अम्बकं नयनं नेत्रम्' इति रभसः । शम्बराहितस्य शम्बरारेः स्मरस्य पितुः हरेः विठ्ठलस्य बिम्बं विग्रहं स नरसिंहाचार्य अवैक्षत । बिम्बशब्दः पुल्लिङ्गः । पूर्वश्लोके आशंसिनमिति विशेषणस्य पुल्लिङ्गत्वात् । 'बिम्बोऽस्त्री मण्डलं त्रिषु' इत्यमरः । अत्र सानुस्वारवर्णस्यासकृदावृत्त्या वृत्त्यनुप्रासः शब्दालंकारः ॥ ४३ ॥ **तस्येति** । तस्य हरेः पादयुगले सदा सततं अर्पितं स्वीयं मानसमेव सरोरुहं येन सः तथा भूतोऽपि अयं नरसिंहः मौलिना शिरसा कृतनतिः सन् आदरात् मनोरमाणि सरसिजानि कमलानि च अर्पयत् समर्पितवान् । अत्र सन्ततसमर्पितसरोरुहोऽपि सरसिजानि चार्पयत् इति विरोधः । निरन्तरतत्पदद्वयध्यानयुक्त इति परिहारः । अत एव विरोधाभासोऽलंकारः ॥ ४४ ॥ **प्रत्यहेति** । इति एवं प्रकारेण अन्यस्मिन् वस्तुनि मनो यस्य सोऽन्यमनाः स न भवतीति अनन्यमनाः एकाग्रचित्तः तेन अमुना नृसिंहेण प्रत्यहं प्रतिदिनं प्रणतिपूर्वकैः स्तवैः स्तुतिभिः करणैः हरिस्तोषितः प्रसादितः अभवत् । तथा उदारशीलतः नृसिंहस्य अतिमात्रसद्वर्तनात् अशेषदेशेषु ये विद्वांसस्तेषां व्रजोऽपि तोषितोऽभूदिति संबन्धः । न केवलं श्रीहरेरेव सज्जनानामपि अनुग्रहं सम्पादयामासेत्यर्थः ॥ ४५ ॥ **मध्वेति** । असौ नृसिंहः तत्र पाण्डुरंगक्षेत्रे मध्वयोगिनश्चरणाब्जस्य यन्मार्दवं मृदुत्वं तदभिजानतीत्यभिज्ञं भूतलं यस्य तस्य भावस्तत्ता तया हेतुना अतिपावनं अत्यन्तपवित्रं श्रीमदानन्दतीर्थभगवत्पादैः अधिष्ठितपूर्वमित्यर्थः । अत एव प्राक्तनं पुरातनं मठं चित्रैः नानाविधैः दारुभिः तूणादिदारुभिः नूत्नं नूतनमिव इदानीं निर्मितमिव अकारयत् शिल्पिभिः कारयामासेत्यर्थः ॥ ४६ ॥ **तदिति** । नृसिंह एव भास्वान् सूर्यः तेन कर्त्रा गोगणेन वाक्समूहेन सुदर्शनव्याख्यारूपेण करणेन तदेव पुरं तत्पुरं पाण्डुरङ्गमेव उदयधरः उदयाद्रिः 'महीध्रः शिखरिक्ष्माभृदहार्यधरपर्वताः' इत्यमरः । तस्मिन् प्रकाशिते शोभिते सति । सूर्यपक्षे गोगणेन किरणसमूहेनेति ज्ञेयम् । तत्र पुरे एककं एकं मायी चासौ नरसाख्यश्च मायी नरसनामा स एव कौशिकः उलूकः 'महेन्द्रगुग्गुलूलूक व्यालग्राहिषु कौशिकः' इत्यमरः । तं विना तमेकं विहाय तस्य ईर्ष्याग्रस्तत्वात् कौशिकस्य सूर्योदये दृष्टिप्रतिबन्धत्वाच्चेति भावः । सन्तश्च ते द्विजाश्च चक्रवाकादिपक्षिणश्चेति गम्यते । मुमुदुः मुमुदिरे ननन्दुः । तेषामुभयत्रोल्लासकरत्वादितिभावः । श्लेषानुप्राणितरूपकालंकारः॥४७॥नरसस्य पराजयवृत्तां तमेवाह **वादत इति** । अमुना नृसिंहचार्येण सदसि वादतः शास्त्रवादान्निर्जितः पराजितः दुर्जनः स

**मभजद्द्विजं भिया गूढमाहितपलायनो निशि ॥ ४८ ॥ वैष्णवाग्रिममभुं सशिष्यकं प्रेषिताप्तजनवाहनादिकः । आनिनाय विजयापुरं मुदा लक्ष्मपण्डितवरो यदृच्छया ॥ ४९ ॥ तेन धूर्जटिपदेन संश्रुतस्वीयभूरिचरितेन चार्थितः । तन्निकेतनमगान्नृकेसरी याचना फलवती कृपालुषु ॥ ५० ॥ तत्सभाजितममुं सदग्रिमं प्राग्जितोऽपि परिचारकान्वयः । अभ्यधत्त नरसोऽभ्यसूयया जृम्भिताग्रहनिराकृतत्रपः ॥ ५१ ॥ केन सृष्टमखिलं चराचरं केन वा प्रतिदिनं प्रबोधवत् । ब्रह्म केन समुपैति सज्जनो वेत्सि चेदिह वदैकमुत्तरम् ॥ ५२ ॥ तन्निशम्य नरसेरितं वचः सस्मितोऽयमुदितोदितान्वयः । विस्मितान् विरचयन्सभासदो वाक्यमम्बुदगभीरमाददे ॥ ५३ ॥ कद्वद शृणु समीरितं त्वया केन चेति विषयत्रयेऽपि**

---

नरसः इति कश्चिन्मायावादी विद्वान् निशि रात्र्यां परैरविज्ञातं यथा तथा आहितपलायनः कृतविद्रवणः सन् भिया भयेन विजयापुरे असिका स्थितिर्यस्य तं विजयापुरासिकं विजयापुरे स्थितमित्यर्थः । लिङ्गयेत्याख्या यस्य तं लिङ्गयाख्यं लिङ्गोजीनामकं कंचन राजवेश्माधिकारिणं द्विजं व्यापारिणं अभजत् आश्रितवान् नरसिंहाचार्यभयान्महदाश्रयं चकारेत्यर्थः ॥ ४८ ॥ **वैष्णवेति** । लक्ष्मणपण्डितवरः लक्ष्मणाख्यः विजयापुरस्थकश्चिद्वैष्णवमन्त्रिश्रेष्ठः यदृच्छया स्वेच्छया न तु परनिर्बन्धादिति भावः । वैष्णवाग्रिमं वैष्णवश्रेष्ठं सशिष्यकं शिष्यजनावृतं अमुं नृसिंहाचार्यं मुदा हर्षेण प्रेषितः तस्मै प्रहितः आप्तजनः वाहनं आन्दोलिका च आदिर्येन स तथोक्तः सन् 'शेषाद्विभाषा' इति कप्प्रत्ययः । आदिना वस्त्रालंकारसंग्रहः । विजयापुरं आनिनाय आनीतवान् । नयतेर्द्विकर्मत्वम् ॥ ४९ ॥ **तेनेति** । नृकेसरी नरसिंहाचार्यः संश्रुतः स्वीयभूरिचरितेन आकर्णितः स्वकीयनानाविधपाण्डित्यचरित्रेणधूर्जटिरितिपदं चिह्नं नामेत्यर्थः यस्य सः धूर्जटिपदः । 'कृशानुरेताः सर्वज्ञो धूर्जटिर्नीललोहितः' । इत्यमरः । धूर्जटिशब्दस्य रुद्रपर्यायत्वात् लिङ्गयाख्य इत्यर्थः । लिङ्गस्य रुद्रपर्यायत्वादिति ज्ञेयम् । तेन स पूर्वोक्तो नरसाश्रितो मन्त्री तेन अर्थितः सन् तस्य लिङ्गोजेः निकेतनं मन्दिरं अगात् अगमत् । न नु विमतस्य गृहं कथमगात् इति तत्रार्थान्तरं न्यस्यति । याचने सति । तथा हि कृपालुषु करुणापरेषु महत्सु विषये याचना परकृत प्रार्थनाफलवती सफला भवतीति शेषः । महान्तः कारुणिकत्वात् शरणागतं शत्रुमपि अनुगृह्णन्तीत्यर्थः ॥ ५० ॥ **तदिति** । प्राक् पूर्वं पाण्डुरङ्गे क्षेत्रे जितः पराजितोऽपि जृम्भितः स्वजेतृदर्शनेन उद्बुद्धः आग्रहः तेन निराकृतत्रपः निरस्तलज्जः परिचारक इति कश्चन अन्वयः कूटस्थो यस्य स परिचारकान्वयः नरसः लिङ्गोजीगृहे निलीय स्थितः नरसाख्यः तेन लिङ्गोजिना सभाजित सतां अग्रिमं श्रेष्ठं अमुं नृसिंहाचार्यमुद्दिश्य असूयया अभ्यधत्त अभिहितवान् जगादेत्यर्थः ॥ ५१ ॥ किं जगादेति तदेवाह **केनेति** । अखिलं जगत चराचरं जगत् 'चराचरः स्याज्जगति' इति विश्वः । केन सृष्टं जगत्स्रष्टा क इत्यर्थः । प्रतिदिनं दिने दिने केन प्रबोधवत् ज्ञानवत् को वा जगत्प्रबोधक इत्यर्थः । सज्जनः मुक्तियोग्यसाधुजनः केन पुरुषेण साकं ब्रह्म ब्रह्मशब्दवाच्यपरमात्मानं उपैति प्राप्नोति इह प्रश्नत्रयविषये एकमुत्तरं वेत्सि चेज्जानासि यदि वद प्रश्नत्रयस्यापि एकमेववर्णं उत्तरत्वेन वदेत्यर्थः । इत्यभ्यधत्त इति पूर्वेणान्वयः ॥ ५२ ॥ **तदिति** । अत्र उदितशब्दः प्रसिद्धवाचकः । स्वयमुदितः स्वपितापि उदितोऽत्रेति उदितोदितः अन्वयो वंशो यस्य स उदितोदितान्वयः अयं नृसिंहाचार्यः नरसेरितं नरसेन ईरितं उक्तं तद्वचः निशम्य सस्मितः इदं कियत् इति स्मितेन युक्तः सन् अम्बुदवद् गभीरं वाक्यमाददे स्वीचकार उवाचेत्यर्थः ॥ ५३ ॥ तदेवाह **कद्वदेति** । कद्वद हे गर्ह्यवादिन् 'गर्ह्यवादी तु कद्वदः' इत्यमरः । शृणु मदुक्तमिति शेषः । गम्यमानार्थत्वादप्रयोगः । विषयत्रयेऽपि त्वत्पृष्टसंशयत्रयेऽपि केनेति यत् त्वया समीरितं त्रिरावृत्त्या किंशब्दः

यत् । किं तदेव पदमत्र नोत्तरं वागधीशमरुदर्कवाचकम् ॥ ५४ ॥ व्यध्वगामिनमबुद्ध सन्मतं शुद्धया नृहरिरिद्धया गिरा । रुद्धवाचमतनोत्समुद्धतं बुद्धिवार्धिमिव मध्वयोगिराट् ॥ ५५ ॥ इत्थं कर्कशशाततर्कपरशुप्रोच्छिन्नदुष्टागमप्राग्भारः स्वगुणौघपूरितजगत्याकर्षण प्रौढधीः । प्रत्यादिष्टकुवादिघासविलसत्कीर्त्यङ्कुरस्फूर्तिमान् श्रीमध्वाधिपतोषणाधिकफलं लेभे नृकण्ठीरवः ॥ ५६ ॥ तत्रामात्यघटासमर्पितमहाभूषाम्बरान्दोलिकाश्वेतच्छत्रतुरङ्ग-चामरमुखश्रीसारलब्धोन्नतिः । वेदव्यासगुरुप्रमोदकलनानिस्तन्द्रशीलः क्षितौ विद्याकर्म तनूभवैरयमभून्निर्जित्य लोकत्रयम् ॥ ५७ ॥

॥ इति विद्याधीशविजये चतुर्थः सर्गः ॥

---

प्रयुक्त इत्यर्थः । वागधीशमरुदर्कवाचकं विरिञ्चिवायुसूर्यवाचकं तत्पदं केनेति पदमेव अत्र संशयत्रये उत्तरं नकिमिति काकुः । उत्तरं भविष्यतीत्यर्थः । उत्तरं भविष्यतीत्यन्वयः । अत्रायमर्थः किंशब्द ब्रह्मवायुसूर्यवाची 'मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोः ।' इत्यमरः । चराचरं केन सृष्टं इति प्रश्नस्योत्तरं केन सृष्टमिति । केन ब्रह्मणा सृष्टमित्यर्थः । केन प्रबोधवत् इति प्रश्नस्योत्तरं केन प्रबोधवदिति । केन सूर्येण प्रबोधवत् । सज्जनः केन ब्रह्म समुपैति इति प्रश्नस्योत्तरं केन वायुना साकमिति । 'अर्चिरादिपथा वायुं प्राप्य तेन जनार्दनम् । यान्त्युत्तमा नरोत्तमा ब्रह्मलोकात्सहामुना'। इत्यादि प्रमाणात् प्रश्नवचनान्येवोत्तरीचकारेत्यर्थः ॥ ५४ ॥ **व्यध्वेति** । नृहरिः नरसिंहाचार्यः मध्व योगिराट् श्रीमदानन्दतीर्थयोगिश्रेष्ठ :बुद्धिवार्धिं बुद्धिसागरमिव व्यध्वगामिनं दुर्मार्गवर्तिनं 'व्यध्वो दुरध्वो विपथः कदध्वा कापथः समः ।' इत्यमरः । अबुद्धसन्मतं अविज्ञातसज्जनसिद्धान्तं उद्धतं गर्वितं नरसं शुद्धया निर्दोषया अत एव इद्धया प्रकाशमानया गिरा स्वस्य वाचा रुद्धवाचं प्रतिहतगिरं पराजितमित्यर्थः अतनोत् । पुरा किल श्रीमदाचार्यः बुद्धिसागरनामानं कंचिद्भिमतपण्डितं वादे जिगायेति मध्वविजयोक्ता कथात्रानुसंधेया । अत्र धकारस्य असकृदावृत्त्या वृत्त्यनुप्रासोऽलंकारः ॥५५॥ **इत्थमिति** । इत्थमुक्तरीत्या कर्कशः कठिनः शातः तीक्ष्णः यस्तर्कः युक्तिः स एव परशुः कुठारः तेन प्रोच्छिन्नाः दुष्टाः आगमा असच्छास्त्राणि एव अगमा वृक्षा इतिश्लिष्टरूपकम् । तेषां प्राग्भावः समूहो यस्य स तथोक्तः । तथा स्वगुणानां ओघः समूह एव ओघः प्रवाहः इति श्लिष्टरूपकम् । तेन पूरितायाः पूर्णाया जगत्याः भूमेः आकर्षणं वशीकरणमेव आकर्षणं लाङ्गलेन कर्षणं इति श्लिष्टरूपकम् । तस्मिन् विषये प्रौढधीः कुशलबुद्धिः प्रत्यादिष्टाः निरस्ताः कुवादिन एव घासाः तृणानि तैर्विलसत कीर्त्यङ्कुराणां स्फूर्तिः प्रकाशोऽस्यास्तीति स्फूर्तिमान् । नृकण्ठीरवः श्रीनृसिंहः श्रीमध्वाधिपस्य मध्वपतेः हरेः तोषणमेवाधिकं अतिमात्रं फलं लेभे लब्धवान् । अत्र प्रस्तुतनृसिंहविशेषणैः लोके यथा कश्चित्कर्षकः परशुना वृक्षान् छित्वा नद्यादिजलप्रवाहसार्द्रीमुर्वी कृत्वा उप्तबीजः तदन्तरतृणोत्पाटन पुरःसरं फलमनुभवति तद्वदिति अप्रस्तुतकर्षकप्रतीतेः समासोक्तिरलंकारः । सा च सावयवरूपकोज्जी वितेति संग्रहः । शार्दूलविक्रीडितं वृत्तम् ॥ ५६ ॥ **तत्रेति** । तत्र विजयापुरे अमात्यानां मन्त्रिणः घटया समूहेन यद्यपि 'करिणां घटना घटा' इत्यमरः तथापि समूहमात्रे उपचाराददोषः । समर्पितैः दत्तैः महाभूषाम्बरान्दोलिकाश्वेतच्छत्रतुरङ्गचामराण्येव मुखानि मुख्यानि तैः यः श्रीसारः संपत्तिः स्थिरांशः तेन लब्धोन्नतिः प्राप्तप्रसिद्धिः वेदव्यासकगुरोः प्रमोदकलनायां हर्षजनने विषये निस्तन्द्रशीलः अजडस्वभाव अयं नृसिंहाचार्यः क्षितौ विद्याकर्मतनूभवैः करणैः लोकत्रयीं निर्जित्य अभात् भाति स्म । 'विद्यया देवलोकं जयति कर्मणा मनुष्यलोकं जयति प्रजया पितृलोकं जयति' इति श्रुतेः ॥ ५७ ॥

इति श्रीमज्जनार्दनाचार्यविरचितायां श्रीविद्याधीशविजयव्याख्यायां शद्बार्थदीपिकायां चतुर्थः सर्गः ॥४॥

**इत्थं दिगन्तरनिरूढयशोऽङ्कुरं तमासेवितं गुणवदञ्जलिमञ्जरीभिः । आकर्ण्य संमदवशात्प्रजिघाय वेदव्यासाभिधानगुरुरस्य कृतेऽम्बराणि ॥ १ ॥ अग्रे द्विजैः सबहुमानतयोपनीतान्यभ्युद्ययन्पटहपूर्वकवाद्यघोषैः । आच्छादिताखिलहरिद्वलयः स धीमानादत्त तान्यपि हृदागुरुपादपद्मम् ॥ २ ॥ तादृग्गुरूत्तमकृपारसपात्रभावादस्यार्हतोऽप्यचिरभावि जगद्गुरुत्वम् । निश्चित्य सज्जनततिः प्रमदातिरेकाच्चक्रे सितार्पणमहोत्सव मन्वगारम् ॥ ३ ॥ दैवात्ततो मणिपुरं समुपेत्य योगिचन्द्रे दृशां नयननन्दथुमादधाने । तद्दर्शनोत्सुकतया तदगादयं द्राक्चेतोऽपि सर्वविदुषां प्रमदातिरेकः ॥ ४ ॥ पादाब्जयो-**

---

अस्मिन् सर्गे नरसिंहाचार्यस्य चतुर्थाश्रमपरिग्रहादिकं विवक्षुस्तावदुत्तयोगिकथामारभते । **इत्थमिति ।** इत्थं पूर्वोक्तरीत्या दिगन्तरेषु निरूढयशोऽङ्कुरं व्याप्तकीर्तिप्ररोहं समस्तप्रतिवादिनिरासपूर्वकवैदुष्यप्रकटनेनेतिभावः । अत एव गुणवतां शमार्जवादिसुगुणशालिनां अञ्जलय एव मञ्जर्यः ताभिरासेवितं सकलजनवन्दितमित्यर्थः । तं नरसिंहाचार्यं आकर्ण्य तदीयगुणानागन्तुकमुखाच्छ्रुत्वेत्यर्थः। धर्मधर्मिणोरभेदव्यपदेशः । वेदव्यासाभिधानो गुरुः संमदवशात् संतोषायत्ततया । 'वश आयत्ततायां च' इति विश्वः । अस्य कृते अस्मै नृसिंहाचार्यायेत्यर्थः । अम्बराणि वस्त्राणि पारितोषकाणीतिभावः । प्रजिघाय प्रेषयति स्म । प्रपूर्वात् हि गतौ इतिधातोर्लिट् । 'हेरचङीति' हस्य कुत्वम् । अस्मिन् सर्गे वसन्ततिलकावृत्तम् । 'उक्ता वसन्ततिलका तभजा जगौ ग' इति लक्षणात् ॥ १ ॥ **अग्र इति ।** धीमान् स नृसिंहाचार्यः द्विजैः गुरुप्रहितब्राह्मणैः अग्रे पुरस्तात् उपनीतानि तानि अम्बराणि सबहुमानतया गौरवेण हेतुना पटहपूर्वकवाद्यघोषैः आच्छादिताखिलहरिद्वलयः सन् अभ्युद्ययन् अभिगमयन् सन् आदत्त स्वीचकार । गुरोः पादपद्ममपि हृदा हृदयेन आदत्तेत्यन्वयः । गुरुचरणसरोजपुरःसरं अम्बराणि उररीचकारेत्यर्थः ॥ २ ॥ **तादृगिति ।** सज्जनानां ततिः समूहः तादृक् तादृशः अनन्यसाधारण इत्यर्थः । तच्छब्दपूर्वाद्दृशेः 'त्यदादिषु दृशोऽनालोचने कञ्च' इति क्विन् प्रत्ययः । 'आसर्वनाम्नः' इति तद आकारान्तादेशः । 'क्विन्प्रत्ययस्य कुः' इति कुत्वम् । गुरूत्तमस्य कृपारसः तस्य पात्रभावात् भाजनत्वाद्धेतोः । 'योग्यभाजनयोः पात्रम्' इत्यमरः । अर्हतः पूज्यस्य अर्ह पूजायाम् इति धातोर्लटः शत्रादेशः । अस्य नृसिंहस्य जगद्गुरुत्वं अचिरभावि निश्चित्य गुरुकर्तृकवस्त्रप्रेषणान्यथानुपपत्त्या गुरुरेनं चतुर्थाश्रमदानपूर्वकं लोकगुरुं करिष्यतीति मनसि निर्धार्येत्यर्थः । अत एव प्रमदातिरेकात् अगारमगारमनु अन्वगारं प्रतिगृहं यथा र्थेऽव्ययीभावः । सितां शर्करां 'शर्करा सिता' इत्यमरः तस्यार्पणं दानमेव महोत्सवस्तं चक्रे । ताद्ग्रामे प्रतिगृहं शर्करां ददावित्यर्थः । लोके प्रभवो ह्ययं शुभवार्ताश्रवणजनित हर्षप्रकटनाय जनेभ्यः शर्करां विभजन्तीति प्रसिद्धम् । एतेन नृसिंहस्य लोकगुरुत्वं सज्जनोपकारीति व्यज्यते ॥ ३ ॥ **दैवादिति ।** ततो वस्त्रप्रेषणानन्तरं योगिचन्द्रे यतिश्रेष्ठे वेदव्यासगुरावित्यर्थः । दैवात् दैवप्रेरणादित्याशयः मणिपुरं अपभ्रष्टभाषयामणूरनामकपुरं समुपेत्य दृशां द्रष्टॄणां 'दृग् ज्ञाने ज्ञातरि त्रिषु' इति कोशः । नयनयोः नन्दथुं आनन्दं 'स्यादानन्दथुरानन्दशर्मशातसुखानि च' इत्यमरः । आदधाने कुर्वाणे सति 'यस्य च भावेन भावलक्षणम्' इति सप्तमी । अयं नृसिंहः तस्य गुरोः दर्शने उत्सुकतया हेतुना द्राक् शीघ्रं तन्मणिपुरं अगात् याति स्म । 'इण्' गतौ इत्यस्माद्धातोर्लुङ् । 'इणोगा लुङि' इति गादेशः । 'गातिस्था' इत्यादिना सिचो लुक् । प्रमदातिरेकोऽपि सर्वे च ते विद्वांसश्च सर्वविद्वांसः ।

**शोभमाना । तस्मिन्समस्तसुजनान्तरतोऽभ्युदीय मूर्तानुरागपटलीव वपुःप्रसक्ता ॥ १३ ॥ लग्ने शुभे तदनु तस्य विधाय विद्याधीशाभिधानमभिहृद्यगुणानुरूपम् । भूमावशेषसदनुग्रहयौवराज्यपट्टाभिषिक्तमपि तं गुरुराडतानीत् ॥ १४ ॥ अच्छात्मभिस्तदभिषेकजलैः प्रमोदबाष्पोत्करैरपि सतामसतामशीतैः । शर्मेतराश्रुभिरशेषमपि क्षणेन विश्वम्भरातलमभूद्युगपत्समुन्नम् ॥ १५ ॥ भक्त्या प्रणम्य गुरुवर्यमथ क्रमेण यत्युत्तमान् प्रवयसोऽपि स नव्ययोगी । अध्यारुरोह जगदेकगुरुत्वपीठं दुर्वादिमस्करिशिरोऽर्पितवामपादः ॥ १६ ॥ अप्यात्मनोऽधिकमशेषगुणैर्यतीन्दुरालोक्य तं निजकराब्जकृतावतारम् । आनन्दमेदुरहृदेव बभूव लोके नन्देन्न कोऽनु तनयस्य गुणातिरेकात् ॥ १७ ॥ इक्ष्वाकुवंशजनुषः प्रतिमां मुरारेर्द्वैपायनस्य च पुरातनपुण्य-**

---

त्यक्तं लसद्दुकूलजालं सुक्ष्मवस्त्रवृन्दं येन तथोक्तेन नृसिंहेन विधृता धारिता कषायेन रक्ता काषायी 'तेन रक्तं रागात्' इत्यण् । सा च सा शाटी च । तस्मिन्नृसिंहविषये समस्तसुजनानां अन्तरतो हृदयात् अभ्युदीय उद्भूय मूर्ता साकारा वपुषि नृसिंहशरीरे प्रसक्ता लग्ना अनुरागपटली स्नेहपुञ्ज इव शोभमाना अजनि । अत्र कषायशाट्याः सुजनानुरागित्वेनोत्प्रेक्षणादुत्प्रेक्षा ॥ १३ ॥ **लग्न इति** । तदनु तदनन्तरं गुरुराट् गुरुश्रेष्ठः वेदव्यासः शुभे लग्ने तस्य नृसिंहस्य हृद्यगुणानुरूपं हृद्यगुणानामनुरूपं उचितं विद्याधीश इत्यभिधानं नाम विधाय अपिः समुच्चये । भूमौ तं विद्याधीशं अशेषसत्सु अनुग्रहः तत्त्वोपदेशादिरूपः प्रसादः स एव साम्राज्यं तस्मिन्पट्टाभिषिक्तमपि अतानीत् । लोकगुरुत्वपदे शंखवारिणा अभिषिक्तं चकार ॥ १४ ॥ **अच्छेति** । अच्छात्मभिः निर्मलस्वरूपैः तस्य विद्याधीशस्य अभिषेकजलैः सतां सज्जनानां प्रमोदबाष्पस्य उत्करैः पूरैः असितैः उष्णैः असतां खलानां शर्मेतराश्रुभिः दुःखबाष्पैरपि शर्मणः सुखादितरत् दुःखं अशेषं विश्वंभरातलं भूतलं क्षणेन युगपत् समं समुन्नं आर्द्रमभूत् । 'आर्द्रं सार्द्रं क्लिन्नं तिमितं स्तिमितं समुन्नमुन्नं च' इत्यमरः । तदभिषेकविधिः सदसत्सुखदुःखहेतुरासीदित्याशयार्थः । अत्र अभिषेकजलानां यौगपद्यासंबन्धेऽपि तत्संबन्धोक्तेरतिशयोक्तिः । तया च भूतलस्यार्द्रत्वातिशयोक्तिः संकीर्यते ॥ १५ ॥ **भक्त्येति** नव्ययोगी नूतनयतिः स विद्याधीशः गुरुवर्यं भक्त्या प्रणम्य प्रवयसः स्वतोऽप्याश्रमवृद्धान् 'प्रवयाः स्थविरो वृद्धः' इत्यमरः । यत्युत्तमान् यतिश्रेष्ठानपि प्रणम्येति संबन्धः । दुर्वादिनः कुत्सितमिथ्यावादिनः ये मस्करिणः संन्यासिनः तेषां शिरस्सु अर्पितवामपादः सन् जगदेकगुरुत्वमेव पीठीं सिंहासनं अपचयविवक्षया ङीप् । तां अध्यारुरोह आरूढवान् । अत्र दुर्वादिमस्करिणां शिरस्सु वामपादार्पणासंबन्धेऽपि तत्संबन्धोक्तिरूपातिशयोक्त्या तस्य जगद्गुरुत्वप्राप्तिर्विमतसंन्यासिनां शिरोनमनहेतुरासीदित्यर्थरूपं वस्तु व्यज्यते इत्यलंकारेण वस्तुध्वनिः ॥ १६ ॥ **अपीति** । यतीन्दुः वेदव्यासः अशेषगुणैः आत्मनः स्वस्मादप्यधिकं निजकराब्जात् कृतावतारं कृतोदयम् । करकमलसंजातमित्यर्थः । तं विद्याधीशमालोक्य आनन्देन मेदुरहृत् तुन्दिलहृदय एव बभूव । स्वतोऽपि गुणाधिकेऽस्मिन्नसूयां विहाय कथं हर्षोदय इति शङ्कायामर्थान्तरं न्यस्यति । लोक इति । लोके को नाम पुमान् तनयस्य गुणातिरेकात् आधिक्यात् न नन्देत् सर्वोऽपि नन्दत्येवेत्यर्थः । 'सर्वत्र जयमान्विच्छेत्पुत्रादिच्छेत्पराजयम्' इति न्यायेनेति भावः ॥ १७ ॥ **इक्ष्वाक्विति** । इक्ष्वाकुवंशजनुषः मुरारेः प्रतिमां मूलरघुनाथविग्रहं पुरातनपुण्यलभ्यान् द्वैपायनस्य बिम्बांश्च वेदव्यासमूर्तीरित्यर्थः । अयं विद्याधीशः गुरुशासनेन अपूजयत् पूजितवान् । श्रीशः प्रतिमान्तर्गतश्रीलक्ष्मीपतिरपि तस्य

**लभ्यान् । बिम्बानपूजयदसौ गुरुशासनेन श्रीशोऽपि तुष्टिमभजत्तदुपासनेन ॥ १८ ॥ पादद्वयीं तदनु तस्य करीरकेतुचक्रातपत्रजलजाकृतिचारुरेखाम् । नेमुः परस्परविघट्टितकर्णभूषामुक्ताफलाद् द्विगुणितद्युतयो महान्तः ॥ १९ ॥ तत्रान्तरे तरलवेत्रलतामुदस्य कोलाहलं परिषदां विनिवार्य सद्यः । वाचं सुधासहचरीमुचितार्थधुर्यामित्यूचतुः सदसि भूसुरबन्दिनौ द्वौ ॥ २० ॥ आभात्यगण्यनिरवद्यगुणाम्बुराशिराभारतीश्वरतृणान्तजगन्नियन्ता । आनन्दचिन्मयतनुः करकञ्जराजच्छ्रीनन्दकारिदरशार्ङ्गगदो मुरारिः ॥ २१ ॥ तच्छासनान्मरुदिहाविरभूत्स मध्यगेहार्यवेश्मनि समश्रितमध्वनामा । देवद्विषः कलितशंकरनामधेयप्रच्छन्नवेषमणिमत्प्रभृतीन् विजेतुम् ॥ २२ ॥ संन्यस्य सर्वमपि यो द्विजराजिकॢप्तभव्यस्थितिर्हरिरिवोरुदयो नभोगः । पाति स्म**

---

विद्याधीशस्य उपासनेन परिचर्यया तुष्टिं तोषमभजत् ॥ १८ ॥ **पादेति** । तदनु प्रतिमापूजनानन्तरं महान्तो महात्मानो विद्वांसः परस्परं विघट्टितैः कर्णभूषामुक्ताफलैः द्विगुणितद्युतयः द्विगुणीकृतमुखकान्तयः सन्तः एतेन संमर्दातिशयो व्यज्यते । करीरः कलशः 'वंशाङ्कुरे करीरोऽस्त्री तरुभेदे घटे च ना ।' इत्यमरः । केतुर्ध्वजः चक्रं आतपत्रं जलजं कमलं च तेषामाकृतिरिवाकृतिर्यासां ताः ताश्च चारवो मनोहरा रेखा यस्यास्तां तथोक्तां तस्य विद्याधीशस्य पादद्वयीं नेमुः नमन्ति स्म ॥ १९ ॥ **तत्रेति** । तत्रान्तरे तस्मिन्समये सदसि सभायां द्वौ भूसुरबन्दिनौ विप्रस्तुतिपाठकौ 'बन्दिनस्तुतिपाठकाः' इत्यमरः । तरलां चञ्चलां वेत्रलतां वेत्रयष्टीं उदस्य उत्क्षिप्य सद्यः तत्क्षणं परिषदां सभ्यानां कोलाहलं कलकलध्वनिं विनिवार्य सुधायाः सहचरीं सुधावन्मधुरामित्यर्थः । उचितार्थधुर्यां योग्यार्थधुरंधरां वाचं इति वक्ष्यमाणरीत्या ऊचतुः ॥ २० ॥ तयोरुक्तिमेव चतुस्त्रिंशच्छ्लोकैराचष्टे । **आभातीति** । अगण्यनिरवद्यगुणाम्बुराशिः भारतीश्वरं ब्रह्माणमारभ्य आभारतीश्वरं अभिविधावव्ययीभावः । तृणमेवान्तं यस्मिंस्तत्तृणान्तं तस्य जगतो नियन्ता नियामकः आनन्दचिन्मयी तनुर्यस्य सः । तथा करकञ्जेषु पाणिपद्मेषु चतुर्ष्विति भावः । राजन्त्यः श्रीप्रधानाः नन्दकः खड्गः अरिः चक्रं दरः शंखः शार्ङ्गः धनुः गदाः कौमोदकी च श्रीनन्दकारिदरशार्ङ्गगदा यस्य स तथोक्तः । मुरारिः हरिः आभाति आ समन्तात् प्रकाशते । 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इति श्रुतेः॥२१॥ **तदिति** । तस्य हरेः शासनात् । स प्रसिद्धः मरुत् मुख्यप्राणः कलितेन प्राप्तेन शंकर इति नामधेयेन नाम्ना प्रच्छन्नवेषः न तु कर्मणेति भावः । यो मणिमान् सौगन्धिकापहरणे प्राक् भीमसेनेन हतो दैत्यः तत्प्रभृतीन् देवद्विषः दैत्यान् विजेतुं इह लोके समाश्रितं पूजितं मध्व इति नाम यस्य स तथोक्तः सन् । मध्यगेहार्यस्य मध्यगेहभट्टाख्यस्य वेश्मनि आविरभूत् आविर्भूतः । न तु मनुष्यवज्जात इत्याशयः ॥ २२ ॥ तच्चरित्रं त्रिभिराचष्टे । **सन्न्यस्येति** । यो मध्वहरिः हरिमेधसः पुत्रो हरिनामकः परमात्मेव 'तत्रापि जज्ञे भगवान् हरिण्यां हरिमेधसः' इति भागवतात् । सर्वं ईषणत्रयादिकमपि सन्न्यस्य विहाय सन्न्यस्य परिव्रज्य सन्न्यस्येति द्विरावृत्त्या योज्यम् । अन्यत्र भूषणादिकमपि सन्न्यस्य विसृज्य भक्तगजरक्षणव्याजेनेति भावः । द्विजानां ब्राह्मणानां राजिः पङ्क्तिः तस्यां कॢप्ता भव्या शुभा स्थितिर्येन सः । तथा ज्ञानोपदेशेन सद्ब्राह्मणहितकृदित्यर्थः । अन्यत्र दिजराट् गरुडः तस्मिन् द्विजराजे कॢप्ता भव्या स्थितिः तदारूढ इत्यर्थः । उर्वी दया यस्य स उरुदयः । उभयत्र समानमेतत् । न विद्यते भोगो विषयानुभवो यस्य स नभोगः । 'मुक्तसङ्गश्चरेद्भिक्षुर्देहमात्रपरिग्रहः ।' इति शास्त्रात् । नशब्देन 'सुप्सुपा' इति समासः । अन्यत्र

**यतिमणेरवकीर्य भक्त्या स्वर्णप्रसूननिचयं रचितप्रणामः । प्रीतेन तेन परिरभ्य समीपदेशे संवेशितोऽभवदसौ द्विजसार्वभौमः ॥ ५ ॥ गम्भीरभावरमणीयमपास्तपङ्कमुन्निद्रकोकनदनेत्रमुदूढभासम् । सन्मानसं स्फुटसमञ्चितशङ्खचक्रमालोक्य तं परमहंसमनोऽन्वरज्जत् ॥ ६ ॥ श्रीमध्वयोगिमतरक्षणराज्यभारमाधाय वत्स भवति प्रकटानुभावे । चेतः श्रमं मम चिराय निनीषतीति व्याचष्ट संसदि नृसिंहममुं यतीन्द्रः ॥ ७ ॥ स्वाभीष्टतद्व्यवहृतोक्त्यनुमोदनोद्यदौत्सुक्यबन्धुरहृदां महतामदभ्रैः । कोलाहलैरजनि दुर्दममायिविद्वन्मिथ्याग्रहाग्रहनिरासनसिद्धमन्त्रैः ॥ ८ ॥ आज्ञासुमस्रजममुष्य**

---

‘ पूर्वकालैकसर्व ’ इत्यादिना समासः । तेषां चेतः चित्तं अगात् इति संबन्धः । अस्य गुरुसमीपगमनं स्वैः पूर्वनिश्चितकार्यस्य द्वारत्वेन निश्चित्य सर्वे पण्डिताः संतुष्टचित्ता बभूवुः इति तात्पर्यार्थः ॥ ४ ॥ **पादेति** । असौ द्विजसार्वभौमः नृसिंहः यतिमणेः गुरोः पादाब्जयोः स्वर्णप्रसूननिकरं कनकमयकुसुमसमूहं अवकीर्य ‘ रिक्तहस्तेन नोपेयाद्राजानं देवतां गुरुम् ’ इति शास्त्रादिति भावः । भक्त्या रचितप्रणामः सन् प्रीतेन तुष्टेन तेन गुरुणा परिरभ्य आलिङ्ग्य समीपदेशे संवेशित उपवेशितः अभवत् । विशतेर्ण्यन्तात् कर्मणि क्तः । प्रीत्यनुमापकमेतत् ॥ ५ ॥ **गम्भीरेति** । गम्भीरभावेन गाम्भीर्येण गुणेन रमणीयं अन्यत्र निम्नत्वेन रमणीयम् । ‘ निम्नं गभीरं गम्भीरम् ’ इत्यमरः । अपास्तपङ्कं निरस्तपापं अन्यत्र रहितकर्दमम् । ‘ पङ्कोऽस्त्री कर्दमे पापे ’ इति शाश्वतः । उन्निद्रकोकनदं विकचरक्तसरोरुहम् । ‘ रक्तोत्पलं कोकनदम् ’ इत्यमरः । तद्वन्नेत्रे यस्य तम् । अन्यत्र उन्निद्रकोकनदमेव नेत्रे यस्येति रूपकम् । उदूढभासं उद्धृतदेहकान्तिं अन्यत्र उदूढाः भासाः पक्षिविशेषा यस्मिंस्तत्तथा । स्फुटानि समञ्चितानि स्वदेहे अलंकृतानि शंखचक्राणि मुद्रारूपाणि यस्य तम् । मुद्रापञ्चकस्याप्युपलक्षणमेतत् । अन्यत्र स्फुटं समञ्चितं शङ्खानां समूहो यस्मिन् तत् । सन्मानसं प्रशस्तहृदयं तं नृसिंहं आलोक्य परमहंसस्य वेदव्यासयतेः मनः कर्तृ अन्वरज्जत् अनुरक्तमभूत् । तस्मिन् स्निह्यति स्मेत्यर्थः । अन्यत्र सन्मानसं प्रशस्तं मानसाख्यं सरः आलोक्य परमहंसस्य उत्कृष्टहंसाख्यपक्षिणः मनः अन्वरज्जदिति ध्वनिः । हंसानां मानसप्रियत्वादिति भावः ॥ ६ ॥ **श्रीति** । यतीन्द्रो वेदव्यासः संसदि सभायां अमुं नृसिंहं व्याचष्ट जगाद । किमिति हे वत्स, प्रकटानुभावे व्यक्तप्रभावे भवति त्वयि श्रीमध्वयोगिनो मतरक्षणमेव राज्यभारः तमाधाय निधाय त्वा जगद्गुरुं कृत्वेत्यर्थः । चिराय चिरकालात् मम चेतः श्रमं निनीषति नेतुमिच्छति । लोकगुरुत्वविषये त्वां युवराजं कृत्वा मदीयश्रमं परिहर्तुमिच्छामीत्यर्थः । इति व्याचष्टेत्यन्वयः ॥ ७ ॥ **स्वेति** । स्वानां आत्मनां अभीष्टाय हिताय तेन वेदव्यासेन व्याहृता उक्ता उक्तिः ‘ श्रीमध्वयोगिमत ’ इत्यादिवचनं तस्या अनुमोदने उद्यता उत्पन्नेन औत्सुक्येन बन्धुरहृदां पूर्णमानसानां महतां महात्मनां संबन्धिभिः अदभ्रैः अधिकैः कोलाहलैः कलकलशब्दैः कर्तृभिः दुर्मदः दमयितुमशक्यः मायिविदुषां यो मिथ्याभिमते आग्रहः अभिनिवेशः स एव ग्रहः पिशाचस्तस्य निरासने हनने सिद्धमन्त्रैः अजनि जातम् । वेदव्यासवचनानुमोदिनां सज्जनानां साधुवादकोलाहलध्वनिः मायिविद्वन्मिथ्यामताभिनिवेशनिरासकहेतुरभूदित्यर्थः । अत्र कोलाहलानां तादृकसिद्धमन्त्रत्वासम्बन्धेऽपि तत्संबन्धोक्तेरतिशयोक्तिः । तया च नृसिंहस्य ‘ चतुर्थाश्रमग्रहे किमुत ’ इति कैमुत्यप्रतिभावनादर्थापत्तिर्गम्यते इत्यलंकारेण अलंकारध्वनिः ॥८॥ **आज्ञेति** । लब्धवर्णाः विद्वांसः ‘ विद्वान् ( धीमान् ) सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः ’ इत्यमरः । तेषां चूडामणिः शिरोरत्नायमानः सः नृसिंहः अमुष्य वेदव्यासस्य

**स लब्धवर्णचूडामणिः शिरसि सादरमादधानः । तत्याज संसृतिधुरं विरसां तनूजे पूर्वं जरामिव ययातिधराधिनाथः ॥ ९ ॥ भव्यप्रबोधरसधूर्वहमेष भेजे नव्याश्रमं परमहंसकृतोपदेशः । तन्तन्यमानविषयातपतापितोरुसंसारनीरसपथाटनखेदनोदी ॥ १० ॥ सन्न्यासवाननयमपास्तसमस्तभूषो धन्याग्रणीः स्वयमशेषदिशां मुखानि । तेने विभूषिततमान्यतिमात्रतप्तकार्तस्वरप्रतिमदेहमहःप्ररोहैः ॥ ११ ॥ आदत्त पाणिकमलेन सुपर्वहृद्यं दण्डं यदा विधिविदामयमग्रगण्यः । मायिश्ववृन्दमपथा निगमान्तदेवगेहप्रवेशि च तदैव पलायते स्म ॥ १२ ॥ काषायशाट्यथ विधूतलसद्दुकूलजालेन तेन विधृताजनि**

---

अज्ञासुमस्रजं शासनलक्षणकुसुममालिकां सादरं शिरसि आदधानः सन् स्वीकृततदाज्ञ इत्यर्थः । ययातिधराधिनाथः ययातिनामको राजा पूर्वं जरामिव विरसां नीरसां संसृतिधुरं संसारभारं धुरशब्दात् ‘ ऋक्पूरब्धूः ’ इत्यादिना समासान्तोऽप्रत्ययः । तनूजे पुत्रे तत्याज । संसारभारं पुत्रे निधाय स्वयं चतुर्थाश्रमस्वीकारोन्मुखोऽभूदित्यर्थः । पुरा किल नहुषपुत्रो ययातिः स्वजरां पुरुनाम्ने पुत्राय दत्त्वा तत्तारुण्यं स्वयं जग्राह इति पौराणिकी कथा भागवते । ‘ इति प्रमुदितः पूरुः प्रत्यगृह्णज्जरां पितुः । सोऽपि तद्वयसा कामान् यथावज्जुजुषे नृपः ॥ ’ इति । उपमालंकारः ॥ ९ ॥ **भव्येति** । एष नृसिंहः तन्तन्यमानेन सर्वत्र व्याप्नुवानेन विषयः स्रक्चन्दनादिः स एव आतपः तेन तापिते उरुणि महति संसार एव नीरसः निर्गुणः पन्था नीरसपथः ‘ ऋक्पूः ’ इत्यादिना समासान्तोऽप्रत्ययः । तस्मिन्नटनात् संचारात् यः खेदः तं नुदतीति खेदनोदी तत्परिजिहीर्षुः सन्नित्यर्थः । अत एव परमहंसेन वेदव्यासेन कृतोपदेशः भव्यः मोक्षसाधनत्वाच्छुभः प्रबोधः तत्त्वज्ञानं स एव रसः तस्य धूर्वहं धुरंधरं नव्यं नूतनं आश्रमं चतुर्थाश्रममित्यर्थः । भेजे । ‘ यदहरेव विरजेत्तदहरेव प्रव्रजेत् ’ इति श्रुतेरिति भावः । यथा लोके कश्चित्पथिकः सूर्यातपतापितनिर्जलमार्गाटनखिन्नः कुत्रापि जलमलभमानो दैवाद्धंसपक्ष्यागत्यनुमितं कंचन जलभूयिष्ठप्रदेशमाश्रयति तद्वदिति ध्वनिः ॥ १० ॥ **संन्यासवानिति** । अग्रं नयतीति अग्रणीः धन्यश्रेष्ठः । ‘ सत्सु द्विष ’ इत्यादिना क्विप् । ‘ अग्रग्रामभ्यां नयतेः ’ इति णत्वम् । संन्यासोऽस्यास्तीति संन्यासवान् । अयं नृसिंहः समस्तभूषां कुण्डलादिसमस्तभूषणं अपास्य विहाय अतिमात्रं अत्यन्तं तप्तं पुटपाकशोधितं यत्कार्तस्वरं सुवर्णं ‘ रुक्मं कार्तस्वरम् ’ इत्यमरः । तदेव प्रतिमा सादृश्यं यस्य तस्य देहस्य महःप्ररोहैः दीप्त्यङ्कुरैः करणैः अशेषदिशानां मुखानि । दिक्शब्दस्य ‘ यथा वाचा निशा दिशा ’ इति आबन्तत्वम् । भूषिततमानि अतिशयेन भूषितानि स्वयं तेने । एतेन अस्य भूषणप्रभातिशायिनी देहकान्तिरिति व्यतिरेको व्यज्यते ॥ ११ ॥ **आधत्तेति** । विधिविदां अग्रगण्यः अयं नृसिंहः सुष्ठुभिः पर्वभिः ग्रन्थिभिः हृद्यं मनोज्ञं ‘ ग्रन्थिर्ना पर्वपरुषी ’ इत्यमरः । दण्डं वेणुदण्डं यदा यस्मिन्समये पाणिकमलेन आधत्त तदा तत्समये एव न पन्थाः अपथः ‘ पथो विभाषा ’ इति वैकल्पिकः समासान्तप्रत्ययाभावः । तेन अपथा अमार्गेण निगमान्तो वेदान्तः स एव देवगेहं देवतायतनं तत्प्रविशतीति तत्प्रवेशि निगमान्तस्य अमार्गप्रवेशनं नाम विरुद्धार्थकल्पनमिति ज्ञेयम् । मायिनः मायावादिन एव श्वानः शुनकाः तेषां वृन्दं पलायते स्म ताडनभयादिति भावः । अत्र नृसिंहस्य वेणुदण्डधारणेन मायिनां पलायनासंबन्धेऽपि तत्संबन्धोक्तिरतिशयोक्तिः । सा च रूपकसंकीर्णा । यथा लोके जालकादिमार्गेण देवतायतनं प्रविष्टः शुनको दण्डहस्तं पुरुषं वीक्ष्य पलायते तद्वदिति ध्वनिः ॥ १२ ॥ **काषायेति** । अथ अनन्तरं विधूतं

**षट्समयनक्रमुखावलीढमार्तं जगद्द्विरदमाशु सुदर्शनेन ॥ २३ ॥ मिथ्या जगद्धरिरपास्तगुणः समस्तजीवात्मनात्ततनुरित्यविबद्धवाचः । दुर्वादिकाकविसराद्रसिकैः पिकैर्द्रागाश्रित्य यं पृथगभावि वसन्तमुर्व्याम् ॥ २४ ॥ गत्वामहाबदरिकाश्रममन्तरीपक्लृप्तावतारमभिवन्द्य रमेशितारम् । यस्तत्कृपाफलमवाप शिवेन्द्रपूर्वगीर्वाणमौलिमणिदीधितिरञ्जिताङ्घ्रिः ॥ २५ ॥ मध्वात्ततोऽथ समभून्महनीयकीर्तिः श्रीपद्मनाभयतिरीडितराममूर्तिः । तत्त्वोपदेशविनिवारितसज्जनार्तिः वैराग्यसाधनसमर्जितबोधपूर्तिः ॥ २६ ॥ तस्मात्क्षमावरधरात्परमभ्युदीतः क्षोणीतले नृहरितीर्थ इति प्रतीतः । योगीन्दुरास**

---

नभो गच्छतीति नभोगः ‘ अन्यत्रापि दृश्यते ’ इति गमेर्डप्रत्ययः । आकाशमार्गेण गच्छन्नित्यर्थः । षट् समयाः सिद्धान्ताः शाक्तशैवगाणपत्यसौरसौगतमिथ्यावादाख्या त एव नक्रो ग्राहः तस्य मुखेन आलीढं ग्रस्तं षट्समयाक्रान्तमित्यर्थः । अत एव आर्तं दुखितं जगदेव द्विरदो गजः तं सुदर्शनेन शोभनशास्त्रेण ब्रह्मसूत्रभाष्यादिना अन्यत्र सुदर्शनचक्रेण पाति स्म दुर्मतनिरासपूर्वकहरिसर्वोत्तमत्वादिप्रतिपादकसच्छास्त्रकरणेन योग्यलोकं रक्षति स्मेत्यर्थः । अन्यत्र ग्राहं सुदर्शनेन भित्त्वा ररक्षेत्यर्थः । श्लेषरूपकानुप्राणितोऽयमुपमालंकारः ॥२३॥ **मिथ्येति** । रस्यते रसो यैरिति रसिकाः सदसच्छास्त्रसज्ञा मुक्तियोग्या इति यावत् । तै रेव पिकैः कोकिलैः पक्षिभिः कर्तृभिः भुवि भूमौ वसन्तं वर्तमानं यं मध्वमेव वसन्तं वसन्ताख्यमृतुं इति द्विरावृत्त्या योज्यम् । आश्रित्य तत्सिद्धान्तमङ्गीकृत्येत्यर्थः । जगत् मिथ्या हरिः अपास्तगुणः निर्गुणः समस्तजीवात्मना जीवस्वरूपेण आत्ततनुः प्राप्तेत्यबद्धवाचः असंबद्धप्रलापाः दुर्वादिन एव काका तेषां विसरात् समूहात् द्राक् पृथक् अभावि भूतम् । भावे लुङ् । मध्वशास्त्रोद्बुध्यमानाः सत्पुरुषाः असज्जनेभ्यः पृथग्भूता इत्यर्थः । लोके कोकिला वसन्तकाले काकेभ्यः पृथग्भवन्तीति प्रसिद्धम् । ‘ वसन्तकाले संप्राप्ते काकः काकः पिकः पिकः । ’ इति । रूपकालंकारः ॥ २४ ॥ **गत्वेति** । शर्वेन्द्रपूर्वाणां गीर्वाणानां देवतानां मौलिमणयः किरीटरत्नानि तेषां दीधितिभिः किरणैः रञ्जिताङ्घ्रिः शिवेन्द्रादिसकलदेववन्दितचरणः इत्यर्थः । यो मध्वः महाबदरिकाश्रमं हिमवत्प्रान्तस्थं गत्वा अन्तरीये द्वीपे क्लृप्तावतारं रमेशितारं लक्ष्मीशं व्यासाख्यं हरिं अभिवन्द्य तस्य रमेशितुः कृपैव फलं तदवाप । तेनानुगृहीतोऽभूदित्यर्थः ॥ २५ ॥ इत्थं वायोर्मध्वरूपेण तृतीयावतारमुक्त्वा तदनन्तरं गुरून् क्रमेण वर्णयितुमारभते **मध्वादिति** । ततः तस्मान्मध्वात् अथ अनन्तरं महनीयकीर्तिः ईडितराममूर्तिः पूजितमूलरघुनाथ प्रतिम इत्यर्थः । तत्त्वोपदेशेन विनिवारितसज्जनार्तिः संसारबन्धदुःखं यस्य सः । तथा वैराग्यमेव साधनं तेन समर्जितबोधपूर्तिः स्वयोग्यतानुसारेण संपादितपूर्णज्ञानः श्रीपद्मनाभाख्यो यतिः समभूत् । मध्वशासनेन स्वयं जगद्गुरुरभूदित्यर्थः । एवमुत्तरत्रापि ज्ञेयम् ॥ २६ ॥ **तस्मादिति** । धरन्तीति धराः क्षमायाः तितिक्षायाः धराः लोके ये क्षमिणः तेषु वरः श्रेष्ठः अत्यन्तं क्षमीत्यर्थः । तस्मात्पद्मनाभयतेः परं अनन्तरं अभ्युदीतः अभ्युदयं प्राप्तः क्षोणीतले नृहरितीर्थ इति प्रतीतः प्रसिद्धः योगीन्द्रः योगिश्रेष्ठः आस बभूव । ‘ आसेति बभूवार्थे तिङः प्रतिरूपकम् ’ इति शाकटायनः । वामनस्तु ‘ अस गतिदीप्त्यादानेषु ’ इत्यस्य धातोर्लिटि रूपमिदमाह । तदानीमासेति दीप्त्यर्थे आस दीप्यते स्मेत्यर्थः । क्षमाधरवरात्पर्वतश्रेष्ठात् उदयपर्वतादित्यर्थः । इन्दुः चन्द्रः बभूवेति ध्वनिः । यस्य योगीन्दोः अनूनकलाविलासैः समग्रविद्याविलासैः कृष्णो हरिः पक्षः सहायो येषां ते कृष्णपक्षाः सज्जना इत्यर्थः । बभूवुरिति शेषः ।

**यदनूनकलाविलासैश्चित्रं निरूढमहसोऽखिलकृष्णपक्षः ॥ २७ ॥ आसीक्षितौ तदनु सज्जनपरिजातः श्रीमाधवाख्ययतिमौलिरपारिजातः । येन स्वयं स्फुटविरक्तिभृतापि लोकश्चक्रेऽखिलो निजगुणैरनुषक्त एव ॥ २८ ॥ अक्षोभ्यतीर्थमनुजातमुशन्त्यमुष्माद् यद्वागखर्वतरवीचिचयप्रपञ्चैः । वेलां कदाप्यनतिवर्तिभिरागमालिरुन्मूलिता जनितमां प्रतिकूललक्ष्या ॥ २९ ॥ यन्मान्यपाणिसरसीरुहलब्धजन्मा सन्मानसार्पितरमेशपदाम्बुजन्मा । धीमन्त्रशक्तिशमितप्रतिवादिभोगी श्रीमन्नताङ्घ्रिरजयज्जयतीर्थयोगी ॥ ३० ॥ मध्वागमोल्लसिततत्त्वविनिर्णयार्थनिक्षेपमप्यसुगमं सुमनोऽभिरग्र्यम् । भूयो विमृश्य**

---

इन्दुपक्षे इन्दोः अनूनकलाविलासैः षोडशकलाविलसनैः अखिलकृष्णपक्षाः निरूढमहसः संजातकान्तयः इति चित्रम् । कृष्णपक्षेषु चन्द्रकलानां ह्रासप्रसक्तेः पूर्णाभिस्ताभिस्तेषांनिरूढमहत्त्वमाश्चर्यमिति विरोधो ध्वन्यते ॥ २७ ॥ **आसीदिति** । तदनु नरहरितीर्थादनन्तरं सज्जनानां पारिजातः पारिजातवदीप्सितार्थप्रद इत्याशयः । अपगतं अरिजातं अन्तर्वैरिवर्गो यस्य सः अपारिजातः 'जातं जात्यौघजन्मसु' इत्यमरः । श्रीमाधवाख्यो यतिमौलिक्षितौ आसीत् जगद्गुरुरित्याशयः । स्वयं स्फुटविरक्तिभृतापि येन माधवतीर्थेन निजगुणैः औदार्यादिभिः अखिललोकः अनुरक्तः एव चक्रे । स्वतो विरक्तस्य लोकानुरक्तीकरणं कथमिति विरोधो गम्यते । स्वगुणैः स्वस्मिन्ननुरागवतः चकारेति परिहारः । अत एव विरोधाभासोऽलंकारः । 'आभासत्वे विरोधस्य विरोधाभास इष्यते ।' इति लक्षणात् ॥ २८ ॥ **अक्षोभ्येति** । अमुष्मान्माधवतीर्थात् अभिजातं तत्करकमलसंजातमित्यर्थः । अक्षोभ्यतीर्थ एव अक्षोभ्यतीर्थं इति श्लिष्टरूपकम् । अक्षोभ्यं क्षोभयितुमशक्यं तीर्थं ऋषिसेवितं जलम् । 'निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ ।' इत्यमरः । उशन्ति जना वदन्ति । अक्षोभ्यं च तत् तीर्थं चेति गम्यते । कदापि जात्वपि वेलां मर्यादां कुलदेशं च अनतिवर्तिभिः अनतिक्रमद्भिः यस्य अक्षोभ्यतीर्थस्य वाच एव अखर्ववीचयः उत्तुङ्गतरङ्गाः तासां चयः समूहः तस्य प्रपञ्चैः विस्तारैः प्रतिकूलं यथा तथा लक्ष्या प्रपञ्चमिथ्यात्वप्रतिपादिनी । अन्यत्र कूलं प्रति प्रतिकूलं यथार्थेऽव्ययीभावः । लक्ष्या दृश्या प्रतितटप्ररूढेत्यर्थः । आगमाः शास्त्राण्येव आगमा वृक्षा इति श्लिष्टरूपकम् । तेषामालिः पङ्क्तिः उन्मूलिता उद्धृतमूलीकृता खण्डिता उत्पाटिता च अजनितमां अतिशयेन जाता 'तिङश्च' इति तरपि 'किमेत्तिङ' इत्यादिना आमुप्रत्ययः । रूपकालंकारः ॥ २९ ॥ **यदिति** । अस्य अक्षोभ्यतीर्थस्य मान्यात् पाणिसरसीरुहात् लब्धजन्मा । सति प्रशस्ते मानसे निजहृदये अर्पितं रमेशस्य पदाम्बुजन्म पादारविन्दं यस्य स तथोक्तः । धियो बुद्धेः मन्त्रो विचारः तस्य शक्त्या सामर्थ्येन शमिताः प्रतिवादिन एव भोगिनः सर्पा यस्य स तथोक्तः । श्रीमद्भिः पूज्यैः नताङ्घ्रिः जयतीर्थ इति योगी अजयत् सर्वोत्कर्षेण वर्तते स्म । अत्र अर्धद्वयेऽपि पादद्वितीयान्तवर्णानामसकृदावृत्त्या शब्दचित्रम् ॥ ३० ॥ तन्माहात्म्यमेव विवृणोति **मध्वेति** । सुमनोभिः देवैरपि असुगमं किमुतेतरैरिति भावः । सुखेन गम्यते इति सुगमः न सुगमः असुगमः दुर्ज्ञेय इत्यर्थः । 'ईषद्दुःसुषु' इत्यादिना खल् । अत एव अग्र्यं श्रेष्ठं 'अग्राद्यत्' इति यत्प्रत्ययः । मध्वागमं मध्वकृतानुव्याख्यानादिशास्त्रं तस्मिन् उल्लसितः प्रकाशमानः उत्पूर्वाल्लसतेः कर्तरि क्तः । यः तत्त्वनिर्णयार्थः स एव निक्षेपो निधिः तं सन्तः सज्जनाः भूयः पुनः पुनः विमृश्य यस्य जयतीर्थस्येदं यदीयं 'त्यदादीनि च' इति वृद्धत्वाच्छप्रत्ययः । महनीयं सुधा न्यायसुधैव अञ्जनं तेन साधनेन कथमपि अतिकृच्छ्रेण अवलोकयन्ते पश्यन्ति । अञ्जनं विना

**कथमप्यवलोकयन्ते सन्तो यदीयमहनीयसुधाञ्जनेन ॥ ३१ ॥ पुत्रोऽथ तस्य समभाद-वदातकीर्तिच्छत्रोऽन्तरुद्यदरिवर्गजिदात्मशक्त्या । अद्यापि तत्त्वविदुषां प्रथमं कथासु विद्याधिराज इतिकीर्तितनामधेयः ॥ ३२ ॥ अत्यन्तसुन्दरमुकुन्दपदारविंदचिन्तामरन्द-रसतुन्दिलभृङ्गमरन्दम् । सौजन्यमन्दिरमुशन्ति ततो यतीन्द्रमानन्दनीयगुणवृन्दजुषं कवीन्द्रम् ॥ ३३ ॥ वागीशयोगितिलकोऽखिलकोविदाल्याजेगीयमानचरितो भरितोरु-बोधः । जज्ञे तदन्वितत्तरामितरामसेवाधन्योऽन्यदीयमतमोघतमो हिमांशुः ॥ ३४ ॥ भक्तिः समेधितविधूतभवाधितोद्यद्विज्ञानसंपदितबोधसुधारसज्ञे । श्रीरामचन्द्रनतिराजि-**

---

निधिरिव जयतीर्थयोगिकृतन्यायसुधाख्यटीकां विना मध्वकृतानुव्याख्यानाख्यशास्त्रतत्त्वार्थो दुर्दर्श इति भावः । अत्र सुधेत्युपलक्षणमात्रम् । समस्तमध्वदर्शनटीकाग्रन्थानां जयतीर्थयोगिकृतत्वात्तैर्विना तदर्थो दुर्ज्ञेया इत्याशयार्थः । अत्र यच्छब्दस्य पूर्वश्लोकेन संबन्धः । रूपकालंकारः ॥ ३१ ॥ **पुत्र इति** । अथ अनन्तरं आत्मनः बुद्धेः शक्त्या सामर्थ्येन अन्तः अन्तःकरणे उद्यन् उज्जृम्भमाणः योऽरिवर्गः कामादिशत्रुवर्गः तं जयतीति तज्जित् 'सत्सु द्विष' इत्यादिना क्विप् । अवदातं शुभ्रं कीर्तिरेव छत्रं यस्य स तथा । अत एव अद्यापि किमु तदानीमिति भावः । तत्त्वविदुषां कथासु विद्याधिराज इति प्रथमं कीर्तितनामधेयः जनैरितिशेषः । तत्त्वज्ञानामग्रगण्य इत्यर्थः । तस्य जयतीर्थयोगिनः पुत्रः करकमलसंजातः समभात् भाति स्म । स्वयं विद्याधिराजत्वादेव अरिवर्गजित्त्वं अवदातच्छत्रत्वं युक्तमिति भावः । अत एव पूर्वपदार्थानामुत्तरपदार्थसमर्थनहेतुभूतत्वात्काव्यलिङ्ग-भेदः । 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम् ।' इति लक्षणात् ॥ ३२ ॥ **अत्यन्तेति** । अत्यन्तसुन्दरयोः मुकुन्दपदारविन्दयोः चिन्ता ध्यानं स एव मरन्दरसः मकरन्दरसः 'मरन्दो मकरन्दवत्' इति शब्दभेदप्रकाशे । तेन तुन्दिलः स्थूलः 'फेनादित्वात्' इलच् । हृदेव मिलिन्दो भृङ्गो यस्य तं तथोक्तम् । 'भसलो बम्भरश्चैव मिलिन्दः सत्पुटस्तथा ।' इति शब्दार्णवे । सौजन्यस्य मन्दिरं ग्रहभूतं आनन्दनीयानां सद्भिः संतोषणीयानां गुणानां वृन्दान् जुषन्तीति वृन्दजुट् तं कवीन्द्राख्यं यतीन्द्रं ततो विद्याधिराजान्तरं उशन्ति गुरुं वदन्ति । जना इति शेषः । 'वश् कान्तौ' इत्यस्माद्धातोर्लट् । अत्र सानुस्वारस्य दकारस्य असकृदावृत्त्या वृत्त्यनुप्रासशब्दा-लंकारः ॥ ३३ ॥ **वागिति** । अखिलकोविदाल्या जेगीयमानचरितः भरितोरुबोधः संभृताधिकज्ञानः अतितरां अत्यन्तं इतया प्राप्तया रामसेवया धन्यः अन्येषां विमितानां इदं अन्यदीयं 'गहादित्वात्' छप्रत्ययः । 'अषष्ठ्यतृतीयास्थस्यान्यस्य' इत्यादिना दुगागमः । अन्यदीयमेव मोघं सदुपकारानुपयोगाद्व्यर्थं तमः तस्य अहिमांशुः सूर्यः तन्निरासक इत्याशयः । वागीशाख्यो योगितिलकः तदनु कवीन्द्रतीर्थानन्तरं जज्ञे गुरुर्जातः । अत्र पादचतुष्टये सप्तमाष्टमवर्णानां दशमैकादशवर्णेषु यमनाद्यमकप्रभेदः शब्दालंकारः । तथा च यमकलक्षणे दण्डी 'अव्यपेतव्यपेतात्मा या वृत्तिर्वर्णसंहतेः । यमकं तच्च पादानामादिमध्यान्तगोचरम् ॥' इति ॥ ३४ ॥ **भक्तिरिति** । विधूतो विसृष्टः भवे संसारे य आधिः मनोव्यथा 'पुंस्याधिर्मानसी व्यथा ।' इत्यमरः । विधूतो भवाधिर्येन तस्य भावस्तत्ता तया हेतुना वैराग्येणेत्यर्थः । उद्यन्ति उद्गच्छन्ति हृदि भान्तीत्यर्थः । उत्पूर्वादिणः कर्तरि लटः शत्रादेशः । 'इणो यण्' इति यण् । परिशीलतेति यावत् । या विज्ञानसंपत् शास्त्रसमृद्धिः 'विज्ञानं शिल्पशास्त्रयोः ।' इत्यमरः । तया इतायाः प्राप्तायाः बोधसुधायाः ज्ञानामृतस्य

ततागङ्काग्रे श्रीरामचन्द्रयतिराजि ततो जनानाम् ॥ ३५ ॥ अद्वैतदुर्मदपिशाचजनातिदूरः स्वर्णोपयोगपरितुष्टनिरञ्जनौघः । स्वान्तस्फुरद्दशमतीशपदाब्जमुद्रो विद्यानिधिर्विलसति स्म तदन्ववन्याम् ॥ ३६ ॥ संफुल्लबोधसुमसौरभवासिताशो गाढं विरक्तिलतया रचितोपगूहः । दभ्रेतराश्रयतया महतां द्विजानामभ्राजताथ रघुनाथयतिक्षमाभूः ॥ ३७ ॥ दुर्ज्ञेययोः सदसतोर्विपुलैकपात्रस्थित्या विवेचनविधौ पयसोः प्रवीणः । पद्माश्रयैकहृदयो धुतपक्षपातश्चक्रे न कस्य कुतकं रघुवर्यहंसः ॥ ३८ ॥ धीमज्जनास्तदनु सज्जनहृच्चकोरसोमं जगज्जयिविचित्रपवित्रचर्यम् । रामद्रमेशचरणप्रवणान्तरङ्गं

---

रसं जानातीति रसज्ञः वैराग्येण परिशीलितसच्छास्त्रजनिततत्त्वज्ञान इत्यर्थः । तस्मै श्रीरामचन्द्राय अन्वहं स्वकृतप्रणामपरम्परा तया ततः व्याप्ता अङ्काः चिह्नानि किणाः यस्मिंस्तद् गात्रं यस्य सः तथोक्तः । एतेन अस्य रामे भक्त्यतिशयो गम्यते । तस्मिन् । श्रीरामचन्द्रयतिराट् यतिश्रेष्ठः तस्मिन् । ततः वागीशानन्तरं जनानां भक्तिः समेधत अवर्धत । तस्य लोकगुरुत्वादिति भावः । वृत्त्यनुप्रासोऽलंकारः ॥ ३५ ॥ **अद्वैतीति** । अद्वैतिन एव दुर्मदपिशाचजनाः तेषामतिदूरः तैर्दुष्प्राप्य इत्यर्थः । सुशोभनानि अर्णानि स्वर्णानि अष्टाक्षरादिमन्त्ररूपाणि तेषां उपयोगेन उपदेशेन परितुष्टः निरञ्जनानां निस्पृहाणां ओघः यस्य स तथोक्तः । स्वान्ते हृदये स्फुरन्ती दशमतीशस्य मध्वेशस्य हरेः पदाब्जमेव मुद्रा चिह्नं यस्य स तथोक्तः । विद्यानिधिः विद्यानिधिनामकगुरुः तदनु रामचन्द्रानन्तरं अवन्यां विलसति स्म । अत्र विद्यानिधिरेव विद्यानां निधिः निक्षेप इति श्लिष्टरूपकम् । लोके निधेस्तु पिशाचाश्रयत्वं च साञ्जनचक्षुषामेव दृश्यत्वेन स्वर्णलाभेन तुष्टिकरित्वं च स्वबहिर्भागे जातुषमुद्राङ्कितत्वं च प्रसिद्धम् । एतद्विपरीतगुणत्वप्रतिपादनेनास्य ततोऽप्युत्कर्षो वर्णित इत्याधिक्यताद्रूप्यरूपकम् । 'विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत् । रूपकं तत्त्रिधाधिक्यन्यूनत्वानुभयोक्तिभिः' ॥ इति लक्षणात् ॥ ३६ ॥ **संफुल्लेति** । संफुल्लं विकसितं 'फुल्लविकसन' इत्यस्माद्धातोरिदं रूपम् । 'अनुपसर्गात्फुल्ल' इत्यादि निपातनं तु 'भि फला विशरणे' इत्यस्येति । संफुल्लं बोधो ज्ञानमेव सुमं कुसुमं तस्य सौरभेण वासिताशः सुरभीकृतदिक् ज्ञानिनामग्रेसर इति दिगन्तविश्रान्तकीर्तिरित्याशयार्थः । गाढं दृढं विरक्तिरेव लता तया रचितोपगूहः कृतालिङ्गनाः महतां महात्मनां द्विजा एव द्विजाः पक्षिणः इति श्लिष्टरूपकम् । तेषां दभ्रः अल्पः तस्मादितरोऽनल्पः स चासावाश्रयश्च तस्य भावस्तत्ता । तया उपलक्षितः । क्षमाया तितिक्षायाः भूस्थानीभूतरघुनाथयतिरेव क्षमाभूरिति द्विरावृत्त्या योज्यम् । क्षमाभूर्वृक्षः अथ विद्यानिधेरनन्तरं अभ्राजत रराज सावयवरूपकम् ॥ ३७ ॥ **दुरिति** । विपुला भूमिः 'विपुला गह्वरी धात्री' इत्यमरः । सैव एकं पात्रं भाजनं तस्मिंस्थित्या हेतुना दुर्ज्ञेययोः परैरनभिज्ञेयस्वरूपयोः संश्च असंश्च सदसन्तौ सज्जनदुर्जनौ तयोरेव पयश्च पयश्च पयसी तयोः नीरक्षीरयोः 'पयः क्षीरं पयोऽम्बु च' इत्यमरः । विवेचविधौ स्वरूपनिश्चये कार्ये विभागकार्ये च प्रवीणः हंसस्य नीरक्षीरविभजनकौशलं प्रसिद्धम् । पद्माया लक्ष्म्याः आश्रयः परमात्मा तस्मिन् एकं केवलं तस्मिन्नेवेत्यर्थः । हृदयं यस्य सः । हंसपक्षे पद्ममेवाश्रयस्थानं तस्मिन्नेकं मुख्यं हृदयं यस्य सः तथा । 'एके मुख्यान्यकेवलाः' इत्यमरः । धूतपक्षपातः पक्षपातरहितः सर्वसम इत्यर्थः । हंसपक्षे कम्पितपतत्रपातः । रघुवर्य एव हंसः पक्षिविशेषः कस्य कुतुकं न चक्रे । जगद्गुरुत्वेन सर्वस्यापि हर्षं चकारेत्यर्थः ॥ ३८ ॥ **धीमदिति** । धीमज्जनाः विद्वज्जना तदनु रघुवर्यानन्तरं हृन्दि हृदयान्येव चकोराः तेषां सोमः चन्द्रः

**श्रीमद्रघूत्तमयतीश्वरमामनन्ति ॥ ३९ ॥ स प्राप पुत्रमणिमन्तरपास्तदोषभावादजस्र-मवलम्बितरामबिम्बम् । अर्हद्घटामुकुटभूषणमत्र वेदव्यासाभिधानयतिनं मतिनन्दनीयम् ॥ ४० ॥ सोऽयं यतीममधुना निरवद्यहृद्यविद्याविवेकविनयादिमहानिषद्याम् । भूशंकरात्मसुकृतातिशयेन विद्याधीशं कराम्बुजतलात्कलयाञ्चकार ॥ ४१ ॥ मुक्ताज-बन्धवगुणो वरपारिकाङ्क्षी प्राग्रेसरत्वमवलम्ब्य गुरोर्नियोगात् । विद्योततेऽभ्यधिक-**

---

इवाचरतीति सोमन्ती । ‘ सर्वप्रातिपदिकेभ्यः क्विप् ’ इत्याचारार्थे क्विपि लटः शत्रादेशे स्त्रियां ङीप् । चकोराणां सोम इव सज्जनानां हृदयानन्दिनीत्याशयः । सा चासौ जगज्जयतीति जगज्जायिनी लोकातिशायिनी च । उभयत्र ‘ स्त्रियाःपुंवत् ’ इत्यादिना पुंवद्भावः । पुंवद्भावात् स्त्रीप्रत्ययलोपः । विचित्रा अद्भुता पवित्रा चर्या चारित्रं यस्य तं तथोक्तम् । राम इवाचरतीति रामत् । पूर्ववदाचारार्थे क्विपि लटः शत्रादेशः । स चासौ रमेशश्च तस्य चरणयोः प्रवणान्तरङ्गं आसक्तहृदयं श्रीमांश्चासौ रघूत्तमयतीश्वरश्च तं आमनन्ति अभ्यस्यन्ति बुधाः स्तुवन्तीत्यर्थः । आङ्पूर्वात् ‘ म्ना अभ्यासे ’ इत्यस्माद्धातोः ‘ पाघ्रा ’ इत्यादिना मनादेशः । सोमत् इत्यत्र धर्मवाचकलोपात् लुप्तोपमाभेदः । तथा पादचतुष्टये आदिवर्णानन्तरं मकारस्य नियमेन प्रक्षेपात् शब्दचित्रम् । संयुक्तजकारस्य असकृदावृत्त्या वृत्त्यानुप्रासश्च । एतेषां परस्परनैरपेक्ष्यात्तिलतण्डुलवत्संसृष्टिः ॥ ३९ ॥ **स इति** । अपास्तदोषभावात् अस्तकल्मषत्वात् हेतोः अन्यत्र गरादिदोषपञ्चकाभावात् । तदुक्तं रत्नलक्षणे ‘ गारत्रासश्च बिन्दुश्च रेखा च जलगर्भता । सर्वरत्नेष्वमी पञ्च दोषाः साधारणाः स्मृताः । ’ इति । अजस्रं अन्तःकरणेन अवलम्बितरामबिम्बं सन्ततं रामप्रतिमाध्यानपरमित्यर्थः । अन्यत्र अन्तः स्वाभ्यन्तरे अवलम्बितानि प्रतिगृहीतानि प्रतिफलितानीति यावत् । रामाणि रम्यानि बिम्बानि निकटस्थवस्तुप्रतिबिम्बानि यस्य तं तथोक्तम् । एतेन नैर्मल्यातिशयो व्यज्यते । ‘ बिम्बं बिम्बाफले रूपे प्रतिबिम्बे च कथ्यते । ’ इति शद्बनिर्णये । अर्हतां पूज्यानां घटाः समूहाः यद्यपि ‘ करीणां घटना घटा ’ इत्यभिधानात् घटाशब्दः करिसमूहवाची तथाप्युपचारादित्यदोषः । तस्याः मुकुटभूषणं पूज्येषु श्रेष्ठमित्यर्थः । अन्यत्र स्पष्टोऽर्थः । अत्र लोके मत्या आगामिगोचरबुद्धिविशेषेण हेतुना ‘ मतिरागामिगोचरा ’ इति लक्षणात् । नन्दनीयं विद्वद्भिरिति भावः । अन्यत्र मत्या परीक्षकाणां बुध्या नन्दनीयं व्यासाभिधानयतिनं पुत्रमणिं पुत्रश्रेष्ठं मणिं रत्नमिति च गम्यते । सः रघूत्तमयतिः प्राप । केवलध्वनिरेवायं न तु श्लेषः ॥ ४० ॥ **स इति** । सोऽयमिति हस्तनिर्देशः । यतिः वेदव्यासः अधुना निरवद्यानां हृद्यानां विद्याविवेकविनयादीनां महती निषद्या आपणः । आपणे यथायोग्यजनोपदेयानि प्रशस्तवस्तूनि प्रकाशन्ते तथा अस्मिन्नपि विद्यादयो गुणा इति तात्पर्यार्थः । निषद्येत्यभेदरूपकम् । ‘ आपणस्तु निषद्यायाम् ’ इत्यमरः । विद्याधीशं विद्याधीशाख्ययतिं भुवो भूमेः शं श्रेयः करोतीति भूशंकरः लोकोपकारक इत्यर्थः । तेन आत्मना सुकृतातिशयेन हेतुना कराम्बुजतलात् कलयांचकार जनयति स्म पुत्रत्वेन लब्धवानित्यर्थः ॥ ४१ ॥ **मुक्तेति** । आजबन्धवः संसारः ‘ संसारस्त्वाज-बन्धवः ’ इति वैजयन्ती । तस्मिन् गुणा शब्दादिविषयाः ‘ गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्य-तन्तुषु ’ इत्यमरः । मुक्ता आजबन्धवगुणा येन सः मुक्ताजबन्धवगुणः त्यक्तसंसारभोग इत्यर्थः । तथा गुरोर्वेदव्यासस्य नियोगात् वराः श्रेष्ठाः ये पारिकाङ्क्षिणः मुनयः संन्यासिन इत्यर्थः । ‘ तपस्वी तापसः पारिकाङ्क्षी वाचंयमो मुनिः । ’ इत्यमरः । तेषामग्रेसरत्वं श्रेष्ठत्वं अवलम्ब्य संन्यस्येत्यर्थः । एषः विद्याधीशः निस्तन्द्रे तीक्ष्णे शाणेन घर्षणेन प्रतिपन्नतेजाः मणिर्यथैव मणिरिव अभ्यधिकं

**मेषमणिर्यथैव निस्तन्द्रशाणकषणप्रतिपन्नतेजाः ॥ ४२ ॥ जयतु जयतु साधुक्षेमकार्यात्तदीक्षो जयतु जयतु कारुण्यापगाञ्चत्कटाक्षः । जयतु जयतु तादृक्सद्गुणस्तोमसान्द्रो जयतु जयतु विद्याधीशयोगीन्द्रचन्द्रः ॥ ४३ ॥ स्वमतजलजराजद्राजहंसं प्रबोधक्रमततहरिपादाम्भोजसंसक्तिपूतम् । नमत नमत विद्याधीशयोगीशमुद्यद्विमलशलभपालीवीतिहोत्रं महान्तः ॥ ४४ ॥ माद्यन्मायावादिमातङ्गतर्क प्रोद्यत्कुम्भोत्पाटनप्रौढसिद्धम् । हृद्यारूढश्रीशपदद्वन्द्वमीडे विद्याधीशं कीर्तिविद्योतिताशम् ॥ ४५ ॥ श्रीमद्वेदव्यासहस्तप्रशस्तांभोजोदीतं भाजनं सत्कलानाम् । वैराग्यश्रीनाट्यरङ्गान्तरङ्गं विद्याधीशं वीतसङ्गं भजामः ॥४६॥ वन्दे सर्वाश्चर्यकृत्स्वीयचर्यं वन्दे वार्धिग्रावगाम्भीर्यधैर्यम् । वन्दे नानाम्नायशास्त्रास्ततन्द्रं वन्दे विद्याधीशवाचं-**

---

विद्योतते प्रकाशते उपमा ॥ ४२ ॥ **जयत्विति** । साधूनां सज्जनानां क्षेमकार्ये आत्तदीक्षः प्राप्तनियमः साधुरक्षणासक्त इत्यर्थः । विद्याधीशयोगीशचन्द्रः जयतु जयतु सर्वोत्कर्षेण वर्ततामिति आदराद्द्विरुक्तिः । 'जी जये' इत्यस्माद्धातोराशिषि लोट् । पादत्रयेऽपि एवमेव ज्ञातव्यम् । कारुण्यापगायाः क्षमानद्याः अञ्चत्कटाक्षः कृपारसपूर्वकनेत्रान्तनिरीक्षण इत्यर्थः । तादृशां अप्रतिप्रानां सद्गुणानां स्तोमेन सान्द्रः । मालिनी वृत्तम् । 'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणात् ॥ ४३ ॥ **स्वेति** । स्वमतं द्वैतसिद्धान्तः तदेव जलजं तस्मिन् राजत् राजहंसस्तं संततमध्वदर्शनव्याख्यानलोलमित्यर्थः । प्रबोधेन शास्त्रजन्यज्ञानेन क्रमेण प्रतिदिनं तता विस्तृता हरिपादाम्भोजे या संसक्तिः आसक्तिः तया पूतम् । उद्यतां वर्धमानानां विमतानां एव शलभानां पतङ्गकीटानां पाल्याः वीतिहोत्रं अग्निं विमतजनदाहकमित्यर्थः । विद्याधीशयोगीशं महान्तः हे महात्मानः इति सभ्यान् प्रति बन्दिनः संबोधनम् । नमत नमत नमस्कुरुत । आदराद्द्विरुक्तिः । पूर्ववद्वृत्तम् ॥ ४४ ॥ **माद्यदिति** । माद्यन्तो ये मायावादिनः त एव मतङ्गाः गजाः तेषां तर्का युक्तयः त एव प्रोद्यन्तः उज्जृम्भमाणाः कुम्भाः तेषां पाटने दलने प्रौढसिद्धः तं हृद्यारूढश्रीशपदद्वन्द्वं हरिपादयुगासक्तहृदयं कीर्त्या विद्योतिताशं प्रकाशितदिक्कं विद्याधीशं ईडे स्तौमि । अहमिति शेषः । न चात्र बन्दिनोर्वचने 'इडे' इति एकवचनप्रयोगः कथमिति शङ्क्यम् । जयत्वित्यारभ्य आसर्गान्तं स्तोत्ररूपकश्लोकानां श्लोकोपकारतयोक्तत्वान्न शङ्काकलङ्काङ्कुरावकाशः । शालिनीवृत्तम् । 'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः' इति लक्षणात् ॥ ४५ ॥ **श्रीमदिति** । श्रीमद्वेदव्यासस्य हस्त एव प्रशस्ताम्भोजं तस्मादुदितं उत्पन्नं उत्पूर्वात् 'इण् गतौ' इत्यस्माद्धातोः कर्तरि क्तः । सन्तश्च ताः कला विद्याः चतुर्दशसंख्याकाः 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥' इति स्मृतेः । तासां भाजनं पात्रं वैराग्यश्रियः वैराग्यसमृद्धेः नाट्यरङ्गान्तरङ्गं नर्तनस्थानायमानान्तःकरणं अत्यन्तविरक्तमित्यर्थः । वीतसङ्गं दुष्टसंगतिरहितं विद्याधीशं भजामः ॥ ४६ ॥ **वन्दे इति** । सर्वेषां जनानामाश्चर्यं करोतीति सर्वाश्चर्यकृत् 'उपपदान्तरेऽपि' इत्यनुवृत्तेः कृञः क्विप् । सा च सा स्वीया स्वकीया चर्या यस्य तं तथोक्तं वन्दे अहमिति शेषः । वार्धिश्च ग्रावा शैलश्च वार्धिग्रावाणौ 'ग्रावाणौ शैलपाषाणौ' इत्यमरः । (?) तयोर्गाम्भीर्यधैर्य इव गाम्भीर्यधैर्ये यस्य सः वार्धेर्गाम्भीर्यं ग्राव्णोधैर्यमिति विवेकः । तं तथोक्तं वन्दे । नानेत्यव्ययम् । नाना बहुप्रकारेषु आम्नायेषु वेदेषु शास्त्रेषु च अस्ततन्द्रं निरस्तजाड्यं जागरूकमित्यर्थः । वन्दे । उक्तविशेषणत्रयविशिष्टः कः इत्याकाङ्क्षायां विशेष्यमाह विद्याधीश इति । वाचंयमेन्द्रः

यमेन्द्रम् ॥ ४७ ॥ श्रीशपदपेशलकुशेशयमरन्दप्राशनधुतेतररसाशयमिलिन्दम् । धीशकलितान्यमतपाशमिह विद्याधीशयतिवर्यमघनाशमहमीडे ॥ ४८ ॥ विश्वसुधीजनविनुतं वित्तसुखेषणविमुखनिजस्वान्तम् । वितरणविनोदशीलं विद्याधीशाख्यवित्तमं कलये ॥ ४९ ॥ आप्रालेयमहीध्रसिन्धुकमनप्रान्तावनिस्थाखिलप्रज्ञावद्गणमौलिभूषणमणिश्रेणीसमाटीकिनि । अस्माकं रमतामनारतमिताखण्डोर्ध्वरेखानघे विद्याधीशयतिप्रवर्हचरणाम्भोजे मनोबम्भरः ॥ ५० ॥ मीमांसान्यायशद्बस्मृतिनिगमततिज्योतिरद्वैतिविद्यागद्यालङ्कारपद्यादिमविविधकलासिन्धुमुष्टिंधयानाम् । जेता साक्षादधीताकलुषदश-

---

मौनिश्रेष्ठः 'वाचि यमो व्रते' इति खच् । 'वाचंयमपुरन्दरौ च' इति मान्तत्वम् । तं वन्दे ॥ ४७ ॥ श्रीशेति । श्रीशस्य पदं पाद एव पेशलकुशेशयं चारुकमलं 'चारौ दक्षे च पेशलः' इत्यमरः । तस्मिन्यो मरन्दः ध्यानरूपमकरन्दः तस्य प्राशनेन पानेन धुतः विसृष्टः इतररसो येन स चासौ आशयमिलिन्दः हृदयभ्रमरो यस्य तं तथोक्तं हरिचरणसरोजध्यानेतरसुखविमुखमनस्कइत्यर्थः । धिया बुध्या शकलितः शकलीकृतः खण्डितः अन्यमतमेव पाशः रज्जुर्यस्य तं तथोक्तम् । इह लोके अघं नाशतीति अघनाशः स्मरणमात्रेण प्राणिनां दुरितनाशनमित्यर्थः । पचाद्यच् । यद्वा घना निरन्तरा आशा तृष्णा न विद्यते यस्य स अघनाशः । तं विद्याधीशयतिवर्यमहमीडे । वृत्यनुप्रासालंकारः रूपकेण सृज्यते । चामरवृत्तं 'चामरमिदं भजसनैः समुदितम्' इति लक्षणात् ॥ ४८ ॥ विश्वेति । विश्वैः समस्तैः सुधीजनैर्विनुतं विशेषेण नुतं स्तुतं वित्तसुखानि इषणानि सुखशद्बेन दारेषणपुत्रेषणयोः संग्रहः । तेभ्यो विमुखं निजस्वान्तं हृदयं यस्य तं तथोक्तं वितरणं सज्जनेभ्योऽभीष्टवस्तुप्रदानं तदेव विनोदः क्रीडा सैव शीलं स्वभावो यस्य तं तथोक्तं वेत्तीति विद् विद्वान् 'सत्सुद्विष' इत्यादिना क्विप् । अतिशयेन वित् वित्तमः विद्याधीशाख्यश्चासौ वित्तमश्च तं कलये नौमि । आर्यावृत्तम् ॥ ४९ ॥ आप्रालेयेति । प्रालेयमहीध्रो हिमाद्रिः तस्मादारभ्य आप्रालेयमहीध्रं अभिविधावव्ययीभावः । सिन्धवः नद्यः 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्' इत्यमरः । तासां कमनः कामुकः समुद्र स एव प्रान्तो यस्याः साः सा चासाववनिश्च हिमवत्समुद्रयोरवाचीनभूमिरित्यर्थः । तस्यां तिष्ठन्तीति तस्थाः 'सुपि स्थः' इति कः । 'आतो लोप इटि च' इति आकारलोपः । तेषामखिलानां प्रज्ञावतां विदुषां गणस्य मौलिभूषणानी मुकुटानि तेषु तेषु या मणिश्रेणी रत्नराजिः तां समाटीकते प्रतिपद्यते इति तत्समाटीकि भूमिस्थाशेषविद्वज्जननमस्कृतमित्यर्थः । तस्मिन् । इतया प्राप्तया अखण्डया अच्छिन्नोर्ध्वरेखालक्षणेन निमित्तेन अनघे निरवद्ये विद्याधीशयतिप्रबर्हस्य यतिश्रेष्ठस्य चरणाम्भोजे अस्माकं मनोबम्भरः मानसभृङ्गः अनारतं अजस्रं रमतां क्रीडतु । आशिषि लोट् । शार्दूलविक्रीडितं वृत्तम् । लक्षणमुक्तम् ॥ ५० ॥ मीमांसेति । मीमांसा मीमांसाशास्त्रं न्यायः तर्कशास्त्रं शब्दः शब्दशास्त्रं स्मृतयः अष्टादशसंख्याकाः निगमानां वेदानां ततिः पङ्क्तिः चत्वारो वेदा इत्यर्थः । ज्योतिः ज्योतिषग्रन्थाः अद्वैतिविद्या अद्वैतप्रतिपादकं शास्त्रं गद्यानि चूर्णिका अलंकाराः काव्यप्रकाशकादयः पद्यानि श्लोकाः काव्यानीत्यर्थः । तानि आदिमानि यासां ताः पद्यादिमाश्च ता बहुविधाः कला विद्याश्च आदिमशद्बेन शाक्तेयसौगतादिशास्त्राणां संग्रहः । ताः मुष्टिं धयन्ति पिबन्ति इति मुष्टिंधयाः मुष्टिपरिमितां कुर्वन्ति इत्यर्थः । तासु शिक्षितबुद्धय इति यावत् । 'नाडीमुष्ट्योश्च' इति खश् । 'अरुर्द्विष' इत्यादिना मुमागमः । तेषां मीमांसाद्यखिलविद्याभिज्ञानां

**मतिप्रौढशास्त्रः प्रजीयाद्विद्याधीशाख्ययोगी शतमवनितले वत्सरान्सत्सभेड्यः ॥ ५१ ॥ दाक्षिण्यैकखनिं दयारसधुनिं वैराग्यवीरुद्वनिं सद्वृत्तावनिमुत्तमान्वयजनिं चेतःस्फुरत्पावनिम् । मायामत्यरिहेतिमाततयशःस्फातिं कृतेशस्तुतिं विद्याधीशयतिं प्रतीह सततं तन्मो नतीनां ततिम् ॥ ५२ ॥ श्रीमध्वं सरसीजनाभनृहरी श्रीमाधवाक्षोभ्ययत्युत्तंसौ जयतीर्थयोगिककुदं विद्याधिराजाभिधम् । वागीशं च कवीन्द्रपूर्वकमथ श्रीरामचन्द्रं नुमः श्रीविद्यानिधिविवर्यमग्रिमरघूंस्तान्नाथवर्योत्तमान् ॥ ५३ ॥ श्रीशालेशकृपापात्रे**

---

साक्षात् न तु परंपरया जेता वादे सकलप्रतिवादिजित्वर इत्यर्थः । जेतेति तृजन्तत्वा 'त्कर्तरि च' इति कर्मणि षष्ठी । तृन्नन्तत्वे 'न लोक' इत्यादिना षष्ठीप्रतिषेधात् । अधीतानि अभ्यस्तानि अकलुषानि निर्दोषाणि दशमतेः मध्वाचार्यस्य प्रौढानि दुर्ज्ञेयानि शास्त्राणि येन सः तथोक्तः । अत एव सतां सभासु सभायां वा ईड्यः स्तुत्यः विद्याधीशाख्यः अवनितले शतं वत्सरान् 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । प्रजीयात् प्रकर्षेण जयतु । आशिषि लिङ् । स्रग्धरावृत्तम् म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ।' इति लक्षणात् ॥ ५१ ॥ **दाक्षिण्येति** । दाक्षिण्यस्य एकखनिः मुख्याकरः 'खनिः स्त्रियामाकरः स्यात्' इत्यमरः । विद्याधीशस्य खनित्वनिरूपणाद्दाक्षिण्यगुणस्य मणित्वनिरूपणं गम्यते । दयारसस्य धुनीं नदीं दयारसपूर्णमित्यर्थः । वैराग्यमेव वीरुत् लता तस्या वनीं वनं वैराग्याश्रयमित्यर्थः । सद्वृत्तस्य अवनिं भूमिं उत्तमान्वये उत्तमवंशे जनिः जननं यस्य तम् । चेतसि स्फुरन् प्रकाशमानः पावनिः पवनपुत्रो मध्वो यस्य सः सन्ततमध्वध्यानतत्परमित्यर्थः । माया जगन्मिथ्येति मतिर्येषां ते मायामतयः मायावादिनः तेषां अरिहेतिं चक्रायुधं तत्खण्डनपटुमित्यर्थः । 'अरिश्चक्रे चक्रवाके' इति विश्वः । 'हेतिरायुधदीधित्योः' इति रभसः । आतता दिक्षु विस्तृता यशःस्फातिः वृद्धिर्यस्य सः तम् । 'स्फातिर्वृद्धौ' इत्यमरः । विद्याधीशयतिं प्रति यतिमुद्दिश्य 'लक्षणेत्थंभूताख्यान' इत्यादिना कर्मप्रवचनीयत्वम् । तद्युक्ते द्वितीया । सन्ततं नतीनां प्रणामानां ततिं पङ्क्तिं तन्मः कुर्मः । वयमिति शेषः । अत्र सर्वत्राभेदाध्यवसायादभेदरूपकाणां संसृष्टिः । अर्थद्वये नकारतकाराणामसकृदावृत्त्या शब्दचित्रम् ॥ ५२ ॥ इत्थं विद्याधीशमुपश्लोक्य पूर्वोक्तमध्वादिगुरून् क्रमेण श्लोकद्वयेनोद्दिशति **श्रीति** । श्रीमध्वं सरसिजनाभः पद्मनाभः स च नृहरिश्च सरसिजनाभनृहरी तौ श्रीमाधवश्च अक्षोभ्यश्चेति यत्युत्तंसौ यतिश्रेष्ठौ तौ जयतीर्थ इति योगिककुदः योगिप्रधानः तं 'प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम्' इत्यमरः । विद्याधिराज इति अभिधा अभिधानं यस्य तं कवीन्द्रः पूर्वो यस्य सः कवीन्द्रपूर्वकः तं वागीशं प्राक् कवीद्रं तदनन्तरं वागीशमित्यर्थः । श्रीरामचन्द्रं च श्रीविद्यानिधिवर्यं च अग्रिमः आद्यः रघुः रघुशब्दो येषां अग्रिमरघवः तान् अग्रिमरघून् नाथवर्योत्तमान् रघुनाथरघुवर्यरघूत्तमानित्यर्थः । इह लोके नुमः स्तुमः । 'नु स्तुतौ' इत्यस्माद्धातोर्लट् ॥ ५३ ॥ **श्रीशेति** । श्रीशस्य हरेः अलेशाया अनल्पायाः कृपायाः पात्रौ पात्रभूतौ व्यासश्च अधीशश्चेति मुनियतिनौ नुमः । ययोर्व्यासाधीशमुन्योरेव अग्रे पुरस्तात् वेदस्य विद्यायाश्च जृम्भणं प्रकाशं वदन्ति । वेदविद्ये ययो रग्रे एव प्रकाशेते इति जना वदन्ति । अनेन वेदविद्याभिज्ञौ तौ एवेति गम्यते । वास्तवार्थस्तु व्यासाधीशयोरग्रे आदौ वेदविद्याशब्दविजृम्भणे वेदव्यास विद्याधीश इति भवति । तौ नुमः इति संबन्धः ।

**व्यासाधीशमुनी नुमः । ययोरेव वदन्त्यग्रे वेदविद्याविजृम्भितम् ॥ ५४ ॥ इति विविधवचोभिः श्लाघितस्तत्र ताभ्यां सदसदुचितरक्षाशिक्षणार्थं जगत्याम् । शिरसि गुरुवराज्ञामावहन्प्रत्यगाशां युतबुधनिकुरम्बो योगिराजः प्रतस्थे ॥ ५५ ॥ इति श्रीविद्याधीशविजये पञ्चमः सर्गः ॥ ५ ॥**

**अथ संगलिकामसौ पुरीमधिरूढाग्रिमदन्तधोरणः । धवलाब्जगभीरघुंघुमध्वनिसंछिन्नदिगन्तरो ययौ ॥ १ ॥ अभिगम्य पदाम्बुजानतैः कृतिभिस्तत्र यतीन्दुरञ्चितः । नियमादवसद्वराश्रमप्रथमं मासचतुष्टयं मुदा ॥ २ ॥ करवीरपुरीमितस्ततो मघवन्मुख्यमरुद्भिरादृते । स्फुटपञ्चसरित्समागमे पटुधीराप्लवकर्म निर्ममे ॥ ३ ॥ बहुपुण्यसरित्सु मज्जनं कलयन् सज्जनकामितार्थदः । करहाटमगात्स नीवृतं श्रितकृष्णासरिदूर्मिमारुतम् ॥ ४ ॥ कनकोज्ज्वलकान्तिमर्गलायतदोर्युग्ममुदारदर्शनम् । तमु वीक्ष्य जनाः**

---

अनुष्टुप् छन्दः ॥५४॥ इतीति । इत्युक्तरीत्या विविधैः वचोभिः तत्र सभायां ताभ्यां भूसुरबन्दिभ्यां श्लाघितः प्रशंसितः योगिराजो विद्याधीशः जगत्यां सतामसतां च उचिता रक्षा च शिक्षणं च सतां रक्षा असतां शिक्षणं चेति विवेकः । तदर्थं गुरुवरस्य वेदव्यासस्य आज्ञां गच्छेत्युक्तिरूपां शिरसि आवहन् अङ्गीकृत्येत्यर्थः । युतबुधनिकुरम्बः विद्वत्समूहससहितः सन् प्रत्यगाशां पश्चिमदिशं प्रतस्थे प्रस्थितवान् । मालिनीवृत्तम् । इति श्रीविद्याधीशव्याख्यायां गदयकोनेरिणा जनार्दनाचार्यविरचितायां पञ्चमः सर्गः ॥ ५५ ॥

अस्मिन्सर्गे विद्याधीशस्य जैत्रयात्राप्रकारं वक्तुमारभते । **अथेति** । अथ प्रस्थानानन्तरम् । असौ विद्याधीशः अधिरूढं अग्रिमं श्रेष्ठं दन्तधोरणं यानं येन स तथोक्तः । 'सर्वं स्याद्वाहनं यानं युग्यं पत्रं च धोरणम्' इत्यमरः । अधिरूढगजदन्तमयपल्लकीक इत्यर्थः । धवलः शुभ्रः यः अब्जः पल्लक्यग्रभागयायिना पुंसा आध्मातः शंखः । 'अब्जौ शंखशशाङ्कौ च' इत्यमरः । तस्य गभीरैः गंभीरैः घुंघुमध्वनिभिः संछिन्नदिगन्तरः सन् संगलिकाख्यां पुरीं ययौ । अस्मिन्सर्गे वियोगिनीवृत्तम् । 'विषमे ससजा गुरुः समे सभरा लोऽथ गुरुर्वियोगिनी' इति लक्षणात् ॥१॥ **अभीति** । यतीन्दुः अभिगम्य प्रत्युद्गम्य पदाम्बुजानतैः निजपादाब्जपतितैः कृतिभिः संगलिकानिवासिभिः विद्वद्भिः अञ्चितः पूजितः सन् तत्र संगलिकायां वराश्रमस्य प्रथमं मासचतुष्टयं चातुर्मास्यमित्यर्थः । 'संख्याया अवयवे तयप्' इति तयप् । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । मुदा हर्षेण नियमात् देशान्तारयात्रादिकं विहायेत्यर्थः । अवसत् वसति स्म ॥ २ ॥ **करवीरेति** । ततः चातुर्मास्यानन्तरं पट्वी धीर्यस्य स पटुधीः विद्याधीशः करवीरपुरीं करवीराख्यनगरीं इतः प्राप्तः । 'इण् गतौ' इति धातोः कर्तरि क्तः । मघवन्मुख्यमरुद्भिः इन्द्रादिदेवैः आदृते श्लाघिते स्फुटे पञ्चसरितां कृष्णवेण्यादीनां समागमे आप्लवकर्म स्नानविधिं निर्ममे चकार ॥ ३ ॥ **बह्वीति** । सज्जनकामितार्थदः स विद्याधीशः बहुपुण्यसरित्सु मज्जनं स्नानं कलयन् श्रिताः आश्रिताः कृष्णासरितः ऊर्मीणां तरङ्गाणामारुताः वायवो यस्मिन् तत्तथोक्तम् । एतेन तद्देशस्य कृष्णासंनिकृष्टत्वात्प्रविख्यातिशयो व्यज्यते । करहाटं करहाटाख्यं नीवृत् देशः 'नीवृज्जनपदौ देशविषयौ' इत्यमरः । तं अगात् । 'इण् गतौ' इत्यस्माद्धातोः लुङ् । 'इणो गा लुङि' इति गादेशः । 'गातिस्था' इत्यादिना सिचो लुक् ॥ ४ ॥ **कनकेति** । कनकोज्ज्वलकान्तिं कनवदुज्ज्वलदेहप्रभं अर्गलायतदोर्युग्मं अर्गलावद्दीर्घबाहुयुगं उदारदर्शनं गम्भीरवीक्षणं अत एव सुलक्षणैः शास्त्रोक्तशुभमहापुरुषचिह्नैः

सुलक्षणान्वितमानेमुरनल्पविस्मयाः ॥ ५ ॥ क्व च नोपनिषद्विजृम्भणैः क्वचिदाम्नाय-पदक्रमेरणैः । क्वचिदूर्जिततर्कविद्यया कुहचित् पाणिनिसूत्रचर्चया ॥ ६ ॥ परसंकरभाष्य-निन्दनैर्वरमध्वागमनन्दनैः क्वचित् । प्रतिसंवसथं पराजितान्विमतानापततो व्यधादसौ ॥ ७ ॥ तमुपेत्य विजेतुमाग्रहाच्छतशः केचन शास्त्रजल्पतः । तदपूर्वतराकृतिस्फुर-त्प्रभयैवास्तधियः पराद्रवन् ॥ ८ ॥ श्रुतिवर्त्मगतद्वचःसुधारससंक्षालितहार्दकर्दमाः । अयथार्थमतिं व्यधुः परं स्वमते केचन विश्वतः कृताम् ॥९॥ मरुदागमशुद्धधान्यसंतत-वाग्जालविजृम्भणेऽभितः । नवदण्डधरे च साध्वसाच्चिरमस्पन्दि न वादिबभ्रुभिः ॥ १० ॥ उपदीकृतचन्द्रचन्दनद्रविणोर्णाम्बरभव्यवस्तवः । जगृहुर्बहवो जगद्गुरोः

---

आन्वितं तं विद्याधीशं वीक्ष्य मार्गे दृष्ट्वा जनाः अनल्पविस्मयाः तादृशसुलक्षणशालिनः पुंसः कदाप्यदृष्टपूर्वत्वादतिमात्राश्चर्याः सन्तः आनेमुः प्रणतवन्तः ॥ ५ ॥ अथ श्लोकद्वयमेकान्वयेनाह । **क्वचनेति** । कचन क्वचिद्देशे उपनिषदां बृहदारण्यकादीनां विजृम्भणैः तदर्थोपन्यासैरित्यर्थः । क्वचित् आम्नायस्य वेदस्य पदक्रमाणां ईरणैः उच्चारणैः क्वचित् ऊर्जितया बलवत्तया तर्कविद्यया तदुपन्यासेनेत्यर्थः । कुहचित् कुत्रचित् पाणिनिसूत्राणां चर्चया सम्यक् तदर्थव्यवहारेण ॥ ६ ॥ **परेति** । क्वचित् परो विमतः यः संकरः तस्य भाष्यस्य तत्कृतवेदान्तभाष्यस्य निन्दनैः दूषणैः वरस्य श्रेष्ठस्य मध्वागमस्य नन्दनैः सिद्धान्तत्वेन स्थापनेनानुमोदनैः असौ विद्याधीशः प्रतिसंवसथं प्रतिग्रामं 'समौ संवसथग्रामौ' इत्यमरः । आपततः आग्रहात्स्वं जेतुमागच्छतः विमतान् विमतविद्वज्जनान् पराजितान् शास्त्रसाधनैर्निर्जितान् व्यधात् चकार ॥ ७ ॥ **तमिति** । केचन मायावादिनः शास्त्रविषये यो जल्पः मत्सरपूर्वकवादः तस्मात् जल्पतः । 'पञ्चम्यास्तसिल्' । आग्रहात् तं विद्याधीशं विजेतुं शतशः समुपेत्य प्राप्य तस्य अपूर्वतरायाः आकृतेः शरीरस्य स्फुरन्त्या प्रभया तद्दर्शनेनैवेत्यर्थः । आस्तां तावद्वादसङ्गः इतिभावः । अस्तधियः अस्फुरितबुद्धयः सन्तः पराद्रवन् पलायन्ते स्म ॥ ८ ॥ **श्रुतीति** । केचन मायिनः श्रुतिवर्त्म गच्छतीति श्रुतिवर्त्मगं वेदमार्गानुसारि स्वकीयकर्णमार्गप्रवेशि च तस्य विद्याधीशस्य यद्वचः सच्छास्त्रव्यवहाररूपं तदेव सुधारसः तेन संक्षालितः हृत्संबन्धी हार्दः कर्दमः अज्ञानरूपो पङ्को येषां ते तथोक्ताः सन्तः विश्वतः सर्वत्र 'सार्वविभक्तिकस्तसिः' इति सप्तम्यास्तसिः । कृतां अयथार्थमतिं मिथ्येति बुद्धिमित्यर्थः । परं केवलं स्वमते न्यधुः । स्वयोग्यतानुसारेण तद्वचनाकर्णनमात्रेणोद्बुद्धज्ञाना अस्मदीयं मिथ्यामतमेव मिथ्या न प्रपञ्चः इति निश्चिक्युरित्यर्थः ॥ ९ ॥ **मरुदिति** । अभितः परितः नवश्चासौ दण्डधरश्च नवदण्डधरः नूतनसंन्यासीत्यर्थः । अत्र अस्मिन् विद्याधीशे मरुदागमो मध्वशास्त्रं तदेव शुद्धधान्यं तस्मिन्विषये संततं विस्तृतं वाग्जालस्य विजृम्भणं व्यवहारो येन स तथोक्तः तस्मिन् सति मरुतो वातस्य आगमेन वीजनेन शुद्धे अपललीकृते धान्यविषये संततवाक्निष्ठुरोक्तिजालं आम्नायश्च तयोर्विजृम्भणं येन तस्मिन् तथोक्ते सति इति च गम्यते । अत एव वादिनः विमताः त एव बभ्रवः नकुलाः 'विपुले नकुले विष्णौ बभ्रुर्ना पिङ्गले त्रिषु' इत्यमरः । तैः चिरं नास्पन्दि न चलितम् । 'स्पदि किंचिच्चलने' इत्यस्माद्धातोर्भावे लुङ् । लोके कस्मिंश्चित्पुरुषे दण्डं करे धृत्वा धान्यसमीपे जालं वितत्य जागरूकतया स्थिते सति यथा नकुलादयो भयात् गर्तेभ्यो न चलन्ति तद्वदिति ध्वनिः ॥ १० ॥ **उपदीति** । बहवः प्रभवो राजानः उपदीकृतानि उपहारीकृतानि चन्द्रः कर्पूरः चन्दनं पाटीरं द्रविणं द्रव्यं ऊर्णाम्बराणि ऊर्णरोमनिर्मितसूक्ष्मवस्त्राणि च तथा भव्यवस्तूनि शुभ-

**प्रभवोऽमुष्य पदाम्बुजद्वयम् ॥ ११ ॥ पुनरेत्य गुरुं स दिग्जयी प्रणमन् द्राक्परिरम्भणादिभिः । समभावि सभान्तरेऽमुना परमानन्दपयोधिगाहिना ॥ १२ ॥ बृहदद्रिपुरीं गरीयसीं गुरुणासाकमथायमीयिवान् । निगमागमविद्भिरञ्चितामगमद्वेङ्कटननाथसंसदम् ॥ १३ ॥ अवनीपतिरेतदद्भुतप्रतिभाशंसिमनोहराकृतिम् । अवलोक्य तदाखिलैर्जनैरुदतिष्ठदद्द्रुतमुज्झितासनः ॥ १४ ॥ प्रणतिप्रणयोक्तिविष्टरार्पणपूर्वैरवनीश्वरेण सः । यददृष्टचरोऽपि मानितो महिमा संस्तवमीहते क्व वा ॥ १५ ॥ शनकैरुदजृम्भयत्तदा स्वमुपन्यासविधानकौशलम् । मणिमण्डपिकाग्रसंगतिद्विगुणोदारगभीरवागसौ ॥ १६ ॥ नटदीशजटासु लुठ्धुनीपटिमाटीकिपदालि तद्वचः । पिबतारचि केन विस्मयान्निजना-**

---

करच्छत्रचामरादिवस्तूनि च यैस्ते तथोक्ताः सन्तः जगद्गुरोरमुष्य विद्याधीशस्य पदद्वयीं जगृहुः पदद्वये प्रणामं चक्रुरित्यर्थः ॥ ११ ॥ **पुनरिति** । दिशो जयतीति दिग्जयी दिग्जयशीलः विद्याधीशः गुरुं वेदव्यासं पुनः एत्य प्राप्य सभान्तरे सभामध्ये प्रणमन् तस्मै नमस्कुर्वन् परमः उत्कृष्टः आनन्द एव पयोधिः तं गाहते इति तद्गाही तेन अतिहृष्टेनेत्यर्थः । अमुना गुरुणा द्राक् परिरम्भणादिभिः आलिङ्गनाद्युपचारैः आदिशब्देन कुशलप्रश्नादीनां संग्रहः । समभावि संभावितः ॥ १२ ॥ **बृहदिति** । अथ गुरुसम्भावनानन्तरं अयं विद्याधीशः गुरुणा साकं गरीयसीं गुरुतराम् 'प्रियस्थिर' इत्यादिना गुरोर्गरादेशः । ईयसुन् स्त्रियां ङीप् । बृहदद्रिपुरीं 'पेनुगोंड' इत्यान्ध्रव्यवहारः । ईयिवान् प्राप्तः । 'उपेयिवान्' इत्यादिना क्वसन्तनिपातनात्साधुः । निगमागमविद्भिः वेदशास्त्राभिज्ञैः अञ्चितां शालां अधिष्ठितामित्यर्थः । वेंकटरायः बृहदद्रिपुरस्थो नरपतिः तस्य संसदं सभामगमत् स्वयं प्राप जगाम ॥ १३ ॥ **अवनीति** । अवनीपतिः वेंकटपतिरायः तदा समये एतस्य विद्याधीशस्य अद्भुतां प्रतिभां बुद्धिविशेषं शंसति कथयतीति या तदद्भुतप्रतिभाशंसिनी सा चासौ या मनोहरा आकृतिश्च तां 'आकारसदृशी प्रज्ञा' इतिन्यायेनेति भावः । अवलोक्य अखिलैः जनैः सभ्यैः सह द्रुतं उज्झितासनः सन् उदतिष्ठत् उत्थितवान् ॥ १४ ॥ **प्रणतीति** । स विद्याधीशः अवनीश्वरेण राज्ञा भूतपूर्वो दृष्टो दृष्टचरः स न भवतीति अदृष्टचरः पूर्वं कदाप्यदृष्ट इत्यर्थः । भूतपूर्वे चरट् । यत् यस्मात्कारणात् प्रणतिर्नमस्कारः प्रणयोक्तिः स्नेहवचनं विष्टरार्पणं आसनप्रतिपादनमेव तत्पूर्वैरुपचारैरिति शेषः । मानितः संभावितः अभूदिति शेषः । 'तस्मात्' इत्याध्याहारः । यत्तदोर्नित्यसबंन्धात् । महिमा महित्वं क्वा कस्मिन्देशे वा संस्तवं परिचयं ईहते इच्छति । कुत्रापि नेच्छत्येव । पुरुषगतमहत्त्वमेव सर्वत्र परिचयं जनयतीत्यर्थः । उत्तरवाक्यार्थस्य पूर्ववाक्यार्थसमर्थनहेतुत्वात्काव्यलिङ्गमलंकारः ॥ १५ ॥ **शनकैरिति** । तदा समये असौ विद्याधीशः मणिमण्डपिकायाः अग्रेण शिखरेण संगत्या सङ्गेन द्विगुणोदारा आवृत्त्या महती गभीरा वाक् यस्य सः तथोक्तः सन् । मण्डपस्य मणिमयत्वेन प्रतिध्वनिसंभवादिति भावः । स्वं स्वकीयं उपन्यासविधाने कौशलं शनकैः उदजृम्भयत् प्रकटयामास । शास्त्रे कुत्रचिदुपन्यासं चकारेत्यर्थः ॥ १६ ॥ **नटदिति** । नटतो नाट्यं कुर्वतः ईशस्य हरस्य जटासु लुठन्ती नाट्यवशात् भ्राम्यन्ती या धुनी गङ्गानदी तस्याः पटिमा पटुत्वं 'भावे इमनच्' । तं आटीकते प्राप्नोति इति पटिमाटीकिनी पदानां सुप्तिङन्तानां आलिः पङ्क्तिः यस्मिंस्तत्तथोक्तम् । तादृग्गङ्गासाम्येन पदानां स्वच्छत्वमाधुर्यपुङ्खानुपुङ्खविर्भावानां समृद्धिर्व्यज्यते । तत्तस्य विद्याधीशस्य वचः वाचं पिबता सादरं शृण्वतेत्यर्थः ।

**साशिखरं न तर्जनी ॥ १७ ॥ धरणीपरिणीरमुष्य धीसुगुणग्रामसमग्रनन्दथुः । सुलभेक्षुरसालशालिकाचणकांग्रामचतुष्टयीमदात् ॥ १८ ॥ स दिशं गुरुशासनात्ततः कलशीनन्दनकल्पिताश्रयाम् । अगमत्पथि राजमण्डलीमुकुटीलालितपादपङ्कजः ॥ १९ ॥ सलिलाकरसेतुमाव्रजन्कपिसेनाकरनैपुणीवदम् । विहितस्नपनो विभुः सतामनमत्तत्र च रामनामकम् ॥ २० ॥ पथिपाण्ड्यमहीपतिं शिवागममर्मज्ञतया दुराग्रहम् । स चरन्सुचिरं यदृच्छयावृतपाषण्डगणं व्यलोकयत् ॥ २१ ॥ निजपूर्णसुखेतिपद्यगं बहुधार्थंश्रुतिसिद्धमीरयन् । अतिविस्मितचेतसस्ततोऽप्यभजच्चायमनूनमाननाम् ॥ २२ ॥ नतिभिर्नुतिभिः कृतीशिता प्रतिदेवायतनं रमापतिम् । समतोषय-**

---

केन पुरुषेण सभायामितिभावः । विस्मयात् निजनासाशिखरे तर्जनिः अङ्गुष्ठानन्तराङ्गुलिः नारचि न कृता । सर्वो जनोऽप्याश्चर्येण निजनासाग्रनिहिततर्जनीकोऽभूदित्यर्थः ॥ १७ ॥ **धरणीति** । परिणयतीति परिणीः पतिः 'सत्सुद्विष' इत्यादिना क्विप् । धरिणीपरिणीः भूपतिः वेङ्कटपतिरायः अमुष्य विद्याधीशस्य धियो बुद्धेः ये गुणाः शुश्रूषादयः तदुक्तं 'शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा । ऊहापोहार्थविज्ञानं तत्त्वज्ञानं च धीगुणाः' ॥ इति । तेषां ग्रामः समूहः 'गुणपूर्वो ग्रामशब्दस्तत्समूहाभिधायकः' ॥ इति उत्पलमालायाम् । तेन तत्परामर्शेनेत्यर्थः । समग्रनन्दथुः संपूर्णहर्षः सन् सुलभाः तत्रत्यानामप्रयत्नलभ्याः इक्षवश्च रसालानि च तत्फलानि शालिकाः कलमाः चणकाश्च यस्यां तां तथोक्तां सुक्षेत्रवतीमित्याशयः । ग्रामाणां चतुष्टयीं चतुरो ग्रामान् 'संख्याया अवयवे तयप्' इति तयपि 'टिड्ढाणञ्' इति ङीप् । अदात् तस्मै दत्तवान् ॥ १८ ॥ **स इति** । ततः अनन्तरं स विद्याधीशः गुरोः शासनात् कलशः एव कलशी अपचर्यार्थे स्त्रियां ङीप् । तस्या नन्दनः कुम्भसंभवोऽगस्त्यः तेन कल्पिताश्रयां अधिष्ठितां दिशं दक्षिणां दिशमित्यर्थः । पथि मार्गे राजमण्डल्याः समूहस्य मुकुटीभिः किरीटैः पूर्ववत् स्त्रियां ङीप् । लालितपादपङ्कजः सन् तया वन्द्यमान इत्यर्थः । अगमत् ॥ १९ ॥ **ससिलेति** सतां विभुः विद्याधीशः कपिसेनायाः नलादिवानरसैन्यस्य नैपुण्यमेव नैपुणी 'षित्वात् ङीष्' करनैपुणीं कररचनाचातुर्यतां वदतीति तद्वदः 'वद् व्यक्तायां वाचि' इत्यस्माद्धातोः पचाद्यच् । कपिसेनाकरनैपुण्यस्मारकमित्यर्थः । तं सलिलाकरसेतुं आव्रजन् तत्र सेतौ विहितस्नपनः कृतस्नानः 'ष्णा शौचे' इत्यस्माद्धातोर्ण्यन्ताल्ल्युट् । 'अर्तिह्री' इत्यादिना पुगागमः । 'मितां ह्रस्वः' इति ह्रस्वः । रामनामकं रामेश्वरं अनमत् प्रणनाम ॥ २० ॥ **पथीति** । स विद्याधीशः सुचिरं यदृच्छया स्वैरितया 'यदृच्छा स्वैरिता' इत्यमरः । चरन् पथि कुत्रचिन्मार्गे वृतपाषण्डगणं पाषण्डगणावृतं शिवागममर्मज्ञतया शैवशास्त्रतत्त्वाभिज्ञत्वेन हेतुना दुराग्रहं पाण्ड्यमहीपतिं मणलूरपुराधिपतिं पाण्ड्यराजं व्यलोकयत ददर्श ॥ २१ ॥ **निजेति** । अयं विद्याधीशः 'निजपूर्णसुखे' इति यत्पद्यं 'निजपूर्णसुखामितबोधतनुः' इति द्वादशस्तोत्रस्थश्लोकः तत्पद्यं गच्छतीति पद्यगं 'अन्येष्वपि दृश्यते' इति गमेर्डः । श्रुतिसिद्धं अर्थं बहुधा बहुप्रकारेण ईरयन् वदन् अतिविस्मितचेतसः तदुपन्यासाकर्णनेन अत्यन्तविस्मितचित्तात् ततः पाषण्डमतानुसारिणः पाण्ड्यभूपादपि किमुतान्यस्मादितिभावः । अनूनमाननां वस्त्रवाहनादिसंभावनां अभजत् । चकारः समुच्चये ॥ २२ ॥ **नतिभिरिति** । शेमुष्या बुध्या विदितः अशेषाणां शास्त्रार्थानां विशेषो यस्य तस्य भावस्तत्ता तया अञ्चितः पूजितः सकलसज्जनैरिति भावः । कृतीनां विदुषां ईशिता प्रभुः 'ईश् ऐश्वर्ये' इत्यस्माच्चाच्छील्ये तृन् ।

**देष शेमुषीविदिताशेषविशेषताञ्चितः ॥ २३ ॥ न पुरोऽस्य परेऽवतस्थिरे विशदानर्गलवाग्झरीपुषः । क्व पलालसमुद्धतिः क्षितौ पृथुझञ्झामरुति प्रखेलति ॥ २४ ॥ कृतभूमिभृदाश्रयं क्वचित्पथि कालज्ञमपार्थभाषिणम् । वरमानसगोचरैर्वचोविभवैरेष जिगाय हंसराट् ॥ २५ ॥ सुखतीर्थगवीयशःपयोभरमाब्रह्मण्डकटाहपूरितम् । अवतीह धियास्ततन्द्रया समयज्ञाखुभुजो विदुद्रुवुः ॥ २६ ॥ अखिलान्यमताब्धिमन्थनाज्जनितां**

---

प्रतिदेवायतनं प्रतिदेवायतनेषु यथार्थेऽव्ययीभावः । रमापतिं हरिं नतिभिः नमस्कारैः नुतिभिः स्तोत्रैश्च समतोषयत् तं प्रसन्नं चकारेत्यर्थः ॥ २३ ॥ **नेति** । विशदा स्पष्टा अनर्गला अप्रतिहता वागेव झरी प्रवाहः तां पुष्णाति प्रकाशयति वाग्झरीपुषः 'पुष्णातेः क्विप् । तस्य अस्य विद्याधीशस्य पुरस्तात् परे विमतविद्वांसः नावतस्थिरे वादाय न स्थितवन्तः पलायन्ते स्मेत्यर्थः । तिष्ठतेः 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । उक्तार्थमेव दृष्टान्तकथनेन द्रढयति । **क्वेति** पृथुः महान् झञ्झामरुत् सवृष्टिकवायुः 'झञ्झावातः सवृष्टिकः' इत्यभिधानात् । तस्मिन् । क्षितौ खेलति क्रीडति सतीत्यर्थः । पलालाः निष्फलतृणानि 'पलालोऽस्त्री स निष्फलः' इत्यमरः । तेषां समुद्धतिः उज्जृम्भणं क्व नु कुत्रापीति काकुः । प्रचण्डमारुतेन सर्वे पलालाश्च दूरं उत्सार्यन्ते एवेति भावः ॥ २४ ॥ **कृतेति** । हंसराट् यतिश्रेष्ठः एष विद्याधीशः हंसपक्षिश्रेष्ठश्चेति गम्यते । 'हंसः सूर्ययतिब्रम्हपक्षिभेदेषु कीर्त्यते' । इति शब्दार्णवे । क्वचित् पथि मार्गे कृतभूमिभृदाश्रयं कृतराजाश्रयम् कृतपर्वताश्रयं च 'भूमृद्भूमिधरे नृपे' इत्यमरः । अपार्थं अपगतार्थं भाषते इति अपार्थभाषी तं ज्योतिःश्लोकेन असंगतार्थेन व्यवहरन्तमित्यर्थः । काची पूर्ची इति यत्किंचित्कर्णकठोरं कूजन्तमिति गम्यते । कालज्ञं ज्योतिषिकं कुक्कुटं च 'कालज्ञौ ज्ञानिकुक्कुटौ' इत्यभिधानम् । ज्ञानी ज्योतिषिकः । वरं श्रेष्ठं मानसं लघुमानसाख्यज्योतिःशास्त्रं तद्गोचरैर्वचोविभवैः लघुमानसश्लोकोपन्यासैरित्यर्थः । श्रेष्ठमानसाख्यसरोगोचरैः तत्प्रशंसापरैरित्यर्थः । वचोविभवैः वाक्चातुर्यैश्च जिगाय जितवान् । 'सन्लिटोर्जेः' इति कुत्वम् । 'मानसं सरसि स्वान्ते ज्योतिर्ग्रन्थेऽपि कथ्यते' । इति व्याडिः । नायं श्लेषालङ्कारः । तस्मिन् विशेष्यश्लिष्टत्वात् । न च समासोक्तिः तस्यां प्रस्तुतव्यवहारमात्रपरत्वात् । किंतु ध्वनिरेव । तथा च विद्याधीशहंसयोः ज्योतिषिककुक्कुटयोश्च उपमालंकारो ध्वन्यते । इत्यलं प्रपञ्चनेन ॥ २५ ॥ **सुखेति** । आब्रह्मण्डं ब्रम्हाण्डमेव कटाहः तस्मिन् पूर्णं 'वा दान्तशान्त' इत्यादिना विकल्पादिडागमः । सुखतीर्थस्य मध्वाचार्यस्य गावो वाचः शास्त्ररूपाः सुखतीर्थगव्यः । 'गोरतद्धितलुकि' इति समासान्तष्टच् । वाग्वाचिनो गोशब्दस्य स्त्रीत्वान्ङीप् । तद्विवेचितं सर्वानन्देन 'स्वर्गे रश्मौ च वज्रे च बलीवर्दे च गौः पुमान् । स्त्री बाणरोहिणीदृग्दिग्वाग्भूमिष्वप्सु भूम्नि च ।' इति । सुखतीर्थगवीनां यद्यशः तज्जन्या कीर्तिः तदेव पयोभरः क्षीरपूरस्तम् । इह विद्याधीशे अस्ततन्द्रया जागरूकया धिया अवति रक्षति सति । परसिद्धान्तनिराकरणपूर्वकं मध्वसिद्धान्तस्थापनमेव तज्जन्यकीर्तिरक्षणमिति ज्ञेयम् । समयज्ञाः शास्त्रज्ञाः विमताः त एव आखुभुजः मार्जाराः 'ओतुर्बिडालो मार्जारो विषदंशक आखुभुक् ।' इत्यमरः । विदुद्रुवुः पलायन्ते स्म । स्वकीयदूषणस्यानवकाशतयेति भावः । लोके मार्जारा हि पात्रस्थस्य पिधानादिना सम्यक्रक्षितस्य क्षीरस्य पानानवकाशात् पलायन्ते तद्वदिति रूपकोत्थापितो ध्वनिः ॥ २६ ॥ **अखिलेति** । स विद्याधीशः अखिलं अन्यमतमेवाब्धिः तस्य

**दक्षिणदिग्जयश्रियम् । हरयेऽर्पयितुं कुतूहली स पुरं राजतपीठमासदत् ॥ २७ ॥ मुखनिन्दितचन्द्रमिन्दिरार्चितपद्द्वन्द्वममन्दसौभगम् । तमवन्दत नन्दनन्दनं स जितेन्दीवरसुन्दरद्युतिम् ॥ २८ ॥ व्रजगोगणवच्चराचरं विधिशर्वादिनियन्तुमुज्झितुम् । निपुणोऽहमिति स्फुटं करे धृतरज्जुं कलिताब्जखेलने ॥ २९ ॥ मृदुकालियमस्तकावलीमथनत्रस्तमणीगणैर्भिया । परिसेवितमेत्य पार्श्वयोः कलितानेककदीपकैतवात् । ॥ ३० ॥ तुलसीदलकोटिभिर्मुदा कलशे संभृतपावनाम्बुभिः । विधिवच्छुचिरेष विग्रहं यतिराडार्चिचदच्युतास्पदम् ॥ ३१ ॥ निजपूजनतुष्टनीरधिप्रभवेशात्तकृपास्रगञ्चितः ।**

---

मन्थनाद्विलोडनात् निराकरणादित्यर्थः । जनितां दक्षिणदिशः जयश्रियं दक्षिणदिगुपार्जितां जयलक्ष्मीं हरये कृष्णरूपाय अर्पयितुं तस्याः पतित्वात् 'इष्टं दत्तम्' इति प्रमाणादिति भावः कुतुहली सन् राजतपीठं रजतपीठाख्यं पुरं आसदत् प्रापत् । सीदतेर्लुङ् पुषादित्वादङ् ॥ २७ ॥ **मुखेति** । स विद्याधीशः मुखेन निन्दितचन्द्रं चन्द्राधिकचारुवक्त्रमित्यर्थः । इन्दिरया अर्चितपद्द्वन्द्वं पूजितपादयुगं अमन्दसौभगं अनल्पलावण्यं जितेन्दीवरं तद्वच्छाममित्यर्थः । सुन्दरी द्युतिर्देहकान्तिर्यस्य तं तथोक्तं तत्रत्यं नन्दनन्दनं कृष्णदेवं अवन्दत । वृत्त्यनुप्रासालंकारः ॥ २८ ॥ तमेव द्वाभ्यां विशिनष्टि । **व्रजेति** । विधिशर्वादि चराचरं जगत् 'चराचरं स्याज्जगति' इति विश्वः । व्रजे नन्दव्रजे यो गोगणः गवां समूहः तमिव व्रजगोगणवत् । 'इव वत् वा यथा शब्दः' इति दण्डी । नियन्तुं सुखदुःखफलानि भोजयितुं उज्झितुं तत्कार्येषु प्रवर्तयितुं चेत्यर्थः । गोगणपक्षे स्पष्टार्थः । अहं निपुणः अस्मीति शेषः । इत्येवं मत्वेतिशेषः । गम्यमानार्थत्वादप्रयोगः । विधुतं तिरस्कृतं अम्बुजस्य खेलनं लीला येन सः । ततोऽपि सुन्दर इत्यर्थः । तस्मिन् करे धृतरज्जुं तं अवन्दत इति पूर्वेणान्वयः । स्फुटं राजतपीठकृष्णमूर्तेः रज्जुकरत्वं प्रसिद्धम् । तस्य जगन्नियमनोज्झनसाधनत्वेनोत्प्रेक्षणादुत्प्रेक्षा । सा च स्फुटशब्दोपादानाद्वाच्या ॥ २९ ॥ **मृद्विति** । मृद्वी या कालीयस्य कालीयाख्यसर्पस्य यमुनाह्रदवासिनः मस्तकावलिः फणापङ्क्तिः तस्या मथनं स्वपदाभ्यां तदुपरि नर्तनं मर्दनं तेन त्रस्तैः फणाभ्यः श्रुतैः मणिगणैः 'मणिर्द्वयोः' इत्यभिधानात् स्त्रीलिङ्गता । भिया भयेन हेतुना स्वस्थानरीत्या स्वाभिमर्दनरीत्या शङ्कयेति भावः । पार्श्वयोः कलिता स्थापिता अनेकका बहवः 'एकादाकिनिच्चासहाय' इति चकारात्कन् प्रत्ययः । ते च ते दीपाश्च तेषां कैतवात् कपटात् एत्य आगत्य परिसेवितम् । अत्र पार्श्वद्वयस्थदीपानां कालीयसर्पफणामणित्वसंभावनादुत्प्रेक्षा । सा च कैतवपदोपात्तापन्हवेन संकीर्यते । पुरा खलु भगवान् कृष्णावतारे यमुनाह्रदे कालीयसर्पविषदग्धोदकपानान्मूर्छितं गोगणं तन्निष्कासनेनोज्जीवयामासेति पौराणिकी कथा प्रसिद्धा ॥ ३० ॥ **तुलसीति** । शुचिः बाह्याभ्यन्तरशुद्धिमान् एष यतिराट् विद्याधीशः तुलसीदलानां कोटिभिः तथा कलशे संभृतैः पावनाम्बुभिश्च मुदा अच्युतस्य आस्पदं स्थानीभूतं विग्रहं प्रतिमां विधिवत् आर्चिचत् अर्चितवान् । 'अर्च् पूजायाम्' इत्यस्माद्धातोश्चौरादिकात् णौ चङ् ॥ ३१ ॥ **निजेति** । निजपूजनतुष्टात् नीरधिप्रभवाया अब्धिजाताया लक्ष्म्या ईशात् स्वामिनः रजतपीठकृष्णात् आत्ता या कृपैव स्रक् तया अञ्चितः । संपादितकृष्णानुग्रह इत्याशयः । तपोनिधिराट् स विद्याधीशः ततः परं कृष्णपूजानन्तरं 'इक्केरी' इति लोकभाषाया संज्ञया ईरितं जनैरुक्तं लोकप्रसिद्धमित्यर्थः । पुरमुपैत् प्रापत् । उपपूर्वात् इणो लङ्

**स तपोनिधिराडुपैत्ततः परमिक्केरिरितीरितं पुरम् ॥ ३२ ॥ महिपेन स मानितोऽन्वहं श्रवणागन्तुकितात्मकीर्तिना । मुदमारचयन्मनीषिणां न्यव्यसत्तत्र दिनानि कानिचित् ॥ ३३ ॥ दनुजोऽवनिदेववेषभृत्प्रथमः कश्चन वेदविद्विषाम् । अजनिष्ट विशिष्टदूषको भुवि रङ्गोजिरिति प्रतीतिभाक् ॥ ३४ ॥ स खलोऽखिललोकजित्वरीं गिरमुच्छिष्टगणेशपूजया । अधिगत्य ततान धीमतां विधुतिं दिक्षु विशेषतः सताम् ॥ ३५ ॥ जगदीड्यममुं स जातुचिद्यतिसामान्यधियातिचञ्चलः । समटीकत संसदि स्थितं भषको वानलमामिषभ्रमात् ॥ ३६ ॥ अधमे निजपक्षविस्तृतिक्षुभितान् श्येन इवाखिलद्विजान् ।**

---

॥ ३२ ॥ **महिपेति** । स विद्याधीशः अन्वहं प्रतिदिनं यथार्थेऽव्ययीभावः । 'अनश्च' इति अव्ययीभावाट्टच् । श्रवणयोः आगन्तुकिता अतिथीकृता 'आगन्तुरतिथिस्तथा' इत्यमरः । स्वार्थे कप्रत्ययः । आत्मनः कीर्तिर्येन तेन । प्राक्श्रुतस्वपाण्डित्यप्रथेनेत्यर्थः । महिपेन इक्केरिस्थेन राज्ञा मानितः संभावितः । मनसः ईषिणो मनीषिणः पृषोदरादित्वात्साधुः । तेषां मुदं आचरयन् कुर्वन् स्वगुणैरिति भावः । तत्र इक्केरिपुरे कानिचिद्दिनानि न्यवसत् निवसति स । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया ॥ ३३ ॥ तदानीं तेन सह वादाय कश्चिद्विमतविद्वान् आगतः इति वक्तुं तावत्तत्स्वरूपकथनपूर्वकं तमुद्दिशति । **दनुज इति** । वेदं विद्विषन्तीति वेदविद्विषः मायावादिनः । अत्र वेदविद्वेषो नाम अन्यार्थकल्पनम् । तेषां प्रथमोऽग्रेसरः । अवनिदेववेषभृत् ब्राह्मणवेषधारी दनुजः कश्चिद्दैत्यः ब्राम्हणयोनौ उत्पन्न इति भावः । रङ्गोजी इति प्रतीतिं प्रसिद्धिं भजतीति भाक् 'भजो ण्विः ।' इति ण्विः । रङ्गोजीनामक इत्यर्थः । भुवि विशिष्टान् साधून् दूषयतीति विशिष्टदूषकः अजनिष्ट अभूत् ॥ ३४ ॥ **स इति** । खलो दुर्जनः स रंगोजी उच्छिष्टगणेशस्य पूजया मध्वादिकस्य स्वोच्छिष्टस्यैव गणपतये निवेदनीयत्वादुच्छिष्टगणपतिरिति प्रसिद्धम् । तथा चोच्छिष्टगणपतिकल्पे 'अयन्त्रितशिखाकच्छप्रक्षाल्याङ्घ्रिमदक्षिणम् । अञ्जनाञ्चितवामाक्षो नीलवस्त्रावगुण्ठितः । गणेशं पूजयेद्भक्त्या स्वोच्छिष्टानि निवेदयेत् । मद्यं मांसं मोदकानि पलाण्डुं मूलकादिकम् ।' इत्यादि । अखिललोकान् वादे अखिललोकान् जयतीत्यखिललोकजित्वरी 'इण्नश्जिसर्तिभ्यः क्वरप्' इति क्वरप् । 'टिड्ढाणे' इत्यादिना स्त्रियां ङीप् । तां गिरं वाचं शास्त्रोपन्याससामर्थ्यमित्याशयः । अधिगत्य दिक्षु धीमतां विदुषां विशेषतः तत्रापि विशेषेण सतां साधूनां विधुतिं तिरस्कारं ततान वादे तान् जित्वा तदवमतिं चकारेत्यर्थः । 'राक्षसाः कलिमाश्रित्य जायन्ते ब्रम्हयोनिषु । ब्राम्हणानेव बाधन्ते तत्रापि श्रोत्रियान् कृशान् ॥' इति प्रमाणादिति भावः ॥ ३५ ॥ **जगदिति** । अतिचञ्चलः स रङ्गोजी अतिचञ्चलः भषकः शुनकः 'शुनको भषकः श्वा स्यात्' इत्यमरः । आमिषभ्रमात् मांसभ्रान्त्या अनलं वा अग्निमिव 'वा विकल्पोपमानयोः' इत्यमरः । संसदि स्थितं जगदीड्यं लोकपूज्यममुं विद्याधीशं यतिं सामान्यधिया साधारणोऽयं यतिः कश्चनेति बुद्ध्या तदनुभावमज्ञात्वैवेति भावः । जातुचित् समटीकत प्राप । वादे तद्विजिगीषयेतिभावः ॥ ३६ ॥ **अधम इति** । अधमे स्वरूपतो नीचे रङ्गाख्ये श्येनः पक्षिविशेषः तस्मिन्निव अखिलद्विजान् समस्तब्राम्हणान् पक्षिणश्च 'दन्तविप्राण्डजा द्विजाः' इत्यमरः । निजपक्षस्य स्वसाध्यस्य स्वसिद्धान्तस्येत्यर्थः । विस्तृतः विस्तारः प्रकाशनमिति यावत् । स्त्रियां क्तिन् । निजपक्षयोः पतत्रयोः विस्तृतिश्च 'पक्षः पतत्रे कुचयोः पार्श्व सङ्ख्ये नृपस्य च । गजे स्याच्चुल्लिरन्ध्रे च बले साध्यविरोधयोः ।' इति उभयत्रापि शेषकारः । तथा क्षुभितान्

**विदधत्युदजृम्भि तत्क्षणाद्विनतानन्दकृता यतीन्दुना ॥ ३७ ॥ छलजातिविनिग्रहानुमागमशस्त्रास्त्रविमर्दभीषणः। मिषतां कृतरोमहर्षणो ववृधे वादरणो मिथस्तयोः॥ ३८॥ अधिभागवतं प्रपञ्चयत्यधमे श्रीधरवाक्यमार्गणान्। विजयध्वजिपञ्चिकासिना महताखण्डयदेष मौनिराट् ॥ ३९ ॥ पटुपाशुपतागमास्त्रमुद्वमति द्रागिह दुर्जयं खले। तदसौ यतिशेखरोऽच्छिनत्पवमानागमतावनास्त्रतः ॥ ४० ॥ पुनरुद्गिरति स्फुरत्प्रभाकरसिध्दान्तमहास्त्रमल्पके। सरसं स्वयमस्त्रमाददे यतिराजो घनतर्कताण्डवम्॥४१॥**

---

क्षोभं प्राप्तान् विदधति सति स एव क्षणः तत्क्षणः तम्। ‘कालाध्वनोरत्यन्तसंयोगे’ इति द्वितीया। विशेषेण नताः विनताः स्वपादप्रणताः तेषां आनन्दं ज्ञानोपदेशादिना हर्षं करोतीति विनतानन्दकृत् तेन।यतीन्दुना यतिश्रेष्ठेन विद्याधीशेन विनताया कश्यपपत्न्याः स्वमातुः आनन्दकृत् गरुडः इति ध्वनिः। तेन उदजृम्भि उज्जृम्भितम्। सदसि वादेन सकलान् जयति सति रङ्गोजीभट्टे विद्याधीशः स्वयं तेन सह वादाय सन्नद्धवानिति फलितोर्थः।यथा लोके श्येनाख्यपक्षिणः पक्षविस्तारमात्रेण सर्वेषु पक्षिषु विलीनेषु गरुत्मान् ततोप्युपरि उड्डीय तं तिरस्करोति तद्वदिति ध्वनिः। श्लेषस्योपमात्वङ्गमित्युभयोः संकरः ॥३७॥ **छलेति**। परोक्तस्य तदभिप्रेतार्थस्य अर्थान्तरं परिकल्प्य तद्दूषणेन परोक्तभङ्गः छलम्। दूषणासमर्थमुत्तरं जातिः। कथायां परेण परस्याहङ्कारखण्डनं विनिग्रहः! निर्दोषोपपत्तिरनुमानम्। निर्दोषशब्दः आगमः। छलजातिविनिग्रहानुमागमा एव शस्त्रास्त्राणि तेषां परस्परोक्तानामिति भावः। विमर्देन संघर्षणेन भीषणः। अत एव मिषतां द्रष्टॄणां सामाजिकानां कृतरोमहर्षणः तयोर्वादिनो वादरणः वादलक्षणयुद्धं मिथः अन्योन्यं ववृधे। अत्र छलजात्यादीनां बहवो भेदाः सन्ति ते च तदुदाहरणानि च विस्तारभयान्न लिख्यन्तेऽस्माभिः ॥ ३८ ॥ वादरणप्रवृत्तिप्रकारमेव त्रिभिराचष्टे **अधीति**। अधमे नीचे रङ्गाख्ये भागवते इति अधिभागवतं ‘अव्ययं विभक्ति’ इत्यादिना विभक्त्यर्थेऽव्ययीभावः। श्रीधर इति कश्चिद्विमतयतिः भागवतादिटीकाकारः तस्य वाक्यानि भागवतश्लोकव्याख्यारूपाणि तान्येव मार्गणाः बाणाः ‘गच्छते (?) बाणयाचकौ।’ इति रुद्रः। तान् प्रपञ्चयति विस्तारयति सति भागवतश्लोकार्थं श्रीधरीयटीकोक्तरीत्या व्याहरति सतीत्यर्थः। एष मौनिराट् विद्याधीशः महता एकत्रार्थतोऽन्यत्राकारतश्चेति भावः। विजयध्वजः इति कश्चन मध्वशिष्यः तस्य पञ्चिका भागवतटीका सैव असिः खड्गः तेन अखण्डयत् इति वादस्य रणत्वनिर्वाहः। उत्तरत्राप्येवमनुसन्धेयम् ॥ ३९ ॥ **पट्विति**। खले दुर्जने इह अस्मिन् रङ्गाख्ये पटुः अर्थगम्भीरः तीक्ष्णश्च पशुपतेरयं पाशुपतः स चासावागमश्च पाशुपतागमः शैवशास्त्रं स एवास्त्रं तत् द्राग् उद्वमति उद्गिरति सति अत्र उद्वमनं नाम शास्त्रपक्षे कोपाद्वदनं अस्त्रपक्षे मोचनं चेति लक्षणया सिध्यति। असौ यतिशेखरः पवमानस्य मध्वरूपवायोः आगमः शास्त्रं स एव पावनास्त्रं तस्मात्पावनास्त्रतः पञ्चम्यास्तसिः। तत्पाशुपतागमास्त्रं अच्छिनत् छिनत्ति स्म। मध्वशास्त्रेण शैवशास्त्रं पूर्वपक्षीचकारेत्यर्थः ॥ ४० ॥ **पुनरिति**। कुत्सितोऽल्पः अल्पकः। ‘कुत्सिते’ इति कप्रत्ययः। अत्यन्त कुत्सितः इत्यर्थः। तस्मिन् रङ्गाख्ये पुनः भूयः स्फुरन् प्रभाकरसिद्धान्त एव महास्त्रं तत् उद्गिरति वमति सति यतिराजो विद्याधीशः सरसं यावदर्थपदत्वादिगुणयुक्तं द्रवयुक्तं चेति गम्यते। ‘शृङ्गारादौ विषे विर्ये गुणे रागे द्रवे रसः’। इत्यमरः। घनं अतिमात्रं तर्कताण्डवं तर्कताण्डवनामव्यासतीर्थकृतशास्त्रं तत् आददे स्वीचकार। प्रभाकरः सूर्यः तन्निरोधानायं घनं मेघमाददे इति ध्वनिः। तर्कताण्डववाक्योपन्यासेन प्रभाकरमखण्डयदित्यर्थः। तदुपन्यासप्रकारो विस्तार-

**इति तत्र यतीन्द्रमायिनोर्लिखितान्योऽन्यविचित्रपत्रिकम् । व्यगलत्प्रसभं विवादिनोर्बत मासत्रितयं दिनोपमम् ॥ ४२ ॥ अथ जातु खले प्रयागभुव्यपवर्गोऽसुमुचामितीरिणि । अपरोक्षचिदेव हेतुरित्यवदत्संसदि तं सदग्रणीः ॥ ४३ ॥ गुरुपक्षमवेक्ष्य स त्रयी-कृतपक्षं प्रतिपक्षभीषणम् । श्लथपक्षतयाद्रवत्क्षणाद्धृतमन्दाक्षभरोऽप्यधिक्षपम् ॥४४ ॥ इत्थं रङ्गाभिख्यमाख्यातकीर्तिर्निर्जित्य द्राक् सौगतैर्बद्धसख्यम् । प्रातर्धन्योऽपूजि राजन्यमुख्यैः संख्यावद्भिः सौख्यतीर्थार्यशिष्यः ॥ ४५ ॥ पुनरपि कृतमुञ्जीग्रामगूढप्रचारं**

---

भयान्न लिख्यते ॥ ४१ ॥ **इतीति** । तत्र सभायां इत्युक्तप्रकारेण लिखिताः अन्योन्यस्य विचित्राः पत्रिकाः यस्मिन् कर्मणि तद्यथा भवति तथा । स्वसिद्धान्तलेखनपूर्वकमित्यर्थः । प्रसभं बलात्कारं यथा तथा विवादिनोः विवदमानयोः यतीन्दुश्च मायी च यतीन्दुमायिनौ विद्याधीशरङ्गाख्यौ तयोः मासत्रितयं दिनैः त्रिभिः दिवसैः उपमा यस्य तत्तथोक्तं सत् व्यगलत् । अतिक्रान्तम् । स्पर्धया परस्परविवादपरवशाभ्यां ताभ्यां मासत्रयमपि दिनत्रयवदविज्ञातदैर्घ्यत्वेनातिवाहितमित्यर्थः । बतेत्याश्चर्ये । 'खेदानुकम्पासंतोष विस्मयामन्त्रणे बत ।' इत्यमरः ॥ ४२ ॥ **अथेति** । अथ मासत्रयानन्तरं जातु कदाचित् खले रङ्गाख्यदुर्जने प्रयागभुवि प्रमागक्षेत्रे असून् प्राणान् मुञ्चन्तीत्यसुमुचः तेषामपवर्गः मोक्षः स्यादिति शेषः । 'ये वै तन्वा विसृजन्ति धीरास्ते जनासो अमृतत्वं भजन्ते ' इति श्रुतेरिति भावः । इत्येवं ईरिणि भाषमाणे सति सताभग्रणीः सदग्रणीः विद्याधीशः संसदि सभायां अपरोक्षचित् अपरोक्षज्ञानमेव हेतुः अपवर्गस्य कारणं इति तं प्रतिवादिनमवदत् । 'तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते ' । 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥' 'यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता ॥'' नायमात्मा प्रवचनेन लभ्यो न मेधया ।' इत्यादिश्रुतेः । 'ज्ञानं विना तु या मुक्तिः साम्यं च मम विष्णुना ।' इत्यादिपुराणे वैपरीत्येदोषश्रवणाच्चेति भावः । 'ये वै तन्वा ' इत्यादिश्रुतेः मोक्षसाधनपरम्पराभिप्रायेण सत्यत्वमिति ज्ञेयम् ॥ ४३ ॥ **गुर्विति** । त्रयी त्रयो वेदाः । इति वेदास्त्रयस्त्रयी ' इत्यमरः । तया कृतपक्षः कृतबलः तं प्रबलगमावानित्यर्थः । अत एव प्रतिपक्षं प्रतिवादिनं भीषयतीति प्रतिपक्षभीषणः तं प्रतिवादिपक्षनिरासकत्वेन तेषां भयंकरमित्यर्थः । गुरोः लोकगुरोः विद्याधीशस्य पक्षं सिद्धान्तमित्यर्थः । अवेक्ष्य प्रबलत्वेन विचिन्त्येत्यर्थः । स विमतः श्लथः दुर्बलः पक्षः स्वसाध्यसिद्धान्तः यस्य तस्य भावस्तत्ता तया हेतुना क्षपायां रात्र्यां इति अधिक्षपं विभक्त्यर्थेऽव्ययीभावः । धृतमन्दाक्षभरः प्राप्तलज्जातिशयोऽपि क्षणादिव पलायते स्म । अत्र अपिशब्दः भारवाहकस्य पलायनदुष्करत्वसूचकः । क्षकारस्यासकृदावृत्त्या वृत्त्यनुप्रासलंकारः ॥४४॥ **इत्थमिति** । आख्यातकीर्तिः जनैः श्लाघितयशाः अत एव धन्यः सुकृती सौख्यतीर्थो यो मध्वाचार्यः तस्य शिष्यः विद्याधीशः इत्थं उक्तरीत्या सौगतैः बौद्धैः बद्धसख्यं तन्मतानुसारित्वादिति भावः । रङ्गाभिख्यं द्राक् शीघ्रं निर्जित्य स्थित इति शेषः । प्रातः अनेद्युः प्रातःकाले राजन्यः क्षत्रियः इक्केरिपुरपतिः । 'मुर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराड् ।' इत्यमरः । तन्मुख्यैः तत्पूर्वैः संख्यावाद्भिः पण्डितैः अपूजि सभायां पूजितः । शालिनीवृत्तम् ॥ ४५ ॥ **पुनरिति** । कृतः मुञ्जीग्रामे गूढप्रचारो येन तं तथोक्तम् । मुञ्जीग्राम इति कश्चन ग्रामः । पुनरपि नरपतेः भटैः क्लृप्ताकर्षणं इक्केरिराजशासनात् तद्भटैः सर्वतोऽपि विमृग्य मुञ्जीग्रामतः पुनरपि इक्केरिपुरं प्रत्यानीतं पादयोः निजचरणयोः नम्रं तं

**नरपतिभटकुलत्पाकर्षणं पादनम्रम् । यतिपतिरनुकम्पाक्लिन्नचित्तोऽत्यजत्तं सपदि गलितमानः सोऽपि तं देशमेव ॥ ४६ ॥ वादीन्द्रनामयतिरेत्य दुराग्रहेण तं जातु कश्चन जगद्गुरुसार्वभौमम् । वादे जितः प्रबलभीतिहयाधिरूढः सादीन्द्र एव भवति स्म पलायमानः ॥ ४७ ॥ यतिराजपराजितप्रधावद्धुवादिव्रजजित्वरो यदेषः । अभवत् परिधावने ततोऽभूद्भुवि वादीन्द्र इति स्फुटार्थनामा ॥ ४८ ॥ अद्वैतिन् कद्वदत्वं जहि भव विनतः सौगत न्यायमार्गान्मापैर्नैयायिक त्वं त्वमसि जडपदे भाट्टपट्टाभिषिक्तः । दूरं प्राभाकर त्वं सर भुवि परधीध्वान्ततिग्मांशुशीलो विद्याधीशोऽयमे ।**

---

रङ्गोजिं यतिपतिः विद्याधीशः अनुकम्पया दयया क्लिन्नचित्तः आर्द्रहृदयः सन् अत्यजत् स्वैरं गच्छेति विसृष्टवान् । 'प्रणिपात प्रतीकारः संरम्भो हि महात्मनाम्' । इति भावः । तदनु त्यजनानन्तरं गलितमानः सोऽपि रङ्गोजी अपि तं देशं आशु अत्यजत् इति संबन्धः । तं देशमेव त्यक्त्वा पलायितवानित्यर्थः । मालिनीवृत्तम् ॥ ४६ ॥ **वादीति** । जातु कदाचित् वादीन्द्रनामा यतिः कश्चन सुधीन्द्रतीर्थमठीयो वैष्णवयतिः दुराग्रहेण अहमेव विद्वानिति दुरभिनिवेशेन हेतुना जगद्गुरुसार्वभौमं तं विद्याधीशं एत्य प्राप्य जिगीषयेतिभावः । वादे जितः तेन निर्जितः सन् अत एव प्रबलः दुर्निवारः भीतिरेव हयः तमारूढः हयारूढः 'गत्यर्थाकर्मक' इत्यादिना रोहतेः कर्तरि क्तः । अत एव पलायमानः सन् सादीन्द्र एव अश्वारोहश्रेष्ठ एव भवति स्म । भीतिहयमाधिरुह्य पलायमानत्वादस्य युक्तं सादीन्द्रत्वं वादेन निर्जितस्य कुतः पुनः वादीन्द्रत्वमिति भावः । वसन्ततिलकावृत्तम् ॥ ४७ ॥ तस्य वादीन्द्रत्वमन्यथा निर्वक्ति । **यतीति** । यद्यस्मात्कारणात् एष वादीन्द्रः परिधावने पलायनविषये यतिराजेन विद्याधीशेन पराजिताः वादे निर्जिताः अत एव प्रधावन्तः पलायमानाः प्रतिवादिनः तेषां व्रजं जयतीति जित्वरः । 'इण्नशजिसर्तिभ्यः क्वरप्' इति क्वरप् । अभवत् । ततोऽपि स्वयं प्रागेव पलायमानत्वादिति भावः । ततः कारणादेव असौ यतिः भुवि वादीन्द्र इति स्फुटार्थनामा अन्वर्थाभिधेयोऽभूत् । प्रतिवादिजित्वरत्वाद्वादीन्द्रत्वमिति भावः । चन्द्रिकावृत्तम् । 'विषमे ससजा गुरुः समे स्युः सभरा यश्च यदीह चन्द्रिका सा' । इति लक्षणात् ॥ ४८ ॥ इत्थं विद्याधीशजैत्रयात्राप्रकारमुक्त्वा संप्रति तच्छिष्यवर्गमुखेन तस्यैव पाण्डित्यातिशयं कथयति । **अद्वैतिन्निति** । अद्वैतिमतमस्यास्तीति अद्वैती तस्य संबुद्धिः हे अद्वैतिन् । जात्यैकवचनमेतत् । उत्तरत्राप्येवमेवानुसन्धेयम् । कद्वदः गर्ह्यवादी 'गर्ह्यवादी तु कद्वदः' इत्यमरः । 'रथवदयोश्च' इति कोः कदादेशः । तस्य भावस्तत्त्वम् । जहि मिथ्यावादित्वं विसृजेत्यर्थः । सौगत हे बौद्ध विनतः अस्मद्गुरुपादयोः प्रणतो भव । नैयायिक हे तार्किक न्यायमार्गान्मापैः नापसरेत्यर्थः । अपपूर्वादिणो लङ् । दुःखनिवृत्तिरेव मोक्षः इत्याद्यन्यायमार्गं मा स्वीकुरु इत्यर्थः । हे भाट्ट भट्टमतावलम्बिन् त्वं जडपदे जडानां स्थाने पट्टाभिषिक्तोऽसि । तव जडस्यैव कर्मणः स्वातन्त्र्यप्रतिपादकत्वात् त्वमपि जडोऽसीत्यर्थः । हे प्रभाकर प्रभाकरमतावलम्बिन् त्वं दूरं सर गच्छ । 'सृ गतौ' इत्यास्माद्धातोर्लोट् । तव पलायनमेव शरणमित्यर्थः । कुतः भुवि परेषां विमतानां धीः बुद्धिरेव ध्वान्तं अन्धकारः तस्मिन् विषये तिग्मांशोः शीलं स्वभाव इव स्वभावो यस्य सः । ध्वान्तस्य सूर्य इव विमतबुद्धेर्निरासक इत्याशयार्थः । अयं एति युष्मद्विधदुर्जनतर्जनाय लोके चरतीत्यर्थः । इत्येवं अनुककुभं प्रतिदिशम् । यथार्थेऽव्ययीभावः । 'यथा वाचा निशा दिशा' इतिवत् ककुभशब्दस्याकारान्तत्वम् । अमुष्य विद्याधीशस्य शिष्यवर्गाः अदःशिष्यवर्गाः तैरगर्जि-

**तीत्यनुककुभमदःशिष्यवर्गैरगार्जि ॥ ४९ ॥ इति श्रीमद्विद्याधीशविजये महाकाव्ये षष्ठः सर्गः ॥ ६ ॥**

**ततः सन्ध्यावलीनाम ग्राममाप यतीश्वरः । रथ्याखेलद्भीमरथ्यालोलकल्लोलमारुतम् ॥ १ ॥ पुष्पवत्यप्यहो यत्र संगता सरिता तया । धुनी कापि धुनोत्यंहोधोरणीं मज्जतां नृणाम् ॥ २ ॥ यस्मिन्सरस्वतीतीर्थं प्रार्थनीयं सुरैरपि । दत्ते सरस्वतीप्रेयस्स्थानं प्रायस्तनूभृताम् ॥ ३ ॥ निरस्ताद्वैतसिद्धान्तध्वान्तो नन्दथुकृत्सताम् ॥ ४ ॥ तद्ग्रामे स्वगुणग्रामक्रीतां सुजनतां यतिः । तन्वन्नध्यापयत्तन्त्रसारमन्तेवसद्गणम् ॥ ५ ॥ विष्टरश्रवसः पादपद्माविष्टोऽन्तरोऽवसत् । स द्विरष्टदिनांस्तत्र शिष्टेष्टोऽष्टाङ्गयोगयुक्**

---

गर्जितम् । भावे लुङ् । अत्र शिष्यवर्गगर्जितोक्त्या न कोऽपि विमतो वादाय तदग्रे स्थितः इति गम्यते स्रग्धरावृत्तम् । इति श्रीमद्वदयकोनेरिणा जनार्दनसूरिणा विरचितायां विद्याधीशविजयव्याख्यायां शब्दार्थदीपिकायां षष्ठः सर्गः समाप्तः ॥

**तत इति** । रङ्गोजीप्रभृतिप्रतिवादिनिराकरणानन्तरं यतीशिता विद्याधीशः रथ्याः प्रतोल्यः 'रथ्या प्रतोली विशिखा ' इत्यमरः । तासु खेलन्तो विहरन्तो भीमरथी नाम नदी तस्या आलोलानां कल्लोलानां तरङ्गाणां मारुता वायवो यस्य तं तथोक्तम् । एतेन ग्रामस्य भीमरथीसंनिकृष्टत्वेन श्लाघ्यत्वं व्यज्यते । सन्ध्यावलीनाम सन्ध्यावलीति प्रसिद्धम् । नामेत्यव्ययं प्रसिद्धार्थे । ग्राममाप । प्राप्तवान् । अस्मिन्सर्गे वृत्तमनुष्टुप्छन्दः ॥ १ ॥ **पुष्पेति** । यत्र सन्ध्यावलीग्रामे तया सरिता भीमरथ्या पुष्पवत्याख्या रजस्विनीत्यपि गम्यते । कापि धुनी काचन नदी संगता सती मज्जतां स्वोदकेन स्नानं कुर्वतां नृणां अंहसां पापानां धोरणीं पङ्क्तिं धुनोति परिहरतीत्यर्थः । ' धूञ् कम्पने ' इति धातोर्लट् । अहो लोकेषु पुष्पवतीस्पर्शने पापप्रसक्तेः स्वयं तादृग्विधापि न पापमुत्पादयति प्रत्युत नृणां तध्दन्ति इत्याश्चर्यमित्यर्थः ॥ २ ॥ **यस्मिन्निति** । सन्ध्यावलीग्रामे सुरैरपि किमुत नरैरिति भावः । प्रार्थनीयं स्नानार्थं कमनीयं सरस्वतीतीर्थं नाम सरः तनुभृतां स्वस्मिन् मज्जतां शरीरिणां प्रायः बहुशः सरस्वत्याः प्रेयान् प्रियो ब्रह्मा तस्य स्थानं सत्यलोकमित्यर्थः । दत्ते ददाति । नृणां तत्र स्नानेन ब्रह्मलोकसिद्धिर्भवतीत्यर्थः ॥ ३ ॥ **निरिति** । यत्र सन्ध्यावलीग्रामे निरस्त निराकृतः अद्वैतसिद्धान्तमेव ध्वान्तं अन्धकारो येन स तथोक्तः । सन्तः सत्पुरुषाः एव सन्ति नक्षत्राणि इति श्लिष्टरूपकं ' सद्भाभ्यर्हितसाधुषु ' इति विश्वः । जयतीर्थ एव सुधाकरश्चन्द्रः चिरं वासं चक्रे । बहुशः चातुर्मास्यान् तत्रैव कृतवानित्यर्थः । एतेन तद्ग्रामस्य पावित्र्यातिशयः सुधाकरवासयोग्यत्वेन आकाशनिरूपणं च व्यज्यते ॥ ४ ॥ **तदिति** । स चासौ ग्रामश्च तद्ग्रामः तस्मिन् सन्ध्यावलीग्रामे यतिः विद्याधीशः सुजनानां समूहः सुजनता ' ग्रामजन ' इत्यादिना समूहार्थे तल् । ताम् । स्वगुणानां ग्रामेण समूहेन क्रीतां स्ववशीकृतां मित्यर्थः । ' क्रीतात्करणपूर्वात् ' इति ङीप् । तन्वन् सन् । अन्ते वसन्तीत्यन्तेवसन्तः शिष्याः ' शयवासवासिष्वकालात् ' इत्यलुक् । तेषां गणं समूहं तन्त्रसारं तन्त्रसाराख्यं मध्वकृतग्रन्थं अध्यापयत् । ' गतिबुद्धिप्रत्यवसानार्थ ' इत्यादिना अणि कर्तुः कर्मत्वम् ॥ ५ ॥ **विष्टरेति** । विष्टरश्रवसः विष्णोः पादपद्माविष्टान्तरः चरणारविन्दसक्तान्तःकरणः अष्टाङ्गयोगयुक् यमनियमाद्यष्टाङ्गयोगयुक्तः शिष्टानां इष्टः प्रियः शिष्टाः इष्टा यस्येति वा शिष्टेष्टः स विद्याधीशः अत्र अस्मिन्सन्ध्यावलीग्रामे द्विः द्विगुणीभूतानि अष्ट दिनानि षोडशदिनानीत्यर्थः । ' द्वित्रिचतुर्भ्यः सुच् ' इति क्रियाभ्यावृत्तिगणने सुच् । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । अवसत् वसति स्म । वृत्त्यनुप्रासोऽलङ्कारः ॥ एवमुत्तर-

॥ ६ ॥ ततस्तेन श्रुतिस्तेनगर्वसर्वस्वमाशिना । समटीकि सुधीवाटीरमणीयं मणीपुरम् ॥ ७ ॥ तत्र छात्रालिभिः सत्रा द्वित्रान्घस्रान्नयं नयन् । ऊरुभूभृत्पुरीमर्षीत्परभूभृद्दुरासदम् ॥ ८ ॥ श्रुत्वाप्यायान्तमाशान्तजित्वरं सत्वरं गुरुः । तमाह्वातुं पार्श्ववर्तीन्प्रैषयद्धर्षयन्त्रितः ॥ ९ ॥ परस्परोत्कण्ठमानमनसोः प्रसमीक्षणे । तयोः समेतयोरासीत्तत्क्षणो महितक्षणः ॥ १० ॥ नीरजो गुणशीलोऽपि गुरोरादरपूर्वकम् । पन्नीरजरजोराजिं मौलिनाभृत मौनिराट् ॥ ११ ॥ एवं स्वान्तरितो विष्णुरितीव गुरुणेरिणा । स्वानन्दमङ्कपाल्यासौ समभावि सभान्तरे ॥ १२ ॥ कौशेऽसौ तत्समादिष्टे विष्टरे विनयानतः ।

---

त्राप्यनुसन्धेयम् ॥ ६ ॥ **तत इति** । ततः अनन्तरं श्रुतिस्तेना वेदतस्करा मायावादिनः । अत्र 'चोरैकागारिकस्तेनदस्युतस्करमूषकाः' इत्यमरः । तेषां गर्वसर्वस्वं समस्तगर्वं अश्नाति वादेन विनाशयति इति गर्वसर्वस्वमाशी तेन विद्याधीशेन सुधियां विदुषां वाट्या पङ्क्त्या रमणीयं मणिपुरं समटीकि आटीकितं प्राप्तम् । 'टीकृ गतौ' इत्यस्मात्कर्मणि लुङ् ॥ ७ ॥ **तत्रेति** । अयं विद्याधीशः तत्र मणिपुरे छात्रालिभिः शिष्यपङ्क्त्या सत्रा साकं 'साकं सत्रा समं सह' इत्यव्ययेषु अमरः । द्वौ वा त्रयो वा मानं येषां ते द्वित्राः 'बहुव्रीहौ संख्येये डजबहुगणात्' इति डच् । तान् घस्रान् दिवसान् 'घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ' इत्यमरः । नयन् अतिवाहयन् परे तत्पुराधिपतिराजशत्रवः तैः दुरासदं दुष्प्रापं ऊरुभूभृत्पुरीं 'पेनुगोंडा' इत्याध्रसंज्ञितां आर्षीत् प्रापत् । 'ऋ गतौ' इत्यस्माद्धातोर्लुङ् ॥ ८ ॥ **श्रुत्वेति** । गुरुः ऊरभूभृत्पुरिस्थो वेदव्यासगुरुः आशान्तजित्वरं दिगन्तरजयिनं आयान्तं स्वसमीपमागच्छन्तं अपि तं विद्याधीशं श्रुत्वा ततोऽपि प्रागागतद्विजमुखेभ्यः आकर्ण्य हर्षयन्त्रितः हर्षेणविवशः इति यावत् । अत एव सत्वरं शीघ्रं आह्वातुं तमानेतुं पार्श्वयोः वर्तिः वर्तनं येषां ते पार्श्ववर्तयः 'वृतु वर्तने' इति धातोः भावे ङिन् । 'पादे पादे प्रैषयत्पार्श्ववर्तीन्' इति महाकविप्रयोगात् इकारान्तत्वेन प्रयुक्तः । तान् पार्श्ववर्तीन् स्वपार्श्वस्थपुरुषान् । प्रैषयत् तं प्रति प्रेषयामास आयान्तमपि आह्वातुम् । अनेन गुरो तदागमनकालाक्षमत्वलक्षणमौत्सुक्यं व्यज्यते । 'कालाक्षमत्वमौत्सुक्यं मनस्तापत्वरादिकृत् ।' इति लक्षणात् ॥९॥ **परस्परेति** । प्रसमीक्षणे अन्योऽन्यदर्शनविषये परस्परस्य अन्योऽन्यस्य उत्कण्ठमानं मनो ययोस्तयोः समेतयोः संगतयोः गुरुशिष्ययोः स चासौ क्षणः तत्क्षणः तदानींतनः कालः महितक्षणः अधिकोत्सवः आसीत् । 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः ।' इत्यमरः ॥ १० ॥ **नीरिति** । नीरजोगुणशीलोऽपि निर्गतरजोगुणस्वभावोऽपि मौनिराट् विद्याधीशः आदरपूर्वकं गुरोः पन्नीरजे पादारविन्दे 'पद्दन्' इत्यादिना पादस्य पदादेशः । तयोः रजोराजिं रेणुपालिं मौलिना शिरसा अभृत बभार । तत्पादयोः प्रणनामेत्याशयार्थः । 'डुभृञ् धारणपोषणयोः' इत्यस्माद्धातोः लुङ् । नीरजोगुणशीलोऽपि रजोराजिमभृतेति विरोधो गम्यते । अत एव विरोधाभासोऽलंकारः ॥ ११ ॥ **एक इति** । स्वयोरात्मनोः अन्तः अन्तःकरणं इतः प्राप्तः विष्णुः एकः उभयोरन्तर्यामी हरिरेक एवेति ईरिणेव वदतेवेत्युत्प्रेक्षा । गुरुणा कर्त्रा असौ विद्याधीशः सभान्तरे सानन्दं यथा तथा अङ्कपालिः आलिङ्गनं 'अङ्कपालिः परिष्वङ्गे' इति शब्दनिर्णये । तया समभावि संभावितः । गाढमाश्लिष्ट इत्यर्थः ॥ १२ ॥ **कौशेयेति** । असौ विद्याधीशः तेन गुरुणा समादिष्टे आज्ञप्ते दर्शिते इत्यर्थः । कौशे कुशमये विष्टरे आसने उपविश्येति शेषः । विनयेन आनतः नम्रवदनः सन् हृत्संबन्धी हार्दः हृद्गत इत्यर्थः । कंसार्दनो हरिः तस्य आलोके कुतकीव व्यलोकत अलक्ष्यत जनैरिति भावः । अत्र नमनक्रियायाः

**हार्दकं सार्दनालोककुतुकीव व्यलोकयत ॥ १३ ॥ तनयाग्रिमतत्तादृग्विनयादिमहागुणैः । वार्धकाम्रेडितं तेने मूर्ध्नि कम्पं स विस्मितः ॥ १४ ॥ तमन्वथ निजप्रेयोमतरक्षाविचक्षणम् । निरगाद्गुरुवक्त्राब्जात्प्रमदेनैव भारती ॥ १५ ॥ वत्स सत्सूत्रकृत्सूक्तिमत्सरित्वातिकुत्सिता । कृत्स्नाप्यसत्सभा दूरादभर्त्सीह त्वयोत्सवात् ॥ १६ ॥ तदयानन्दतीर्थान्तरारविन्दमिलिन्दितः । साधुवृन्दानन्ददोऽसावानन्दीदिन्दिरापतिः ॥ १७॥ पृथ्वीं सद्दर्शनधुरां वहतां महतां शुचिः । यमीभानां भवाञ्जज्ञे राथन्तरिरिवोज्ज्वलः ॥ १८ ॥**

---

अन्तर्गतपरमात्मावलोकनक्रियात्वेनोत्प्रेक्षणात् क्रियास्वरूपोत्प्रेक्षा ॥ १३ ॥ **तनयेति** । स तनयाग्रिमः तनयश्रेष्ठः विद्याधीशः 'अग्रादिपश्चात्' इति डिमच् प्रत्ययः । तस्य स एव तादृशः तत्तादृशः निरुपम इत्यर्थः । तैः विनयादिमहागुणैः विस्मितः सन् वृध्दस्य भावो वार्धकं मनोज्ञादित्वाद्वुञ् । 'वार्धकं भववृन्दयोः' इत्यमरः (?) तेन 'आम्रेडितं द्विस्त्रिरुक्तम्' इत्यमरः । मूर्ध्नि कम्पं तेने । प्रागेव वार्धकवशात् अनुभूयमानशिरःकम्पः तदानीमाश्चर्यरसानुभावाभिनयत्वेनापि द्विगुणीबभूवेत्यर्थः ॥ १४ ॥ **तमिति** । अथोपवेशानन्तरं भारती वाक् वायुपत्नीति च गम्यते । निजः स्वीयः प्रेयान् प्रियतमः मध्वरूपो मुख्यवायुः । अतिशयार्थे इयसुन् । 'प्रियस्थिर' इति प्रादेशः । तस्य मतं द्वैतसिद्धान्तः तस्य रक्षायां विचक्षणं विद्याधीशं उद्दिश्य 'लक्षणेत्थंभूताख्यान' इत्यादिना कर्मप्रवचनीयत्वम् । तद्युक्ते द्वितीया । प्रमदेन हर्षेण गुरोर्वक्त्राब्जात् निरगात् निर्गतवती । तं गुरुर्वक्ष्यमाणरीत्या जगादेत्यर्थः । अत्र वाग्भारत्योर्भेदेऽपि अभेदेनापादनादतिशयोक्तिः । सा च प्रमदेनेवेत्युत्प्रेक्षया संकीर्त्यते ॥ १५ ॥ तदुक्तिमेव श्लोकषट्केनाचष्टे । **वत्सेति** । वत्स हे बाल इति स्नेहपूर्वोक्तिः । यद्यस्मात्कारणात्सूत्राणि ब्रम्हसूत्राणि कृतवान् सूत्रकृत् व्यासः 'सुकर्मपाप' इत्यादिसूत्राद्रुपपदान्तरेऽपि भूते क्विप् । तस्य सूक्तयः वेदाः तेषु मत्सरिणो द्वेषिणः तेषां भावस्त्वम् । तेन हेतुना अतिकुत्सिता अत्यन्तगर्हिता कृत्स्ना समस्तापि असतां विमतदुर्जनानां सभा संघः इह लोके त्वया उत्सवात् हर्षात् अभर्त्सि भर्त्सिता वादनिरस्तेत्यर्थः ॥ १६ ॥ **तदिति** । तत्तस्मात्कारणात् इति पूर्वश्लोकस्थयच्छब्देन संबध्यते । आनन्दतीर्थस्य अन्तः हृदयमेवारविन्दं तत्र मिलिन्दो भ्रमरः तद्वदाचरितः मिलिन्दितः मध्वान्तर्यामीत्यर्थः । साधुवृन्दस्य आनन्दं ददातीति आनन्ददः । असौ इति सर्वव्यापित्वसूचको हस्तनिर्देशः । इन्दिरापतिः हरिः आनन्दीत् ननन्द । त्वया कृतेन विमतनिराकरणेन श्रीपतिः प्रीतोऽभूदितिश्लोकद्वयार्थः ॥ १७ ॥ **पृथ्वीमिति** । सद्दर्शनस्य सच्छास्त्रस्य धूः भारः सद्दर्शनधुरं 'ऋक्पूः' इत्यादिना समासान्तोऽप्रत्ययः । तदेव पृथ्वी भूः तां वहतां मध्वसिद्धान्तप्रतिष्ठापकानामित्यर्थः । महतां यमिनः एव इभा गजाः तेषां मध्ये 'यतश्च निर्धारणे' इति विकल्पात् षष्ठी । शुचिः शुद्धेऽनुपहते शृङ्गाराषाढयोः सिते ।' इत्यमरः । (?) भवान् त्वं रथन्तरं नाम साम तस्माज्जायते इति राथन्तरिः ऐरावतः 'राथन्तरिश्चतुर्दन्तः' इति सज्जनः । स इव उज्ज्वलः प्रकाशमानः जज्ञे जातोऽसीत्यर्थः । 'शेषे प्रथमः' इति भवच्छब्दप्रयोगात्प्रथमः । 'जनी प्रादुर्भावे' इत्यस्माद्धातोर्लिट् । 'ऐरावतं गजेन्द्राणाम्' इति भगवद्वचनात्तस्य श्रेष्ठत्वं ज्ञेयम् । अत्र रूपकोत्थापितोपमालंकारः ॥ १८ ॥ **अश्रान्तमिति** । हे वत्स त्वं जीवंजीवः चन्द्रकिरणाशी पक्षिविशेषः 'जीवंजीवश्चकोरकः' इत्यमरः । तस्य वृत्तिरिव वृत्तिस्तया तद्वृत्त्या अश्रान्तं अजस्रं रामचन्द्रस्य पादसेवनमेव एकं मुख्यं जीवनं यस्य स तथोक्तः सन्

**अश्रान्तं रामचन्द्रस्य पादसेवैकजीवनः । जीव जीवंजीववृत्त्या त्वं शतं वत्स वत्सरान् ॥१९॥ करुणामहिते मध्वहिते मध्वहिते हि ते । भक्तिर्मुक्तिप्रदैवैषा भविता भुवि तादृशी ॥ २० ॥ पुत्रीयंश्छात्रवर्यांस्त्वं शत्रूयन्हेतुवादिनः । यशो दिशो नयेन्दीश-सात्कुर्वन्सत्क्रियाफलम् ॥ २१ ॥ इति जल्पन्नल्पार्थां वाचं वाचंयमाग्रणीः । सुतं वयश्चञ्चलेन स तं पस्पर्श पाणिना ॥ २२ ॥ वतंसिततदीयाज्ञः प्राज्ञः पण्डितमानि-नाम् । खर्वयन्गर्वमासन्नविंशान्मासोऽत्र सोऽवसत् ॥ २३ ॥ चैत्रकार्जुनपक्षीयद्वितीयायां पदाम्बुजम् । हार्षीकेशमसावार्षीद्वेदव्यासगुरूत्तमः ॥ २४ ॥ विमनाः स मनाग्भूयो**

---

चकोरपक्षे रमयतीति रामः तस्य चन्द्रस्य पादाः किरणाः 'पादा रश्म्यङ्घ्रितुर्यांशाः' इत्यमरः । तेषां सेवनं भक्षणमेव एकं जीवनं वृत्तिर्यस्येति योज्यम् । शतं वत्सरान् जीव आयुष्मान्भवेत्यर्थः । जीवतेर्लोट् ॥ १९ ॥ **करुणेति** । करुणया महिते श्लाघिते कृपाकरे इत्यर्थः । मध्वस्य आनन्द-तीर्थस्य हिते प्रिये मधोर्दानवस्य अहिते शत्रौ विष्णौ इत्यर्थः । भुवि लोके तादृशी निरुपमा एषा ते तव भक्तिः मुक्तिप्रदा भविता भविष्यति । भविष्यदनद्यतने लुट् । माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः । स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा' इति प्रमाणात् । तादृशभक्तेः त्वयि विद्यमानत्वात्तयैव मुक्तिः स्यादिति भावः । अत्र मध्वादिवर्णानामव्यवधा-नेनासकृदावृत्त्यानुप्रासालंकारः ॥ २० ॥ **पुत्रीयन्निति** । तस्य कर्तव्यमुपदिशति । त्वं छात्रवर्यान् शिष्यश्रेष्ठान् पुत्रीयन् पुत्रानिवाचरन् । हेतुवादिनः हैतुकाः मिथ्यावादिन इत्यर्थः । तान् शत्रूयन् शत्रूनिवाचरन् उभयत्र 'उपमानादाचारे' इति सुबन्तादाचारार्थे क्यचि लटः शत्रादेशः । सत्क्रियाफलं स्नानादिप्रशस्तकर्मफलं इन्दी लक्ष्मीः 'ई लोकमाताब्धिसुता रमेन्दी गोमिनेन्दिरा' । इति शब्दार्णवे । इन्द्याः ईशः इन्दीशो हरिः तस्य सात्कुर्वन् तदधीनं कुर्वन् 'तदधीनवचने' इति सातिप्रत्ययः । यशः कीर्तिः दिशः आशाः नय प्रापय दिगन्तविश्रुतकीर्तिर्भवेत्यर्थः । नयते-र्द्विकर्मकाल्लोट् ॥ २१ ॥ **इतीति** । वाचयमाः मौनव्रतिनः 'वाचंयमपुरन्दरौ च' इति खचि निपातनात्साधुः । तेषु अग्रणीः श्रेष्ठः स वेदव्यास इत्युक्तरीत्या अनल्पार्थां अर्थगुर्वीं वाचं जल्पन् वदन् सन् वयः वार्धकं 'खगबाल्यादिनोर्वयः' इत्यमरः । तेन चञ्चलेन पाणिना सुतं पस्पर्श स्नेहातिशयात्तदङ्गस्पर्शं चकार ॥ २२ ॥ **वतंसितेति** । प्राज्ञः प्रज्ञावान् 'प्रज्ञाश्रद्धार्चाभ्यो णः' इति मतुबर्थेऽण्प्रत्ययः । स विद्याधीशः वतंसिता अवतंसीकृता तस्य गुरोरियं तदीया आज्ञा येन सः तथोक्तः । अवतंसशब्दस्य 'वष्टिभागुरिरल्लोपम्' इत्यादिना वैकल्पिकोऽकारलोपः । 'पुंस्युत्तंसावतंसौ द्वौ कर्णपूरेऽपि शेखरः' । इति वैजयन्ती । आत्मानं अपण्डितं पण्डितं मन्यन्ते इति पण्डितमानिनः विमताः । 'आत्ममाने खश्च' इति चकाराण्णिनिः । तेषां गर्वं विद्यादर्पं खर्वयन् ह्रस्वीकुर्वन् । आसन्ना विंशतिर्येषां ते आसन्नविंशाः एकोनविंशतिरित्यर्थः । 'बहुव्रीहौ संख्येये डजबहुगणात्' इति डच् । 'तिविंशतेर्डिति' । इति टेर्लोपः । तान् मासः मासान् 'पद्दन्नोमास्' इति मासस्य मासादेशः । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । अत्र ऊरुभूमृत्पुरे अवसत् ॥ २३ ॥ **चैत्रकेति** । असौ वेदव्यासगुरूत्तमः चैत्रिकः चैत्रमासः । 'स्याच्चैत्रे चैत्रिको मधुः' इत्यमरः । तस्मिन् अर्जुनपक्षीया शुक्लपक्षसंबन्धिनी या द्वितीया तिथिः तस्यां हृषीकेशो हरिस्तस्येदं हार्षीकेशं पदाम्बुजमार्षीत् प्रापत् । कालधर्मं प्राप्तवानिति यावत् । 'ऋ गतौ' इत्यस्माद्धातोर्लुङ् ॥ २४ ॥ **विमना इति** । स विद्याधीशः मनाक् ईषत् विमनाः

**बोधलब्धधृतिस्तदा । तुर्याश्रमोचितं तस्य कार्यमार्यैरचीकरत् ॥ २५ ॥ ततो गुर्वन्तराम्भोजवासिनो मुरशासिनः । तुष्टचै मिष्टान्नमदिशद्भूत्रिविष्टपसद्मनाम् ॥ २६ ॥ पूपकुल्कीलमालाढचे सितावालुकशालिनि । अन्धोमुक्तालिनीरन्ध्रे शाकरत्नौघबन्धुरे ॥ २७ ॥ आपतत्स्वादुमिष्टान्नरसायनधुनीशते । प्रेङ्खत्पायसकल्लोलदधिडिण्डीरमण्डिते ॥ २८ ॥ विस्तीर्णकदलीपर्णद्वीपपालीवृतान्तरे । प्लवमानच्छदद्रोणद्रोणीधोरणि हारिणि ॥ २९ ॥ सुरसालसुधासारचन्द्ररम्भादिचित्रदे । जनकोलाहलोदीर्णमन्द्रनिर्हादमेदुरे ॥३० ॥ विद्याधीशयन्तीन्द्राख्यपूर्णचन्द्रावलोकनात् । वेलात्ययवितन्वाने घृतसूपमहो-**

---

गुरुमृत्या दुर्मनाः सन् भूयः पुनरपि बोधेन ज्ञानेन लब्धधृतिः प्राप्तधैर्यः सन् तदा समये तस्य गुरोः तुर्याश्रमोचितं संन्यासाश्रमार्हं कार्यं खननादिकर्म आर्यैः द्विजैरचीकरत् । कारयति स्म । तुर्याश्रमोचितमित्यत्र शौनकः ' सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च । न तस्य दहनं कार्यं नैव पिण्डोदकक्रियाः । निदध्यात्प्रवणेनैव बिले भिक्षोः कलेवरम् । प्रोक्षणं खननं चैव कृत्वा स्नात्वा गृहं व्रजेत् ॥ ' इति । अशोच्यत्वे सुमन्तुः ' परिव्राजे विपन्ने तु पतिते चात्मवेदिनि । कार्यो न शोको ज्ञातीनामन्यथा दोषभाजनम् ॥ ' इति ॥ २५ ॥ **तत इति** । ततो गुरुमरणानन्तरं स इति पूर्वपरामर्शः । स विद्याधीशः गुरोरन्तराम्भोजवासिनः हृत्कमलवासिनः मुरशासिनः मुरारेः तुष्टचै तोषाय त्रिविष्टपं स्वर्गः सद्म गृहं येषां ते त्रिविष्टपसद्मानो देवाः । भूत्रिविष्टपसद्मानः भूदेवाः ब्राह्मणाः तेषां मृष्टान्नमदिशत् ददौ । समाराधनां चकारेत्यर्थः ॥ २६ ॥ ब्राह्मणभोजनमेव पञ्चभिः कुलकेनाह **पूपेति** । पूपाः अपूपाः । ' पूपोऽपूपः पिष्टकः स्यात् ' इत्यमरः । त एव कुल्कीलाः पर्वताः ' अगकुल्कीलजीमूतसानुमन्नगभूधराः ।' इति वैजयन्ती । तेषां आल्या पङ्क्त्या आढ्ये पूर्णे । सिताः शर्कराः ता एव वालुकानां सिकतानां समूहो वालुकम् । ' तस्य समूहः ' इत्यण् । तेन शालते इति सितावालुकशाली तस्मिन् । अन्धांसि अन्नानि ' भिस्सा स्त्री भक्तमन्धोऽन्नम् ' इत्यमरः । तान्येव मुक्ता मौक्तिकानि तासां आल्या नीरन्ध्रः निरन्तरः तस्मिन् । शाकान्येव रत्नानि तेषामोघेन समूहेन बन्धुरः संकुलः तस्मिन् ॥ २७ ॥ **आपतदिति** । आपतदागच्छत् स्वादूनि मिष्टानि तेमनानि तिन्तिडीरसाः ' निष्ठानं तेमनं समम् ' इत्यमरः ( ? ) रसायनानि रसालाख्यरसविशेषाः । ' रसायनं रसालायां जराव्याधिभिदौषधौ ' । इति शाश्वतः ( ? ) ' स्याद्रसाला तु मार्जिता ' इत्यमरश्च । तल्लक्षणं तु ' अपक्वतक्रकसन्ताप्य वतज्जीतगुडार्द्रकम् । (?) सजीरकं रसालं स्यान्मार्जिता शिखरिण्यपि । ' इति । निष्ठानानि रसायनानि च तान्येव धुन्यो नद्यः तासां शतं यस्मिन् तथोक्ते । प्रेङ्खन्तश्चलन्तः पायसान्येव कल्लोलाः तरङ्गा यस्मिन् तथोक्ते । दधीन्येव डिण्डिराः फेनाः ' डिण्डीरोऽब्धिकफः फेनः ' इत्यमरः । तैर्मण्डिते अलंकृते ॥ २८ ॥ **विस्तीर्णेति** । विस्तीर्णानि कदलीपर्णान्येव द्वीपाः अन्तरीपाणि तेषां पाल्या वृतान्तरे आवृतमध्यप्रदेशे । प्लवमानानि छदद्रोणानि पत्रकृतपात्रपुटानि तान्येव द्रोण्यः ' द्रोणी काष्ठाम्बुवाहिनी ' इत्यमरः । तासां धोरण्या हारी मनोहरः तस्मिन् ॥ २९ ॥ **स्विति** । सुरसालानि शोभनरसालानि चूतफलानि । चन्द्ररम्भाः कर्पूरकदल्यश्च । ' हेम्नि रूपे च कर्पूरे चन्द्रः स्याद्रजनीश्वरे । ' इति शाश्वतः । तदादिभिः फलैरिति भावः । चित्रदः आश्चर्यदायी तस्मिन् । समुद्रपक्षे सुरसाला कल्पवृक्षाः सुधासारः अमृतस्थिरांशः चन्द्रः चन्द्रमाः रम्भादयोप्यप्सरसश्च ताभिः स्वस्मादुद्भूताभिरिति भावः । चित्रदे । जनानां कोलाहलः कलकलध्वनिरेव मन्द्रनिर्ह्रादः गम्भीरध्वनिः तेन मेदुरे सान्द्रे इत्यर्थः ' भञ्जभासमिदो घुरच् ॥ ३० ॥

**दधौ ॥ ३१ ॥ उद्यच्चलाचलशिखामरुदागमवर्धिता । बाडवालिरगण्यापि न शान्ति नेतुमाशकत् ॥ ३२ ॥ अकुण्ठमाकण्ठतटं भुक्तानां भूसुपर्वणाम् । अगर्जीव हृदोद्गारैर्मुज्ज-लाकरमज्जिना ॥ ३३॥ ततस्तेषु प्रतीरद्रुष्वसौ प्रौढ इवानिलः । व्यकिरद्भूरिदीनारान्नदी-नीरकणानिव ॥ ३४ ॥ स्वर्णानि षट् द्वादशाष्टौ तन्मुखाब्जाद्द्विजोत्तमाः । परं न प्रापुरेकैके**

---

**वितेति** । घृतेन मिश्रितः सूपः घृतसूपः । भक्ष्येण मिश्रीकरणम् ' इति समासः । स एव महोदधिः समुद्रः तस्मिन् । विद्याधीशयतीन्द्रस्य आस्यं आननमेव पूर्णचन्द्रः तस्य आलोकनाध्देतोः वेलायाः मर्यादायाः अत्ययः अतिक्रमः ' अत्ययोऽतिक्रमे कृच्छ्रे ' इत्यमरः । तं वितन्वाने कुर्वति सति तनोतेर्लटः शानजादेशः । ' न लोके ' इत्यादिना षष्ठीप्रतिषेधः । विद्याधीशस्य मुखसंज्ञयैव पाचक-द्विजैरपरिमिततया परिवेषिते सतीत्याशयार्थः । लोके ब्राह्मणानां विशिष्य घृतसूपप्रियत्वात्तत्प्राधा-न्यनिर्देशः । अन्नादीनामुपसर्जनत्वम् । सर्वत्र रूपकालङ्कारः ।' ३१ ॥ **उद्यदिति** । उद्यन्ती ऊर्ध्वं गच्छन्ती चलाचला चञ्चला ' चरिचलिपतिवदीनां वा द्वित्वमच्याक्चाभ्यासस्येति वक्तव्यम् ' इत्यागागमः । ' चलं लोलं चलाचलम् ' इत्यमरः । सा च सा शिखा चूडा अन्यत्र ज्वाला च यस्याः साः तथोक्ता । ' शिखा स्याज्ज्वालचूडयोः ' इति सज्जनः । मरुदागमेन मध्वशास्त्रेण तदभ्यासेनेत्यर्थः । वर्धिता समेधिता अन्यत्र मरुतो वायोरागमेन प्रज्वलिताः वाडवाः ब्राह्मणाः ' द्विजात्यग्रजन्मभूदेवबाडवाः ' इत्यमरः । अन्यत्र वाडवा वडवानलाः ' बाडवो वाडवानलः ' इत्यमरः । तेषामालिः पङ्क्तिः स्वयं अगण्या अपरिमितापि शान्तिं घृतसूपमहोदधेः शमम् एकत्र भोजनात् अन्यत्र शोषणाच्चेतिभावः । विधातुं नाशकत् न शशाक । अत्र विशेष्यस्यापि विश्लिष्ट-त्वाद्ध्वनिरेवायं न तु श्लेषः । तेन प्रसिद्धसमुद्रादपि घृतसूपमहोदधेर्व्यतिरेको व्यज्यते ॥ ३२ ॥ **अकुण्ठमिति** । अकुण्ठं अमन्दं यथा तथा आकण्ठतटं कण्ठतटपर्यतम् । आङ् मर्यादाभिविध्योः ' इति मर्यादायामव्ययीभावः । भुक्तं भोजनं कर्मणि क्तप्रत्ययः । भुक्तमेषामस्तीति भुक्ताः । मत्वर्थी-योऽकारः । भुक्ता भुक्तवन्तः तेषां भूसुपर्वाणां भूदेवानां सम्बन्धि मुद् हर्ष एव जलाकरः समुद्रस्त-स्मिन्माजि तेन संतुष्टेनेत्यर्थः । हृदा हृदयेन कर्त्रा ' पद्दन् ' इति हृदादेशः । उद्गारैः निमित्तभूतैः अगर्जीव गर्जितमिव । भावे लुङ् । अत्र भोजनानन्तरभाविनः तृप्तिसूचकस्योद्गारस्य सन्तुष्टहृदय-गर्जितत्वेनोत्प्रेक्षणादुत्प्रेक्षा ॥ ३३ ॥ **तत इति** । ततो भोजनानन्तरं प्रौढः प्रचण्डः अनिलो वायुरिव असौ विद्याधीशः प्रतीरद्रुषु तटवृक्षेषु इवेति इवशब्दस्य द्विरावृत्त्या योज्यम् । तेषु ब्राह्मणेषु विषये नद्याः नीरकणान् उदककणानिव भूरयो बहवो दीनाराः स्वर्णविकाराः लोकभाषया वराहसं-ज्ञिताः । दीनारो देशान्तरे स्वनाम्नैव प्रसिद्ध इति शर्वानन्दो दीनारमाह । तं हेमसप्त्या कृष्णलैर्मितमित्यपरे । तान् व्यकिरत् चिक्षेप । भूरि द्रव्याणि विप्रेभ्यो दत्तवानित्यर्थः । अत्रानेकेव-शब्दोपादाना वाक्यार्थोपमा । तदाह दण्डी । वाक्यार्थेनैव वाक्यार्थः कोऽपि यद्युपमीयते । एकानेकेवशब्दत्वात्सा वाक्यार्थोपमाद्वया ॥ ' इति ॥ ३४ ॥ तद्दानमेव त्रिभिः श्लोकैः प्रपञ्चयति । **स्वर्णानीति** । द्विजोत्तमाः षट् द्वादश अष्टौ सु शोभनानि अर्णानि अक्षराणि तानि षडक्षरद्वादशा-क्षराष्टाक्षरमन्त्रानित्यर्थः । तस्य विद्याधीशस्य मुखाम्भोजात् परं मुखाम्भोजादेव एकः एकः एषां एकैकः प्रत्येकमित्यर्थः । ' एकं बहुव्रीहिवत् ' इति एकशब्दस्य द्वित्वं बहुव्रीहौ सर्वनामनिषेधो नेति वक्तव्यत्वात्सर्वनामत्वम् । न प्रापुः उपदेशरूपेण न लब्धवन्तः । किन्तु तस्य कराम्भोरुहादपि एकैके प्रापुरिति संबन्धः । षट्द्वादशाष्टसंख्याकान् दीनारानेकैकशो विप्रेभ्यो दत्तवानित्यर्थः । न केवलम-

तत्करा म्भोरुहोदपि ॥ ३५ ॥ वर्षत्यस्मिन्धनाम्बूनि घने दैन्योष्महारिणि । सतां भूषासु रत्नानि शक्रकोपश्रियं दधुः॥३६॥अयं सहस्रदीनारान् पञ्च पञ्चायुधप्रियः। प्रादान्मोदाद्द्विजातिभ्यो दिङ्मुखेभ्योऽमितं यशः ॥ ३७॥ द्वित्रानसौ वसन्मासांस्तत्रानेकबुधावृतः श्रीजानेरकरोद्भक्त्या पूजामाजानपावनः ॥ ३८ ॥ आरकूटानि ताम्राणि कटहादीनि कोटिशः । मठस्थान्यतनीदेष चित्रपात्राणि पात्रसात् ॥ ३९ ॥ वीक्षितुं तमिव द्वैतसंवित्साम्राज्यदीक्षितम् । तदा शरत्प्रादुरासीद्विकचाम्बुरुहेक्षणा ॥ ४० ॥ अत्यनर्घेऽपि

---

ष्टाक्षरादिमन्त्रोपदेशेनामुष्मिकफलप्रदः किन्त्वैहिकफलप्रदश्चेत्यनन्यसामान्यदेशिकोऽयमित्याशयः ॥ ३५ ॥ **वर्षतीति** । दैन्यम् अर्थिनां दारिद्र्यमेव ऊष्माणं उष्णं हरतीति दैन्योष्महारी अस्मिन् विद्याधीशे एव घने मेघे धनान्येवाम्बूनि वर्षति सति सतां सज्जनानां भूषासु भूषणेषु रत्नानि तत्र खचितमणयः शक्रकोपानां इन्द्रकोपाख्यकीटानां श्रियं शोभां दधुः । अत्र श्रियमित्यन्यधर्मस्यान्यत्रसंबन्धायोगात् श्रियमिव श्रियमिति निदर्शनाक्षेपान्निदर्शनालंकारः । सा च पूर्वार्धरूपकोज्जीवितेत्युभयोरङ्गाङ्गिभावेन संकरः । तेन च यथा शक्रकोपमेघोदकयोः कार्यकारणत्वं तथा विद्याधीशदत्तधनसज्जनभूषणरत्नयोः कार्यकारणत्वं व्यज्यते ॥३६॥ **अयमिति** । पञ्चायुधो विष्णुः प्रियो यस्य स पञ्चायुधप्रियः अयं विद्याधीशः मोदात् हर्षात् न तु निर्बन्धात् पञ्चसहस्रं दीनारान् द्विजातिभ्यः प्रादात् दत्तवान् । अतिमात्रं यशश्च दिङ्मुखेभ्यः प्रादादित्यन्वयः । तादृगौदार्येण दिगन्तविश्रान्तकीर्तिरासीदित्याशयार्थः ॥३७॥ **द्वित्रानिति** । जनस्येदं जानं जन्म तदारभ्य आजानं अभिविधावव्ययीभावः । आजानपावनः आजन्मशुद्धः रघुनाथप्रतिमापूजार्ह इति भावः । अयं विद्याधीशः तत्र ऊरुभूभृत्पुर्यां अनेकबुधावृतः सन् द्वौ वा त्रयो वा मानं येषां ते द्वित्राः 'बहुव्रीहौ संख्येये डजबहुगणात्' इति डच् प्रत्ययः । तान् मासान् 'कालाध्वनोः' इति द्वितीया । वसन् सन् श्रीः लक्ष्मीः जाया यस्य सः श्रीजानिः विष्णुः 'जायाया निङ्' इति समासान्तो निङादेशः 'लोपो व्योर्वलि' इति यकारलोपः । तस्य श्रीरामचन्द्रमूर्तिमान्तर्गतस्येति भावः । पूजा पूजनं 'चिन्ति पूजि' इत्यादिना स्त्रियामङ्प्रत्ययः । तां अकरोत् ॥ ३८ ॥ **आरकूटानीति** । एषः विद्याधीशः मठस्थानि मठद्रव्याणि आरकूटस्य विकाराः आरकूटानि तानि ताम्रस्य विकाराः ताम्राणि तानि च । उभयत्र वैकारिकोऽण् प्रत्ययः । 'रीतिः स्त्रियामारकूटो न स्त्रियामथ ताम्रकम् । शुल्बं म्लेच्छमुखं द्व्यष्टवरिष्ठोदुम्बराणि च ॥' इत्युभयत्राप्यमरः । अतनीत् चकार । तनोतेर्लुङ् । चित्रं पात्राणां पात्राधीनकारित्वमाश्चर्यमिति विरोधः । मठस्थपात्राणि वैराग्यात्सत्पात्रेभ्यः ददाविति परिहारः । अत एव विरोधाभासोऽलंकारः ॥ ३९ ॥ **वीक्षितुमिति** । तदा समये विकचानि अम्बुरुहाण्येव ईक्षणानि यस्याः सा तथोक्ता शरत् शरदृतुः द्वैतसंवित् द्वैतसिद्धांतः सैव साम्राज्यं तस्मिन् दीक्षितं तं विद्याधीशं वीक्षितुमिवेत्युत्प्रेक्षा । प्रादुरासीत् । विकचाम्बुरुहेक्षणा इति साभिप्रायविशेषणग्रहणात्परिकरश्चेत्युभयोः संकरः । 'अलंकारः परिकरः साभिप्राये विशेषणे ।' इति लक्षणात् ॥ ४० ॥ एवमस्य पात्रोपयोगित्वेन शरत्प्रादुर्भावमुक्त्वा द्वाभ्यां तामेव विशिनष्टि । **अत्येति** । अत्यनर्घ्ये अत्यमूल्ये 'मूल्ये पूजाविधावर्घः' इत्यमरः । पात्राणां कटहादिभाजनानां जाते समूहे अमुना विद्याधीशेन निःशेषिते निःशेषतया विप्रेभ्यो दत्ते सतीत्यर्थः । कुम्भानां मृद्विकाराणामित्याशयः । सामान्यतः प्रयोगात् जातं समूहः तस्य उदयः आविर्भावः शनैरभूदिति यत् तद्युक्तम् । ताम्रादिपात्राभावे मृत्पात्रानयनमुचितमेवेति ध्वनिः । वास्तवार्थस्तु कुम्भजातोऽगस्त्यः 'जातं जात्यौघजन्मसु'

**पात्राणां जाते निःशेषितेऽमुना । तद्युक्तं कुम्भजातस्य यदभूदुदयः शनैः ॥ ४१ ॥ काशैः स्वकीर्तिसंकाशैः जलैः स्वान्तरनिर्मलैः । भेनेन खाननाभेन जज्ञेऽसौ तामुदश्चिताम् ॥ ४२ ॥ यतीन्दोः प्रागग्रजन्मतनयो विनयोज्ज्वलः । केशवाचार्यनामाभूच्छ्रीशाराधनपेशलः ॥ ४३ ॥ तदसामान्यकारुण्यपात्रं चित्रचरित्रभूः । विज्ञाताखिलशास्त्रार्थः प्रज्ञावन्मौलिभूषणम् ॥ ४४ ॥ तमाहूयाषडक्षीणे कृपामिश्रेण चक्षुषा । पश्यन्वश्यवतंसोऽयमाह स्मेरमुखाम्बुजः ॥ ४५ ॥ श्रीमध्वमतधौरेया यतिनः कति न क्षितौ । अन्यैवास्मद्गुरोश्चर्या मन्ये धन्येशितुः पुनः ॥ ४६ ॥ अगण्यकारुण्यखनेः सौजन्यादि-**

---

इत्युभयत्राप्यमरः । ( ? ) तस्य उदयोऽभूदिति यत् तद्युक्तम् । शरदि अगस्त्योदयस्य प्रसिद्धत्वात् । तथा च रघुवंशे 'प्रससादोदयादम्भः कुम्भयोनेर्महोजसः ।' इति ॥ ४१ ॥ **काशैरिति** असौ विद्याधीशः स्वकीर्तिसंकाशैः आत्मयशःसदृशैः तद्वच्छुभ्रैरित्यर्थः । काशैः काशकुसुमैः स्वान्तरवन्निर्मलैः निजहृदयवत्स्वच्छैः जलैश्च स्वाननस्य स्वकीयमुखस्य आभेव आभा यस्य तेन स्वाननाभेन तद्वत्प्रसन्नेन भानि नक्षत्रमृक्षं भं तारा ' इत्यमरः । तेषां इनः प्रभुः चन्द्रः ' इनः सूर्ये प्रभौ ' इत्यमरः । तेन चेति लिङ्गत्रयेण तां शरदं उदश्चितां आविर्भूतां जज्ञे । काशविकाशाद्यन्यथानुपपत्त्या शरत्कालोऽभूदिति ज्ञातवानित्यर्थः । अत एव प्रमाणालंकारेषु अनुमानालंकारः । ' अष्टौ प्रमाणालंकाराः प्रत्यक्षप्रमुखाः क्रमात् ।' इत्यलंकारिकाः । किं च काशाद्युपमानवस्तुनामुपमेयत्वोक्त्या प्रतीपालंकारश्चेत्युभयोः संकरः । ' प्रतीपमुपमानस्योपमेयत्वप्रकल्पनम् । ' इति लक्षणात् ॥ ४२ ॥ अथ प्रकृतकथोपयोगित्वेन गुरुबन्धुः कश्चिदस्तीति द्वाभ्यां श्लोकाभ्यां कुलकेनाह । **यतीति** । यतीन्दोः विद्याधीशस्य प्राक् पूर्वाश्रमे अग्रजन्मा पितृव्यपुत्रो ज्येष्ठभ्राता क्वचित् तस्य तनयः विनयेनोऽऽवलः प्रकाशमानः श्रीशाराधनतत्परः विष्णुपूजानिरतः केशवाचार्यनामा कश्चिद्द्विज इति शेषः । अभूत् ॥ ४३ ॥ **तदिति** । तस्य विद्याधीशस्य असामान्यकारुण्यस्य पात्रं पात्रभूतः चित्रस्य अद्भुतस्य भूः स्थानं विज्ञाताखिलशास्त्रार्थः अत एव प्रज्ञावतां विदुषां मौलिभूषणं शिरोरत्नभूतः अभूदितिपूर्वेणान्वयः ॥ ४४ ॥ **तमिति** । वशिनः यतिनः तेषामवतंसः अयं विद्याधीशः न विद्यते षट् अक्षीणि यत्रेत्यषडक्षीणं रहस्यस्थलम् । ' पञ्चत्रिष्वषडक्षीणो यस्तृतीयाद्यगोचरः । ' इत्यमरः । तस्मिन् । तं केशवाचार्यं आहूय कृपामिश्रेण चक्षुषा पश्यन् स्मेरमुखाम्बुजः सन् आह वक्ष्यमाणरीत्या उवाच । तदुक्तमेव पञ्चभिराचष्टे ॥ ४५ ॥ **श्रीति** । क्षितौ भुवि मध्वमतस्य धुरं वहतीति धौरेयाः मध्वमतसंरक्षका इत्यर्थः । ' धुरो यड्ढकौ ' इति ढक् । यतिनः कति कियन्तः नासन्निति काकुः । बहवः प्रागासन्नेवेत्यर्थः । पुनः किं तु धन्येशितुः धन्यश्रेष्ठस्य अस्मद्गुरोर्वेदव्यासस्येत्याशयः । पत्युर्नाम न गृह्णीयाद्भार्या शिष्यो गुरोरपि ।' इति शिष्यस्य गुरुनामग्रहणनिषेधात् । चर्या चरित्रं ' अस्याश्चर्येति केचित् ' इति वक्तव्यात् स्त्रियां क्यप् । (?) अन्या असाधारणैवेत्यर्थः । मन्ये एवं जानामि । वाक्यार्थः कर्म ॥ ४६ ॥ तच्चरित्रस्यासाधारण्यमेव प्रपञ्चयति । **अगण्येति** । अगण्यस्य कारुण्यस्य खनेः आकरस्य ' खनिः स्त्रियामाकरः स्यात् ' इत्यमरः । सौजन्यादिगुणानां अम्बुधेः समुद्रस्य । समुद्रखनिशब्दाभ्यां पूर्णत्वं लभ्यते । वदान्या बहुप्रदाः ' स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे । ' इत्यमरः । मूर्ध्नि भवः मूर्धन्यः ' शरीरावयवाच्च ' इति यत्प्रत्ययः । स चासौ मणिश्च वदान्यानां मूर्धन्यमणिः शिरोरत्नभूतः तस्य गुरोः ' तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् ' इति विकल्पात् षष्ठी । सदृशः अन्यः कः वद अस्तिचेदिति शेषः । उक्तगुणविषये न कोऽपि तत्समोऽस्तीत्यर्थः

गुणाम्बुधेः । वदान्यमूर्धन्यमणेर्वदान्यः कः समो गुरोः ॥ ४७ ॥ भजने रामचन्द्रस्य त्यजने विषयावलेः । सुजनेतरशिक्षायां निजनेतायमग्रिमः ॥ ४८ ॥ ज्ञानविज्ञानवैराग्यवाग्यमादिगुणैकभूः । क्वासौ गुरूत्तमः क्वाहमतादृशगुणाकरः ॥ ४९ ॥ तत्कृपालम्बनादेव स्पृशामि प्रतिमां हरेः । पाणी मे धक्ष्यति क्षिप्रं परथा सरथाङ्गभृत् ॥ ५० ॥ स्तावं स्तावमिति प्रेम्णा स्मारं स्मारं गुरुं स्वकम् । सुधिया नन्दितस्तेन रौप्यपीठमथागमत् ॥ ५१ ॥ ततः श्रीकृष्णसेवायां निष्णातधिषणो यती । अवसच्चतुरो मासांश्चतुरो मतरक्षणे ॥ ५२ ॥ तेवनेन चरामिति संकल्प्य प्रीतये हरेः । तत्याज तत्र शिबिकां चामरे चामरेडितः ॥ ५३ ॥ पीतवासोभृतं देवमवलम्ब्य सदा हृदि । विनालमल्ल-

---

॥ ४७ ॥ **भजने इति** । रामचन्द्रस्य भजने सेवायां विषये 'भज् सेवायाम्' इत्यस्माद्धातोर्भावे ल्युट् । विषयावले : स्रक्चन्दनादिविषये 'त्यज् विसर्गे ( हानौ ) इत्यस्माद्धातोर्भावे ल्युट् । सुजनेभ्यः इतरे दुर्जनाः तेषां शिक्षाया विषये निजनेता आत्मस्वामी अयं गुरूः अग्रिमः श्रेष्टः उक्तकार्यत्रयेऽपि आसाधरण इत्यर्थः । 'अग्रादिपश्चात् डिमच्' इति डिमच् प्रत्ययः ॥ ४८ ॥ तत्सदृशत्वमेवेत्याशङ्कायामाह । ज्ञानेति । ज्ञानं सामान्यज्ञानं विज्ञानं विशेषज्ञानम् ज्ञानस्वरूपत्वात् ज्ञानशब्दवाच्यः परमात्मा । 'सर्वदर्शी विमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम् । ' इति सहस्रनामसु गणितत्वात् । तस्य विज्ञानं परमात्मविषयकविशेषज्ञानमिति वा । वैराग्यं विषयविरक्तिः वाग्यमः मौनं च एतदादिगुणानां एकभूः मुख्यस्थानं अयं गुरूत्तमः क । तादृशगुणानां आकरः स्थानं न भवतीत्यतादृशगुणाकरः अहं क । उभयोर्गजमशकयोरिव महत्तारतम्यं वर्तते इत्याशयार्थः ॥ ४९ ॥ साक्षाद्रघुनाथपूजान्यथानुपपत्त्या तव तत्समत्वं निश्चीयते इत्यत्राह । तदिति । तस्य गुरोः कृपालम्बनात् कारुण्याश्रयादेव न तु स्वयोग्यतयेति भावः । हरेः प्रतिमां स्पृशामि । परथा एवं न चेदित्यर्थः । 'प्रकारवचने थाल्' । स प्रतिमान्तर्गतः रथाङ्गं चक्रं बिभर्तीति रथाङ्गभृत् हरिः मे मम पाणी करौ क्षिप्रं धक्ष्यति भस्मीकरिष्यति । 'दह् भस्मीकरणे' इति धातोर्लृट् ॥ ५० ॥ **स्तावमिति** । इत्युक्तरीत्या स्वकं गुरुं स्मारं स्मारं स्मृत्वा स्मृत्वा प्रेम्णा स्नेहेन भक्त्येति यावत् । स्तावं स्तावं स्तुत्वा स्तुत्वा उभयत्र 'आभीक्ष्ण्ये णमुल् च' इति वीप्सायां णमुल् । तेन सुधिया केशवाचार्येण आनन्दितः गुरुः तादृङ् महात्मैवेति प्रत्युत्तरेणानुमोदितः स इति शेषः । स विद्याधीशः अनन्तरं रौप्यपीठं अगमत् जगाम ॥ ५१ ॥ **ततेति** । तत्र रौप्यपीठपुरे श्रीकृष्णसेवायां विषये निष्णातधिषणः शिक्षितबुद्धिः मतरक्षणे स्वमतसंरक्षणे चतुरः समर्थः यती विद्याधीशः चतुरः चतुःसंख्याकान् मासान् 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । अवसत् वसति स्म ॥ ५२ ॥ **तेवनेनेति** । अमरैः ईडितः स्तुतः विद्याधीशः तत्र रजतपपीठपुरे हरेः श्रीकृष्णस्य प्रीतये तेवनं पादचारः 'तेवनं पादचारः स्यात्' इत्युत्पलमालायाम् । 'तेवनेन वनं गत्वा' इति रामायणे संक्षेपसर्गे प्रयोगश्च । तेन पादचारेण चरामीत्येवं संकल्प्य शिबिकां चामरं चामरद्वयं च तत्याज । अत्र चामरे चामरे इत्यव्यधानेन व्यञ्जनावृत्त्या छेकानुप्रासः ॥ ५३ ॥ **पीतेति** । वेत्तीति वित् वित्तमः विद्वच्छ्रेष्ठः 'अतिशायने तमबिष्ठनौ' इति तमप् । विद्याधीशः पीतं वासो बिभर्तीति पीतवासोभृत् पूर्ववत् क्विप् । पीताम्बरधरं देवं हरिं सदा हृदि अवलम्ब्य निधाय अलमल्लकं कौपीनं 'कौपीनमलमल्लकम्' इति शब्दार्णवे । तस्माद्विना तद्विहाय 'पृथग्विनानानाभिस्तृतीयान्यतरस्याम्' इति विकल्पात्पञ्चमी । अन्यत् अलमल्लकादितरत् वासः वस्त्रं नाधत्त । अलमल्लकमेव दधारेत्यर्थः ।

कादन्यद्वासो नाधत्त वित्तमः ॥ ५४ ॥ मठीयविदुषां स्थाने पृथक्पाककृतामसौ । द्वित्राणामचरद्भिक्षां शिक्षाकृद्यतिनामिव ॥ ५५ ॥ माधुर्यादिरसास्वादवाञ्छामप्यहह त्यजन् । माधुर्यैकरसास्वाद निरतोऽभूदनारतम् ॥ ५६ ॥ हरिपादार्पितैर्नित्यं तुलसीदलमात्रकैः । उपदंशवदन्धाश्नन्निन्धे स्म यतिसिन्धुरः ॥ ५७ ॥ भैक्ष्यमात्रकृताहारः कॢप्तत्रिषवणाप्लवः । रामपूजापरो नित्यमत्यशेताखिलान्यतीन् ॥ ५८ ॥ प्रतिसन्ध्यं व्यधाद्विष्णोरष्टोत्तरशतं नतीः । ततोऽपि द्विगुणीभूतप्रदक्षिणपुरःसरम् ॥ ५९ ॥ स काष्ठमौननियमः स्वप्रेष्ठहरितोषणम् । चक्रे व्याख्यासिंहनादैर्वक्रेतरमतिर्यती ॥ ६० ॥ स

---

साक्षात्पीताम्बरधरे हृदयस्थिते सति किमन्यैः क्षुद्रवासोभिस्तस्येति भावः ॥ ५४ ॥ मठीयेति । असौ विद्याधीशः यतीनां शिक्षां करोतीति शिक्षाकृत् । 'उपपदान्तरेऽपीति वक्तव्यम्' (?) इति क्विप् । एवं कुरुत इति यतिनः शिक्षयन्निवेत्युत्प्रेक्षा । पृथक्पाककृतां प्रत्येकं स्वयं पाकिनां द्वौ वा त्रयो वा मानं येषां ते द्वित्राः 'बहुव्रीहौ संख्येये' इत्यादिना समासान्तो डच्प्रत्ययः । तेषां मठसम्भविनो मठीयाः 'वा नामधेयस्य' इत्यादिना वृद्धत्वाच्छप्रत्ययः । तेषां विदुषां स्थाने स्वयं पाकस्थले भिक्षामचरत् चरितवान् ॥ ५५ ॥ माधुर्येति । असौ विद्याधीशः माधुर्यादिरसास्वादे वाञ्छामपि किमुतास्वादनमिति भावः । त्यजन् वाञ्छामात्रस्य दुस्त्यजत्वात् अहह अद्भुतम् 'अहहेत्यद्भुते खेदे' इत्यव्येषु अमरः । अनारतं सततं मा लक्ष्मीः 'मः स्त्रियामिन्दिरायां स्यान्मृतौ मान्ये च मातरि ।' इति माधवः । तस्याः धुरं वहतीति माधुर्यो हरिः 'धुरो यड्ढकौ' इति यत् । तस्य एके मुख्याः रसाः गुणाः 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः ।' इत्यमरः । तेषामास्वादने रतः अभूत् इति विरोधः प्रतीयते । अत एव विरोधाभासोऽलंकारः ॥ ५६ ॥ हरीति । यतिसिन्धुरः यतिश्रेष्ठः 'सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः ।' इत्यमरः । नित्यं हरिपादार्पितैः तुलसीदलमात्रकैः तुलसीदलैरेव उपदंशवत् उपदंशयुक्तं तुलसीदलान्येवोपदंशीकृत्येत्यर्थः । 'उपदंशस्तु भक्षणम्' इति विश्वः । अन्धं अन्नं अश्नन् भुञ्जानः । 'अश् भोजने' इत्यस्माद्धातोर्लटः शत्रादेशः । इन्धे स्म प्रकाशते स्म । घृतसूपशाकादिकं विहाय केवलं तुलसीदलमिश्रान्नभक्षणेऽपि अस्य न शरीरग्लानिरासीदिति भावः ॥ ५७ ॥ भैक्ष्यमिति । भिक्षायाः समूहो भैक्ष्यम् । भैक्षं भिक्षाकदम्बकम्' इत्यमरः । 'भिक्षादिभ्योऽण्' इत्यण् । भैक्ष्यमात्रेण कृताहारः कॢप्तत्रिषवणाप्लवः कृतत्रिषवणस्नानः 'आप्लाव आप्लवः स्नानम्' इत्यमरः । नित्यं रामपूजापरः श्रीरामपूजायामासक्तः सः विद्याधीशः अखिलान् यतीन् अत्यशेत स्वचरित्रेणातिशयितवान् । ॥ ५८ ॥ प्रतीति । सन्ध्यासु सन्ध्यासु इति प्रतिसन्ध्यम् यथार्थेऽव्ययीभावः । विष्णोः अष्टोत्तरसंख्याका नतीः नमस्कारान् ततोऽपि नतिभ्योऽपि द्विगुणीभूतानि द्विरावर्तितानि षोडशोत्तरद्विशतसंख्याकानि प्रदक्षिणानि पुरःसराणि पूर्वकाणि यस्मिन् कर्मणि यथा भवति तथा व्यधात् । षोडशोत्तरशतद्वयप्रदक्षिणानि विधाय ततोऽष्टोत्तरशतनमस्कारांश्चकारेत्यर्थः ॥ ५९ ॥ सेति । वक्रेतरमतिः ऋजुबुद्धिः यतिः विद्याधीशः काष्ठवन्मौनं काष्ठमौनं तदेव नियमः यस्य सः । व्याख्या सच्छास्त्रव्याख्यानमेव सिंहनादाः तैः सिंहवद्गम्भीरध्वानिभिः स्वस्य प्रेष्ठः प्रियतमः 'अतिशायने तमबिष्ठनौ' इति इष्ठन्प्रत्ययः । 'प्रियस्थिर' इति प्रादेशः । तस्य तोषणं चक्रे । इतरकाले काष्ठमौनमाश्रितोऽपि व्याख्याकाले हरिप्रीतये सिंहवज्जगर्जेत्यर्थः ॥ ६० ॥ स इति । सः विद्याधीशः वसुधावलये भूमण्डले अद्भुतां धीमतामाश्चर्यकारिणीं सुधायाः विवृतिं टीकां तेने रचितवान् । सन्तो विद्वांसः

सुधाविवृतिं तेने वसुधावलयेऽद्भुताम् । न सुधामप्याद्रियन्ते सन्तो यत्पाननिर्वृताः ॥ ६१ ॥ निर्विशेषं गुणैः स्वीयैर्वेदनिध्याख्ययोगिनम् । प्राहिणोद्दिक्षु लक्ष्मीशद्रोहिणो जेतुमुन्मनाः ॥ ६२ ॥ ततः स्वयं नासिकाद्यत्र्यम्बकाचलमेयिवान् । यत्र गोदातटिन्यासीज्जटाटीरजटोदिता ॥ ६३ ॥ प्रदक्षिणीचकारासौ तामतामसवृत्तिभिः । सुधीभिः शतसंख्याकैः सत्रा वित्रासयन् खलान् ॥ ६४ ॥ खिलोऽपि चाखिलः पन्था महिम्नैव यतीशितुः । सुगमोऽजनि तत्पादसेविनां निगमो यथा ॥ ६५ ॥ मरुस्थल्यप्यनूपाभूत्सर्वर्तुफलवत्यहो । वन्यापि धन्यमूर्धन्ये तस्मिन् यति यतीश्वरे ॥ ६६ ॥ अंसे वहन्रघूत्तंसप्रतिमामतिमानुषः । विनतानन्दनो रेजे चरित्रैः पत्रिराडिव ॥ ६७ ॥ नैतीर्विपन्न

---

यस्याः सुधाविवृतेः पानेन सादरश्रवणादिनेत्यर्थः । निर्वृताः सुखिताः सन्तः सुधामपि नाद्रियन्ते । एतेन तस्याः सुधाधिकमाधुर्यातिशयो व्यज्यते इत्यतिशयोक्तिरलंकारः ॥ ६१ ॥ निरिति । उन्मनाः स्वयं तीर्थयात्रोत्कः । 'स्यादुत्क उन्मनाः' इत्यमरः । स विद्याधीशः स्वैः गुणैः निर्विशेषं आत्मतुल्यमित्यर्थः । वेदनिध्याख्ययोगिनं दिक्षु लक्ष्मीशद्रोहिणः विष्णुद्विषः तान् विजेतुं प्राहिणोत् प्रेषितवान् ॥ ६२ ॥ तत इति । ततो वेदनिधिप्रेषणानन्तरं स्वयं विद्याधीशः नासिकाद्यत्र्यम्बकाचलं नासिकात्र्यम्बकगिरिं ईयिवान् प्राप्तः । 'उपेयिवान्' इत्यादिना क्वसन्तनिपातनात्साधुः । यत्र त्र्यम्बकगिरौ गोदावरीतटिनी गोदावरी नाम नदी जटाटीरा हरः 'अहिर्बुध्नो जटाटीरो जटाझाटोऽग्निलोचनः ।' इति शब्दार्णवे । तस्य जटाभ्य उदिता उद्भूता आसीत् । तमीयिवानित्यन्वयः ॥ ६३ ॥ प्रदक्षिणीति । असौ विद्याधीशः अतामसवृत्तिभिः सात्विकवर्तनैः । शतसंख्याकैः सुधीभिः सत्रा साकं खलान् वित्रासयन् वादेन भीषयन् सन् तां गोदावरीं प्रदक्षिणीचकार ॥ ६४ ॥ खिल इति । यतीशितुः विद्याधीशस्य महिम्ना माहात्म्येनैव खिलः पूर्वमप्रतिहतोऽपि 'खिलमप्रहता भूमिः' इति हलायुधः । अखिलः समस्तः पन्थाश्च चशब्दः समुच्चये । तस्य विद्याधीशस्य पादसेविनां जनानां निगमो यथा वेदः सुगमः सुखेन गम्योऽजनि दुर्ज्ञेयोऽपि वेदस्तदनुग्रहेण यथा योग्यजनैरवगम्यते तद्वदप्रतिहतोऽपि मार्गः तदनुगैः सुगमोऽभूदित्यर्थः ॥ ६५ ॥ मर्विति । धन्यानां मूर्धन्ये शिरोमणौ तस्मिन्यतीश्वरे विद्याधीशे यति गच्छति सति । एतेर्लटः शत्रादेशः । मरुस्थली निर्जलप्रदेशोऽपि अनूपा जलप्राया अभूत् । 'जलप्रायमनूपं स्यात्' इत्यमरः । वन्या वनसमूहोऽपि 'वन्या वनसमूहे स्यात्' इत्यमरः । सर्वेषां ऋतूनां वसन्तादीनां संबन्धि यानि फलानि तानि अस्याः सन्तीति सर्वर्तुफलवती अभूत् । अहो आश्चर्यमेतन्माहात्म्यमित्यर्थः ॥ ६६ ॥ अंस इति । विनतानन्दनः 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इति ल्युः । स इति शेषः । स विद्याधीशः रघूत्तंसस्य रघुनाथस्य प्रतिमां अंसे भुजे वहन् सन् मानुषचरित्राणि मानुषाणि तान्यतीतानि अतिमानुषाणि 'अत्यादयः क्रान्ताद्यर्थे' इति द्वितीयासमासः । तैश्चरित्रैः हरिवाहनादिभिः पत्रिराड् गरुड इव रेजे । गरुडपक्षे विनताया नन्दनः पुत्र इति योजना ॥ ६७ ॥ नैतीति । अयं विद्याधीशः यत्र यत्र मार्गे चरति गच्छति तत्र तत्रेति शेषः । प्रजानां तत्रत्यानां ईतिसंबन्धिनी ऐती: विपत् नाभवत । ईतिलक्षणं तु 'अतिवृष्टिरनावृष्टिः शलभा मूषकाः खगाः । अत्यासन्नाश्च राजान षडेता ईतयः स्मृताः ॥' इति । भिक्षाया अभावो दुर्भिक्षम् । 'अव्ययं विभक्ति' इत्यादिना व्यृध्यर्थेऽव्ययीभावः । नाभवत् । धर्मविरुद्धोऽधर्मः स च नाभवत् । विग्रहः

दुर्भिक्षं नाधर्मो न च विग्रहः । प्रजानामभवन्मार्गे यत्र यत्र चलत्ययम् ॥ ६८ ॥ तत्कोमलपदन्यासधन्या भूः सिकतावती । रेखाध्वजातपत्राब्जचिह्नैरासीद्विचित्रिता ॥ ६९ ॥ नारीकेलाम्रपनसरम्भाद्यैर्गौतमीतटे । चिरात्कृतार्थता विद्वद्भिर्निर्विष्टप्रसवैर्ययै ॥ ७० ॥ आप्लाव्य वारि गौतम्याः स्वच्छाम्भोजरजोम्बरः । मरुत्प्रत्युदययौ मार्गे तमानन्दथुमन्थरः ॥ ७१ ॥ विद्राव्य यतिसिंहोऽन्यक्षुद्रानेकपयूथपान् । भद्राचलमितो रामभद्राय नतिमातनोत् ॥ ७२ ॥ कोनसीमामसौ प्राप मानसी मापतेरिव । विभाति सृष्टिर्या विद्वत्सभातिशयशोभिता ॥ ७३ ॥ नारीकेलेषु तन्वन्तः क्रमानालम्बितेक्षवः । पक्वरम्भापङ्किलेऽगुः पथि योगीन्द्रसूरयः ॥ ७४ ॥ कन्दैरानन्दिनः केचिद्रसालैरलसाः

---

परस्परकलहश्च नाभवत् । तन्महिम्नैवेति भावः ॥ ६८ ॥ **तदिति** । सिकतावती भूः भूमिः तस्य विद्याधीशस्य कोमलयोः पादयोः न्यासेन धन्या सती रेखाध्वजातपत्राब्जचिह्नैः तत्पादतलस्थरेखाकृतिकेतुच्छत्रकमललक्षणैः प्रसक्तैः विचित्रिता विशेषेणचित्रवती भूता आसीत् । एतेनास्य सौलक्षण्यं गम्यते ॥ ६९ ॥ **नारिकेलेति** । गौतम्यास्तटे प्ररूढैरिति शेषः । नारिकेलैः आम्रपनसरम्भाद्यैः आद्यशब्देन जम्बूजम्बीरादीनां संग्रहः । विद्वांसः विद्याधीशानुगाः तैः निर्विष्टा उपभुक्ताः ' निर्वेश उपभोगः स्यात् ' इत्यमरः । चिरात् कृतार्थता सफलत्वं ययै यातम् । एतेन गोतमीतटस्य प्राग् जनैरगम्यत्वं व्यज्यते । यातेः कर्मणि लिट् ॥ ७० ॥ **आप्लाव्येति** । मार्गे मरुद्वायुः गौतम्याः वाः उदकं ' नपुंसि वाः स्त्रियां भूमन्यपो घनरसः पुमान् । ' इति वैजयन्ती । तस्मिन् आप्लाव्य स्नात्वा स्वच्छाम्भोजरजोऽम्बरः निर्मलकमलपरागलक्षणवस्त्रवान् आनन्दथुना तदागमनजनितहर्षेण मन्थरः मन्दगामी सन् तं विद्याधीशं प्रति उदययौ तदभिमुखं वाति स्मेत्यर्थः । उक्तविशेषणत्रयेण वायोः शैत्यसौरभ्यमाद्यवत्वं दर्शितम् ॥ ७१ ॥ **विद्राव्येति** । यतिसिंहो विद्याधीशः येऽन्ये क्षुद्राः विमताः त एवानेकपयूथपाः गजनायकाः ' द्विरदोऽनेकपो द्विपः ' इत्यमरः । तान् विद्राव्य स्वयं सिंहत्वादितिभावः । भद्राचलं इतः प्राप्तः सन् रामभद्राय तत्रत्यराममूर्तये आनतिं नमस्कारं आतनोत् कृतवान् ॥ ७२ ॥ **कोनेति** । असौ विद्याधीशः कोनसीमां प्राप विद्वत्सभया अतिशयेन शोभिताम् । या कोनसीमा मापतिः लक्ष्मीशो हरिः ' इन्दिरा लोकमाता मा ' इत्यमरः । तस्य मनसः इयं मानसी सृष्टिरिव विभाति । सकलदेशाधिकसमृद्धिमत्वाद्धरिमनःसृष्टिरिवेत्युत्प्रेक्षा ॥ ७३ ॥ तादृक्समृद्धिमत्वं तस्याः प्रपञ्चयति द्वाभ्याम् । **नारिकेलेष्विति** । योगीन्द्रस्य विद्याधीशस्य सूरयो पक्वाभिः रम्भाभिः कदलीफलैः पङ्किले पङ्कवति फेनादित्वाल्लच् । ' सजम्बाले तु पङ्किलः ' इत्यमरः । पथि मार्गे आलम्बितेक्षवः इक्षुदण्डानवष्टभ्येत्यर्थः । नारिकेलेषु क्रमान् पादविक्षेपान् तन्वन्तः सन्तः अगुः यान्ति स्म । ' इण् गतौ ' इति धातोर्लुङ् । यथा लोके सकर्दमे पथि पाषाणान्निधाय तदुपरि यष्टिग्रहणपूर्वकं पादविक्षेपं कृत्वा गच्छन्ति तद्वदिति ध्वनिः । तेन च कोनसीमायाः नारिकेलादिसमृद्धिमत्वं व्यज्यते ॥ ७४ ॥ **कन्दैरिति** । तत्र कोनसीमायां केचित्पण्डिताः विद्याधीशस्य विद्वांसः कन्दाः सूरणाः ' कन्दं त्वस्त्री चित्रदण्ड उल्कः कम्बूरसूरणाः । ' इति वैजयन्ती । तैः आनन्दिनः आनन्दवन्तः स्वैरं कन्दानुपभुज्य ननन्दुरित्यर्थः । अन्ये विद्वांसः रसालैश्चूतफलैः अलसाः चूतफलानामत्यन्तभक्षणादालस्यं प्रापुरित्यर्थः । अन्ये पनसैः पनसफलैः तद्भक्षणेनेति भावः । संतृप्तमनसः अभवन्निति शेषः । एतेन कन्दादीनां

**परे । अन्ये पनससंतृप्तमनसस्तत्र पण्डिताः ॥ ७५ ॥ सोऽन्तर्वेदिमगादन्तर्वाणिश्रेणिभिरावृतः । वासिष्ठगोदास्वप्रेष्ठसङ्गसाङ्केतिकस्थलीम् ॥ ७६ ॥ गोदाकूपारसङ्गेऽस्मिन्निःसङ्गोऽपि निमज्य सः । पारीन्द्राननमद्राक्षीत्स्फारताराप्रियत्विषम् ॥ ७७ ॥ गर्भे बिभर्म्यशेषाणि भुवनानीति यः स्फुटम् । दर्शयन्निव भक्तानां तस्थौ व्यात्ताननाम्बुजः ॥ ७८ ॥ यः प्रेमकलहे शश्वद्वृद्धगङ्गाधुनीशयोः । श्रिया स्वाङ्कजुषा साकं स्वयंमाध्यस्थमश्नुते ॥ ७९ ॥ शङ्खचक्रधरो बिभ्रद्यस्तुन्दे भुवनोत्करम् । पारेसिन्धु कृपासिन्धुरिन्धे मीनादिविग्रहः ॥ ८० ॥ नृकण्ठीरवमानम्य योगिकण्ठीरवः स्तुवन् । न्यवसत्कानिचित्तत्र**

---

समृद्धिर्व्यज्यते ॥ ७५ ॥ **स इति** । अन्तर्वाणयः शास्त्रविदः ' अन्तर्वाणिस्तु शास्त्रविद् ' इत्यमरः । तेषां श्रेणिभिः आवृतः स विद्याधीशः वासिष्ठगोदावरीमध्ये या वसिष्ठसंबन्धिनी गोदावरी तस्याः स्वप्रेष्ठेन स्वकीयप्रेयसा समुद्रेणेत्यर्थः । यः सङ्गः तस्य साङ्केतिकस्थली सङ्केतप्रदेशः तत्रोभयोः संसर्गादिति भावः । तां अन्तर्वेदिं अन्तर्वेदिकाख्यनृसिंहक्षेत्रं अगात् ॥ ७६ ॥ **गोदेति** । निःसङ्गोऽपि स विद्याधीशः अस्मिन् गोदा गोदावरी कूपारः समुद्रः ' अवारपारकूपारो रत्नमीनाभिधाकरः ' । इति धनञ्जयः । तयोः संयोगे निमज्य स्नात्वा निःसङ्गोऽपि निमज्येति विरोधो ध्वन्यते । स्फारा व्याप्ता ताराप्रियस्य चन्द्रस्य त्विट् इव त्विट् यस्य तं तथोक्तं शुभ्रकान्तिमित्यर्थः । पारीन्द्रः सिंहः ' कण्ठीरवो गजरिपुः पारीन्द्रः श्वेतपिङ्गलः । ' इति शब्दार्णवे । तस्य आननमिव आननं यस्य पारीन्द्राननः श्रीनृसिंहः तं अद्राक्षीत् ददर्श ॥ ७७ ॥ तमेव त्रिभिर्विशिनष्टि । **गर्भे इति** । यो नृसिंह अशेषाणि भुवनानि गर्भे कुक्षौ ' कुक्षिभ्रूणार्भका गर्भाः ' इत्यमरः । तस्मिन् बिभर्मि इत्येवं भक्तानां तस्थौ स्फुटं व्यक्तं दर्शयन्निव व्यात्ताननाम्बुजः विवृतवक्त्रपद्मः आस्ते इति शेषः । अत्र नृसिंहस्वाभाविकवक्त्रव्यादानस्य कुक्षिस्थलोकदर्शननिमित्तत्वेनोत्प्रेक्षणादुत्प्रेक्षा ॥ ७८ ॥ **य इति** । यो नृसिंहः शश्वत् अजस्रं वृद्धगङ्गा गोदावरी ' गौतमी वृद्धगङ्गा च गोदा गोदावरी तथा । ' इति रभसः । धुनीशः समुद्रश्च तयोः दम्पत्योरिति भावः । प्रेमकलहे मिथः प्रणययुद्धे सति स्वाङ्कजुषा स्वोत्सङ्गभाजा स्वान्तिकस्थया वा ' उत्सङ्गचिह्नयोरङ्कः समीपे तु त्रिषु स्मृतः । ' इति शब्दार्णवे । श्रिया साकं मध्यस्थस्य भावः माध्यस्थं उभयोरन्तरादेशस्थत्वं कलहनिवारणाय मार्गस्थत्वं च ' न्याय्येऽपि मध्यम् ' इत्यमरः । तदश्नुते प्राप्नोति । यथा लोके कयोश्चिद्दम्पत्योः कलहे कौचित्प्रतिवेशदम्पती स्वयं निवारयतः तद्वदिति ध्वनिः ॥ ७९ ॥ **शंखेति** । शंखश्च चक्रं च तयोः धरः । पचाद्यच् । अन्यत्र शंखानां चक्रं समूहः ' चक्रं समूहे राष्ट्रे च । ' इति रभसः । तस्य धरः । तुन्दे कुक्षौ भुवनानां उत्करो राशिः चतुर्दशभुवनानीत्यर्थः । तं बिभ्रत् । अन्यत्र भुवनोत्करं उदकराशिं ' जीवनं भुवनं वनम् ' इत्यमरः । बिभ्रत् । मीनादीनां विग्रहः शरीरमस्यास्तीति मीनादिविग्रहः अन्यत्र मीनादीनां विग्रहः परस्परकोलाहलः अस्यास्तीति तथा । कृपायाः सिन्धुः समुद्रः कृपापूर्ण इत्यर्थः । सिन्धोः पारे पारेसिन्धु ' पारे मध्ये षष्ठ्या वा इति अव्ययीभावः । इन्धे दीप्यते । स्वयं कृपासिन्धुत्वात्सिन्धुपारे वर्तनमुचितम् । ' एकनाम्नोः सदा प्रीतिः ' इतिन्यायादिति भावः । अत्र नृसिंहसमुद्रयोः प्रकृतत्वात्तद्विशेषणानां श्लिष्टत्वाच्च केवलप्रकृतयोः श्लेषः ॥ ८० ॥ **नृकण्ठीरवमिति** । योगिसिंहः योगिश्रेष्ठ इत्यर्थः । ' स्युरुत्तरपदे व्याघ्र- सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः ॥ ' इत्यमरः । नृकण्ठीरवं नृसिंहं आनम्य नत्वा स्तुवन्

**दिनानि सुजनादृतः ॥ ८१ ॥ लवणोदस्य कच्छेषु यान्यम्बूनि निसर्गतः । कीटान्यपि स्वदन्ते स्म महिम्नैव यतीशितुः ॥ ८२ ॥ तत्रत्यजनता तादृक् प्रत्यक्षं पारिकाङ्क्षिणः । अतनीद्वीक्ष्य माहात्म्यमद्भुताब्धौऽवगाहनम् ॥ ८३ ॥ निरीय स गरीयस्या गोदायाः सप्तधाम्बुधिम् । प्रविशन्त्यास्ततस्तेने पारिकाङ्क्षी प्रदक्षिणम् ॥ ८४ ॥ स्मार्तानार्तान्विवादे विरहितविजयानेव रामानुजीयान् । गाणापत्यांस्तथात्याहितलुलितमतीन्र्वीतसारांश्च सौरान् ॥ शाक्तेयानप्यशक्तान्पथि पथि विदुषो दीनदीनांश्च जैनांस्तेने श्रीनेतृसादप्यखिलजयरमां योगिनां सार्वभौमः ॥ ८५ ॥ काणादैः कोणलीनैः समजनि हरितां**

---

सन् तत्र अन्तर्वेद्यां सुजनैः तत्रत्यजननैः आदृतः सन् कानिचिद्दिनान्यवसत् ॥ ८१ ॥ **लवणेति** । लवणोदस्य लवणाब्धेः कच्छाः जलप्रदेशाः 'जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविधः ।' इत्यमरः । तेषु यानि अम्बूनि उदकानि निसर्गतः स्वभावात् कीटानि क्षाराण्यपि 'क्षारं जलं तु कीटं स्यात् ।' इति वैजयन्ती । यतीशितुः गुरोः महिम्नैव स्वदन्ते स्म पिबतां स्वादुत्वं ययुरित्यर्थः । 'स्वद् आस्वादने' इत्यस्माल्लट् ॥ ८२ ॥ **तत्रेति** । तत्रत्या अन्तर्वेदिस्था जनता जनसमूहः पारिकाङ्क्षिणः यतेः विद्याधीशस्य तादृक् क्षारोदकानामपि मधुरीकरणरूपं प्रत्यक्षं अक्षिविषयं स्वानुभूतमित्यर्थः माहात्म्यं वीक्ष्य अद्भुताब्धौ आश्चर्यसमुद्रे वगाहनं अतनीत् ततान । 'वष्टि भागुरिः' इत्यादिना अकारलोपः । 'गुरोर्महिम्नैव क्षारोदकान्यपि स्वादूदकान्यभवन्निति सर्वे विस्मिता बभूवुरित्यर्थः ॥ ८३ ॥ **निरीयेति** । पारिकाङ्क्षी तपस्वी 'तपस्वी तापसः पारिकाङ्क्षी वाचंयमो मुनिः ।' इत्यमरः । स विद्याधीशः ततो अन्तर्वेदिनगरात् निरीय निर्गत्य सप्तधा सप्तप्रकारेण 'प्रकारवचने धाल् (?) [ संख्याया विधार्थे धा ] इति धा । अम्बुधिं प्रविशन्त्या गरीयस्याः श्रेष्ठतरायाः 'प्रियस्थिर' इत्यादिना गुरोर्गरादेशः । अतिशायनादियसुन्प्रत्ययः । स्त्रीत्वात् ङीप् । गोदायाः गोदावर्याः प्रदक्षिणं तेने । तुल्यात्रेयी भरद्वाजी गौतमी वृद्धगौतमी । कौशिकी च वशिष्ठा च सप्तगोदा प्रकीर्तिताः ॥' इति सप्तत्वम् ॥ ८४ ॥ **स्मार्तानीति** । योगिनां सार्वभौमो विद्याधीशः पथि पथि प्रतिपथं 'नित्यं वीप्सयोः' इति वीप्सायां द्विरुक्तिः । विवादे विषये स्मार्तान्मायावादिनः विदुषः पण्डितान् आर्तान् प्रत्युत्तरास्फुरणात् स्वसिद्धान्तखण्डनाच्चेति भावः । दुःखितांश्च विवादपदं सर्वत्र योज्यम् । रामानुजीयान् रामानुजमतावलम्बिनः शृङ्गिण इत्यर्थः । तान् विरहितविजयान् स्वेन निर्जितानेव तथा गाणपत्याः गणपत्युपासकाः तान् अत्याहितं महाभीतिः 'अत्याहितं महाभीति कर्म जीवानपेक्षि च ।' इत्यमरः । तेन लुलितमतीन् क्षुब्धबुद्धीन् सौरान् सूर्योपासकांश्च वीतसारान् निःसारान् शाक्तेयान् शक्त्युपासकानपि आशक्तान्सामर्थ्यरहितान् जैनान् बौद्धविशेषान् दीनदीनान् अत्यन्तदीनान् वीप्सायां द्विरुक्तिः । तेने चकार । तथा अखिलानां विमतानां जयरमां तत्पराभवलक्षणां जयलक्ष्मीं श्रीनेता लक्ष्मीपतिः हरिः तस्य सात् अधिनमपि तेने इति संबन्धः । 'तदधीनवचने' इति सातिः । अपिः समुच्चये । विमतविजयफलं हयपर्णे चकारेत्यर्थः ॥ ८५ ॥ **काणादैरिति** । तथा काणादैः हरितां दिशां कोणेषु लीनैः गूढैः भीत्येति भावः । समजनि जातम् । भावे लुङ् । गौतमीयैः गौतममतावलम्बिभिः अप्रमेयः अतर्क्यः उद्रावः पलायनं येषां ते तथाभूतैः समजनि । शैवैः शिवागमज्ञैः स्वसंवित् स्वकीयसिद्धान्तः 'संविद्युद्धे प्रतिज्ञायां संकेताचारनामसु ।' इत्यमरः । तस्य क्षत्या विनाशेन हेतुना विकृतरवैः कृपणभाषणैः समजनि । तथा लैङ्गैः लिङ्गशास्त्रज्ञैश्च प्राप्तभङ्गैश्च समजनि । नारदीयैः नारदमताव-

गौतमीयैरमेयोद्रावैः शैवैः स्वसंवित्क्षतिविकृतिरवैः प्राप्तभङ्गैश्च लैङ्गैः । नादेयैर्नारदीयैरति गलितमदैरेकजीवैकवादैर्नासीन्नासीरभाजामपि धुरि विमतः कोऽप्याऽहो संयमीन्दोः ॥८६॥ प्रत्यम्बुधि प्रतिसरित्प्रतिपुण्यतीर्थं प्रत्यम्बुजाकरमपि प्रतिनिम्नगाम्बु । अक्षालयद्वपुरपि प्रयतं यतीन्दुर्मौकुन्दपादपरिचिन्तनयान्तरङ्गम् ॥ ८७ ॥आगत्य धर्मनगरीं नृहरीन्द्रमुच्चैरानम्य सम्यगधिगत्य कृपां तदीयाम् । स त्र्यम्बकाचलमवाप भवापहोद्यद्विज्ञानशेवधितृणीकृतलौकिकार्थः ॥ ८८ ॥ शिष्टानां दैन्यमन्यादृशमभिलषितस्वर्णवर्षैर्विधुन्वन् । दुष्टानां

---

लम्बिभिः भागवतसंज्ञकैरित्यर्थः । आदेयाः सद्भिः स्वीकार्या न भवन्तीति अनादेयाः तैः समजनि । एको जीव इति एको मुख्यो वादो येषां ते एकजीवैकवादाः तैश्च गलितमदैः निरस्तगर्वैः समजनि । समजनि इति सर्वत्र क्रिया संबध्यते । एतेन विद्याधीशः काणादादिसकलविमतसिद्धान्तान् पूर्वपक्षीचकारेति फलितार्थः । किं बहुना संयमीन्दोः विद्याधीशस्य नासीरं सेनामुखं 'सेनामुखं तु नासीरम्' इत्यमरः । तद्भजन्तीति नासीरभाजः तदीयविद्वत्सेनाग्रेसराः विदुषां शिष्या इत्यर्थः । तेषां धुरि अग्रेऽपि मास्तु विद्याधीशः तद्विदुषामपि अग्रे स्थातुं कोऽपि विमतः नासीत् न स्थितः । अहो तदीयविद्वच्छिष्याणामग्रेऽपि न कस्यापि विमतस्य स्थातुं शक्तिरासीदित्याश्चर्यमित्यर्थः । श्लोकद्वये स्रग्धरावृत्तम् । उक्तं लक्षणम् ॥ ८६ ॥ प्रतीति । यतीन्दुः विद्याधीशः प्रत्यम्बुधि अम्बुधिषु पूर्वपश्चिमदक्षिणसमुद्रेषु प्रतिसरित् गङ्गादिनदीषु प्रतिपुण्यतीर्थं पुण्यतीर्थेषु स्वामिपुष्करिण्यादिषु प्रत्युम्बुजाकरं कमलाकरेषु प्रतिनिम्नगाम्बु नगनदीजलेषु अपिशब्दः समुच्चये । सर्वत्र यथार्थेऽव्ययीभावः । प्रयतमपि स्वतः पवित्रमपि वपुः शरीर मक्षालयत् क्षालितवान् । तेषु सस्नौ इत्यर्थः । मौकुन्दयोः मुकुन्दसंबन्धिनोः पादयोः परिचिन्तया ध्यानेन अन्तरङ्गं स्वान्तःकरणं अक्षालयदिति संबन्धः । 'अन्तरं हरिचिन्तनम्' इतिशास्त्रादितिभावः । बाह्याभ्यन्तरशौचाभ्यां निर्मलोऽभूदित्यर्थः ॥ ८७ ॥ आगत्येति । स विद्याधीशः उच्चैः प्रसिद्धां धर्मनगरीं आगत्य नृहरिं नृसिंहं सम्यक् साष्टाङ्गमानम्य नत्वा तदीयां नृसिंहसंबन्धिनीं कृपामधिगत्य प्राप्य भवं संसारं अपहन्तीति भवापहं उद्यत्प्रकाशमानं यद्विज्ञानं शास्त्रज्ञानं 'विज्ञानं शिल्पशास्त्रयोः' इत्यमरः । तदेव शेवधिः निधिः तेन तल्लाभेनेत्यर्थः । तृणीकृता लौकिकर्द्धिः वैषयिकसुखसमृद्धिः यस्य स तथोक्तः सन् 'निस्पृहस्य तृणं जगत्' इतिन्यायादिति भावः । त्र्यम्बकाचलं नासिकत्र्यम्बकं अवाप । श्लोकद्वयेऽपि वसन्ततिलकावृत्तम् ॥ ८८ ॥ शिष्टानामिति । असौ विद्याधीशः अन्यादृशं असदृशं अतिमात्रमित्यर्थः । शिष्टानां साधूनां दैन्यं दारिद्र्यं अभिलषितानां तैः आकाङ्क्षितानां स्वर्णानां वर्षैर्दानैरित्यर्थः विधुन्वन् नाशयन् विपूर्वाद् 'धूञ् कम्पने' इत्यस्माद्धातोर्लटः शत्रादेशः । तथा दुष्टानां विमतानां गर्वसर्वस्वमपि समस्तविद्याजनितगर्वमित्यर्थः । तत्तदर्हक्रियाभिः तेषां उचितशिक्षाभिः परिहरन् तथा ज्ञानदानैः ज्ञानोपदेशैः भक्तानां अनुजनु जन्मसु 'जनुर्जननजन्मनी' इत्यमरः । यथार्थेऽव्ययीभावः । उद्यतां दुष्कृतानां ओघं समूहं विनिघ्नन् निवारयन् श्रीराघवे निघ्नः आयत्तः श्रीरामचन्द्रध्यानपरः सन्नित्यर्थः । 'अधीनो निघ्न आयत्तः' इत्यमरः । अत एव अखिलजनानां समस्तसज्जनानां हृत् हृदयमानन्दयतीति अखिलजनहृदानन्दनं नन्द्यादित्वात् ल्युट् । स्पन्दनं

गर्वसर्वस्वमपि परिहरंस्तत्तदर्हक्रियाभिः ॥ भक्तानां ज्ञानदानैरनुजनुरुदयद्दुष्कृतौघं विनिघ्नन् । निघ्नः श्रीराघवेऽसावखिलजनहृहानन्दनस्पन्दनोऽभूत् ॥ ८९ ॥

॥ इति श्रीविद्याधीशविजये सप्तमः सर्गः ॥

अथ जातुचित्सदसि संयमिनामवतंसभूषणमणिः कृतिनः । अवलोक्य केशवसुधीप्रमुखानवदत्सुधारसकिरां स गिरम् ॥१॥ सुखतीर्थरूपकलनेन सदागमनो वितीर्य भुवि धूतरिपुः । करिराडिव क्षितितलं महितं मतमुद्दधार जलराशिगतम् ॥ २ ॥ अहमस्मदीयगुरुवर्यमणेरनुकम्पयेदमवनैकधुराम् । अधुना वहामि निवहेन सतां भवतां विधूतविमतोऽनुमतः ॥ ३ ॥ बहुशः किलान्ध्रविषयेषु परे विदुषो द्विषः श्रुतिततेः समदाः । विजिता

---

चलनं यस्य स तथोक्तः अभूत् । समस्तसज्जनोपकाराय भुवि चचारेत्यर्थः ॥ ८९ ॥

इति श्रीगदयकोनेरिणा जनार्दनसूरिणा कारितायां विद्याधीशविजयव्याख्यायां शब्दार्थदीपिकायां सप्तमः सर्गः समाप्तः ॥

अथेति । अथ नासिकत्र्यम्बकानन्तरं संयमिनामवतंसभूषणमणिः विद्याधीशः जातुचित् कदाचित् सदसि स्थितानिति शेषः । केशवसुधीप्रमुखान् कृतिनः पण्डितान् अवलोक्य सुधारसं किरन्तीति सुधारसकिराः अमृतरसवर्षिणीः तद्वन्मधुरेत्यर्थः । किरतेः 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्ययः । तां गिरमवदत् वक्ष्यमाणरीत्या जगाद । अस्मिन्सर्गे ललितावृत्तम् । 'सजसास इत्यभिहिता ललिता' इति तल्लक्षणात् ॥ १ ॥ तदुक्तिमेव पञ्चभिराचष्टे सुखेति । सदागमनः सदागतिर्वायुः सुखतीर्थरूपकलनेन आनन्दतीर्थनामकशरीरग्रहणेन अवतीर्य किरिराट् आदिवराहराजः 'वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः ।' इत्यमरः । धूतरिपुः निरस्तविमतः निरस्तहिरण्याक्षश्च जलराशिगतं समुद्रस्थितं महितं आतिमात्रं क्षितितलमिव जलानां जडानां डलयोरभेदः । राशिः समूहः तं गतं अज्ञजनबाहुल्यात्खिलीभूतमित्यर्थः । महितं पूजितं मतं द्वैतसिद्धान्तं उद्दधार प्रकटीचकारेत्यर्थः । पुरा किल हरिः यज्ञवराहो भूत्वा हिरण्याक्षहननपूर्वकं समुद्रमग्नां भुवं दंष्ट्रया उद्दधार इति पौराणिकाः कथयन्ति । उपमालंकारः ॥ २ ॥ तर्हि किमित्यत्राह अहमिति । सतां साधूनां भवतां युष्माकं निवहेन समूहेन अनुमतः इत्यचारोक्तिः । अहं अस्मदीयो यो गुरुवर्यमणिः गुरुश्रेष्ठो वेदव्यासः तस्य अनुकम्पया दयया न तु मदीयसामर्थ्येनेति भावः । अस्य मतस्य अवनं रक्षणं इदमवनं तस्य एका मुख्या धूः भारः तां इदमवनैकधुराम् । 'ऋक्पूरब्धूः' इत्यादिना समासान्तोऽप्रत्ययः । अधूना वहामि गुर्वाज्ञापरतन्त्रतया मध्वमतरक्षणं करोमीत्यर्थः ॥३॥ तन्मतविरोधिनिरासस्य साध्यत्वं विवक्षुः तावत्सिद्धत्वमाह बहुश इति । आन्ध्रविषयेषु आन्ध्रदेशेषु बहुधा श्रुतिततेः वेदपङ्क्तेः द्विषः शत्रवः । अयथार्थकल्पनमेव द्वेषः इत्याशयः । अस्मन्मतस्य श्रुत्यनुसारित्वादस्मन्मतद्वेषिणोऽपीति भावः । समदाः साहंकाराः परे विमताः विबुधाः पण्डिताः भवद्भिर्विजिताः किलेति वाक्यालंकारे । न केवलमरिष्टनिवृत्तिः इष्टप्राप्तिश्चेत्याह दशमनीषपतिः मध्वेशः अजितः हरिः अपि चिरात्परितोषितः । विमतनिरासेन गुर्वन्तरगत-

भवद्भिरजितोऽपि चिरात्परितोषितो दशमनीषपतिः ॥ ४ ॥ अधिचोलदेशमधिकस्मयभाग् निगमागमार्थनिपुणः कृतिनाम् । निकरोऽस्मदीयमतभेदकरो वसतीति नः श्रुतमसत्प्रथमः ॥ ५ ॥ तदखर्वगर्वधुतिपूर्वमहीश्वरशैलरङ्गनगरादिजुषः । कमलाधिनेतुरवलोकनतः कलयाम नः फलि दृशोर्जननम् ॥ ६ ॥ इति तद्वचःश्रवणमात्रभवत्प्रमदोत्करप्रहृषिताङ्गरुहैः । अखिलैः सुधीभिरपि साञ्जलिभिर्जगदेऽञ्जसेति जगदेकगुरुः ॥ ७ ॥ यतिवर्यकार्यमिदमार्यनुतं भवता यदत्रभवताभिहितम् । असतां च शिक्षणमशेषसतां परिरक्षणं हि परमीशमुदे ॥ ८ ॥ भवदीयपादसरसीजरजःकणमाकलय्य शिरसैव वयम् । अवगाढशास्त्रसरितो विमताम्बुरुहेषु कुर्म इभराड्विहृतम् ॥ ९ ॥ अपि मायिपक्षमतिविक्षुभितं परि-

---

परमात्मापि भवद्भिः प्रसादितः इत्यर्थः ॥ ४ ॥ साध्यत्वाशं कथयति अधीति । निगमागमानां वेदशास्त्राणां अर्थेषु अर्थबोधेष्वित्यर्थः । निपुणः अत्र अर्थबोधो वैपरीत्येनेति हृदयम् । अत एव अधिकस्मयं भजतीति तद्भाक् । अस्मदीयमतभेदं खण्डनं करोतीति अस्मदीयमतभेदकरः असतां प्रथमः अग्रेसरः कृतिनां विमतपण्डितानां निकरः समूहः अधिचोलदेशं चोलदेशे विभक्त्यर्थेऽव्ययीभावः । वसति तिष्ठतीति नः अस्माकं श्रुतं अस्माभिः श्रुतमित्यर्थः । 'कृत्यानां कर्तरि वा' इति षष्ठी ॥ ५ ॥ तदिति । तेषां विमतपण्डितानां अखर्वः अतिमात्रः यो गर्वः शास्त्रज्ञानजनितदर्पः तस्य धूतिः वादेन निरसनं पूर्वं यस्मिन्कर्मणि यथा भवति तथा । अहीश्वरशैलः शेषाचलः रङ्गनगरं श्रीरङ्गं तदादिजुषः आदिशब्देन काञ्चीनगरादीनां संग्रहः । शेषाचलरङ्गादिस्थलाश्रितस्य कमलाधिनेतुः वेङ्कटेशरङ्गेशादिविग्रहवतः श्रीपतेः अवलोकनतः दर्शनात् नः अस्माकं दृशोः जननं जन्म फलि सफलं कलयाम करवाम 'कलि कामधेनौ' विध्यर्थे लोट् । 'एका क्रिया द्व्यर्थकरी' इति भावः ॥ ६ ॥ इतीति । इत्येवं तस्य विद्याधीशस्य वचसः श्रवणमात्रेण भवता मनसि प्रादुर्भवता प्रमोदोत्करेण संतोषातिशयेन प्रहृषिताङ्गरुहैः संजातरोमाञ्चैः साञ्जलिभिः अखिलैः सुधीभिः विद्वद्भिः जगदेकगुरुः विद्याधीशः इति वक्ष्यमाणरीत्या अञ्जसा शीघ्रं जगदे उक्तः । 'गद् व्यक्तायां वाचि' इत्यस्माद्धातोः कर्मणि लिट् ॥ ७ ॥ तेषां वचनमेव चतुर्भिराचष्टे । यतीति । हे यतिवर्य अत्रभवता पूज्येन भवता त्वया आर्यैः विद्वद्भिः नुतं श्लाघितं यद्वचनं अभिहितं उक्तं इदं वचनं कार्यं कर्तव्यमेव । तथा हि असतां शिक्षणं च अशेषसतां परिरक्षणं च परं केवलं ईशस्य हरेः मुदे मोदाय भवतीति शेषः । अतस्तत्कार्यमेवेति भावः । उत्तरपदार्थस्य पूर्वपदार्थहेतुत्वात्काव्यलिङ्गमलंकारः ॥ ८ ॥ विमतनिराकारस्य द्वाभ्यां ईषत्करत्वं सूचयति भवदीयेति । भवदीययोः पादसरसीजयोः रजःकणं शिरसा आकलय्य धृत्वा भवदनुग्रहं लब्ध्वेति यावत् । वयमेव तिष्ठतु भवानिति भावः । अवगाढा आलोडिताः शास्त्राण्येव सरितो नद्यो यैस्ते तथोक्ताः सन्तः विमता एव अम्बुरुहाणि तेषु विषयेषु इभराजस्य गजयूथपस्य विहृतिं विहारं कुर्मः करिष्यामः इत्यर्थः । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति कर्तरि लट् । यथा लोके गजराजः शुण्डया स्वशिरसि रेणुकणानुत्क्षिप्य नद्यादिकमवगाह्य तत्रत्यकमलानि व्याकुली करोति तद्वदिति रूपकनिदर्शनोत्थापितोऽयं ध्वनिः ॥ ९ ॥ अपीति । किं बहुना

**घट्टितं निखिलभाट्टमतम् । घनतार्किकोक्तिमपि शर्करितां करवाम युक्तिकलयैव मुहुः॥१०॥ नियमीन्द्र सोऽहमितिवर्णयुगं निगदन्ति येऽत्र विबुधाशयदाः । पुनरेतदेव हि सदाद्यतया प्रवदन्तु ते तव पदाब्जनताः ॥ ११ ॥ इति जल्पितं यतिवरः सुधियामभिनन्द्य मन्दहसितेन शनैः । चकमे प्रयातुमखिलैः सुजनैः कलशीभवाधिकरणं ककुभम् ॥१२॥ उदजृम्भि तत्क्षणमदभ्रघनोद्भटगर्जितप्रतिभटैः पटुभिः । प्रतिवादिहृद्धरणिभृद्भिदुरैर्विरुदाब्जराड्घुमघुमध्वानिभिः ॥ १३ ॥ स निजांसकलप्तरघुवंशमणिप्रतिमाभरातिरमणीयवपुः । कर-**

---

मायिनां पक्षः अद्वैतसिद्धान्तः तमपि विक्षुभितं विशेषेण क्षोभं प्राप्तं निखिलं भाट्टमतं परिघट्टितं ताडितं तिरस्कृतमिति यावत् । घनां सान्द्रां परैरभेद्यामित्यर्थः । तार्किकोक्तिमपि शर्करितां शर्करीकृतां कणशः खण्डितामित्यर्थः । युक्तिकलया युक्तेः प्रज्ञाधर्मस्य एकांशेनैव तिष्ठतु यावदबुद्धिबलमिति भावः । मुहुः करवाम वयमिति शेषः । करोतेर्लोट् ॥ १० ॥ **नियमीन्द्रेति** हे नियमीन्द्र अत्र लोके ये विबुधायशदा विबुधेषु क्षुल्लकाः 'निहीनाऽयशदो (पसदो) जाल्मो क्षुल्लकश्चेतरश्च सः' । इत्यमरः । सोऽहमिति वर्णयुगं अक्षरद्वयं निगदन्ति जीवपरमात्मनोरभेदबुध्येति भावः । ते विबुधायशदाः तव पादाब्जयोः नताः अस्माभिर्वादिजितत्वादित्याशयः । पुनः भूयोऽपि एतत्सोऽहमिति वर्णयुगं सदा सततं आद्यतया प्राधान्येन प्रवदन्तु । हिशब्दोऽवधारणे । निरस्ताभेदमता अपि पुनः सोऽहमिति वदन्त्विति विरोधो ध्वन्यते । वास्तवार्थस्तु सोऽहमिति वर्णयुगं दाइत्यक्षरं आद्यं आदौ प्रयुक्तं तेन सहवर्तते इति सदाद्यं तस्य भावस्तता तथा प्रवदन्तु दासोऽहमिति वदन्तु इति । विरोधाभासोऽलंकारः ॥ ११ ॥ **इतीति** यतिवीरो विद्याधीशः इत्येवं सुधियां पण्डितानां जल्पितं वचनं शनैः मन्दहसितेन अभिनन्द्य स्मितमेव तदुक्तिप्रत्युत्तरीकृत्येत्यर्थः । अखिलैः सुजनैः सह कलशीभवस्य कुम्भजन्मनः अगस्त्यस्य अधिकरणं आधारभूतां ककुभं दिशं दक्षिणदिशं प्रयातुं चकमे इच्छति स्म ॥ १२ ॥ **उदिति** । स एव क्षणः तत्क्षणः तं तत्क्षणं गुरोर्दक्षिणदिग्विजययाञ्चाङ्गीकरणक्षण एवेत्यर्थः । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । अदभ्राणां बहूनां घनानां मेघानां उद्भटस्य निर्गलस्य गर्जितस्य प्रतिभटैः प्रतियोधिभिः तत्सदृशैरित्यर्थः । पटुभिः गम्भीरैः प्रतिवादिनां हृन्दि हृदयान्येव धरणीभृतः पर्वताः तेषां भिदुरैः वज्रप्रायैः श्रवणमात्रेण प्रतिवादिहृदयविदारकैरित्यर्थः । विरुदब्जराजस्य बिरुदशंखश्रेष्ठस्य घुमघुमध्वनिभिः कर्तृभिः उदजृम्भि उज्जृम्भितम् । जृम्भतेर्भावे लुङ् । तज्जैत्रयात्रासूचनाय शङ्खिकः शंखं दध्मौ इत्यर्थः ॥ १३ ॥ तत्प्रयाणमेवं चतुर्भिः कुलकेनाह स इत्यादिना सेति । स विद्याधीशः निजांसे स्वकीयस्कन्धे क्लप्तेन धृतेन रघुवंशमणेः मूलरामचन्द्रस्य प्रतिमायाः विग्रहस्य भरेण भारेण अतिरमणीयं अत्यन्तसुन्दरं वपुर्यस्य स तथोक्तः । रामप्रतिमावहनेन असाधारणतेजोवच्छरीर इत्यर्थः । करपङ्कजाभ्यां स्वकीयपाणिपद्माभ्यां आकलितं अवष्टब्धं विप्रयोः युग्या युगेन विधृताग्रयोः धृतप्रान्तभागयोः वेत्रमण्योः वेत्रदण्डश्रेष्ठयोः मध्यतटं मध्यप्रदेशो यस्य स तथोक्तः । साक्षाद्गृहस्थस्पर्शपरिजिहीर्षुत्वेन पार्श्वद्वये चतुर्भिर्विप्रैः धृताञ्चलयोर्वेत्रदण्डयोर्मध्यप्रदेशं स्वकराभ्यामवलम्ब्येत्यर्थः ।

पङ्कजाकलितविप्रयुगीविधृताग्रवेत्रमणिमध्यतटः ॥ १४ ॥ स्वपुरःसरैः सपदि भागवतैः परिगीतरामचरितानुगुणम् । अभिताड्यमानघनतालघणं घननादपूरितहरिद्वलयः ॥ १५ ॥ द्विजबन्दिवृन्दपठितादिगुरुस्तुतिहृद्यगद्यपद्यशतः । करुणार्द्रदृक्कलनमात्रकृतार्थितमन्त्रिसार्थरचितप्रणतिः ॥ १६ ॥ परिचारकौघधृतवेत्रलतां चलवल्गनप्रचलदग्रजनः । चलति स्म पादकमलार्पणतः प्रयतीकृतावनितलो यतिराट् ॥ १७ ॥ शितकुन्तमुद्गरपरश्वधिकानलकेषु धन्वकरवालकरा । प्रययौ पुरः प्रकटसिंहरवा प्रभुसंप्रयुक्तभटधोरणिका ॥१८॥ सुधियश्च केचिदनुगानुगताः स्पदवत्तुरङ्गधृतवस्तुभराः । अनुजग्मुरेनमधिशास्त्रमिथः कृतवादविस्मृतमहाध्वगमाः ॥ १९ ॥ अगणेयपुस्तकसमग्रभरस्तिमिताविलोलगलकम्ब-

---

छीके भारवाहिनो पुरुषान्तरदत्तकरावलम्बत्वेन गच्छन्ति ॥ १४ ॥ स्वेति । सपदि शीघ्रं स्वस्य आत्मनः पुरःसरैः पुरोगामिभिः भागवतैः भगवन्नामकीर्तनपरैः विप्रैः परिगीतस्य रामचरितस्य अनुगुणं अनुरूपं यथा भवति तथा अभिताड्यमानानां घनानां भारगुरुतालानां कांस्यमयानां घणघणनादैः पूरितहरिद्वलयः पूरितदिक्चक्रः ॥१५॥ द्विजेति । द्विजबन्दिनां स्तुतिपाठकविप्राणां वृन्देन पठितानि आदिगुरूणां मध्वादीनां स्तुतिभिः हृद्यानि गद्यानां चूर्णिकानां पदानां गीतरूपाणां पद्यानां श्लोकानां शतानि यस्य स तथोक्तः । करुणार्द्रायाः दृशः स्वदृष्टेः कलनमात्रेण अवलोकनेनैव कृतार्थितानां सफलितस्वागमश्रमाणां मन्त्रिणां अमात्यानां सार्थेन समूहेन रचितप्रणतिः कृतप्रणामः ॥ १६ ॥ परीति । परिचारकाणां विप्राणां ओघेन धृतानां वेत्रलतानां अञ्चलवल्गनेन अग्रभागचालनलक्षणसंज्ञया प्रचरन्तोऽग्रजनाः पुरोगतजनाः यस्य स तथोक्तः । एतेन जनसंमर्दो व्यज्यते । यतिराट् विद्याधीशः पादकमलार्पणतः स्वपादपद्मविन्यासात् प्रयतीकृतावनितलः पवित्रीकृतभूतलः सन् चलति स्म जगाम ॥ १७ ॥ सितेति । सिताः तीक्ष्णाः कुन्ताः प्रासाः मुद्गराः द्रुघणाख्यायुधविशेषाः 'द्रुघणो मुद्गरघनौ' इत्यमरः । परश्वधिकाः परश्वधाः कुठाराः अनलकानि अग्निवर्तिसीसकगुटिकासाधनवन्ति अनलकानि आयुधानि इषवो बाणाः धन्वानि धनूंषि 'धनुश्चापो धन्वशरासनकोदण्डकार्मुकम्' । इत्यमरः । करवालाः खड्गाश्च करे यस्याः सा तथोक्ता 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ' इति सप्तम्याः परत्वम् । प्रकटसिंहरवाः स्फुटसिंहनादाः प्रभुभिः अमात्यैः संप्रयुक्तानां मार्गेषु चोरादिनिरासाय प्रेषितानां भटानां धोरणिका पङ्क्तिः पुरः तस्य पुरस्तात् प्रययौ ॥ १८ ॥ सुधिय इति । अनुगैः स्वशिष्यैः अनुगताः काल्यमाना इत्यर्थः । स्पदवन्तो ये तुरङ्गाः तैः धृतवस्तुभारः उपकरणभारो येषां ते तथोक्ताः । केचित्सुधियश्च अधिशास्त्रं शास्त्रेषु मिथः अन्योऽन्यं कृतो यो वादः तेन विस्मृतः महतोऽध्वनः मार्गस्य गमो गमनं गमनजनितायासो येषां ते तथोक्ताः सन्तः एनं विद्याधीशमनुजग्मुः ॥ १९ ॥ अगणेयेति । तदनु तदनन्तरं अगणयानां असंख्येयानां पुस्तकानां समग्रभरेण पूर्णभारेण स्तिमितो निश्चलः निश्चलाङ्गक इत्यर्थः । विलोलो गलकम्बलः सास्ना यस्य सः 'सास्ना तु गलकम्बलः' इत्यमरः । समुदग्रशृङ्गशिखरः उन्नतविषाणाग्रः उत्कटः बलातिशयान्मत्तः भद्रा बलीवर्दाः 'उक्षा भद्रो बलीवर्दः' इत्यमरः । तेषां गणः प्रययौ । स्वभावोक्तिरलंकारः । 'स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्' ।

लकः । समुदग्रशृङ्गशिखरः प्रययौ तरसोत्कटस्तदनु भद्रगणः ॥ २० ॥ दृढमांसलाङ्गकमभङ्गबलोध्दुरगर्वधूर्वहमपूर्वगतिम् । निजमुष्टिताडनकथैकसमाकुलमाटदाशु मठविप्रकुलम् ॥ २१ ॥ हरिकार्यधुर्यममुमुष्णकरः किरणैः स्म न स्पृशति कारुणिकः । यदभूत्तदैव जनताचरणोत्थितभूपरागपटलान्तरितः ॥ २२ ॥ अवकर्ण्य वर्त्मनि तमेत्य रयात्प्रतिपट्टणं प्रमदभीविवशः । निरमायि मायिसचिवैरपि तत्परितोषणं स्वविभवानुगुणम् ॥ २३ ॥ शनकैकस्ततः कतिपयैर्दिवसैरधिगत्य वेङ्कणगिरीन्द्रपतिम् । नतिमारचय्य यतिराट् पुरतो बहुधा नुनाव विबुधालिनुतम् ॥ २४ ॥ कमलामनःकमलभानुमते विमलाशयान्तरधिवास्तुमते । शमलापहारिशतरूपवते हिमलावितत्किरणनेत्रवते ॥ २५ ॥ दरिणे स्वभक्त-

---

इति लक्षणात् ॥ २० ॥ दृढेति । दृढानि कठिणानि मांसलानि बृहन्ति अङ्गकानि यस्य तत्तथोक्तम् । अभङ्गबलेन अप्रतिहतशक्त्या हेतुना उद्धुरगर्वधूर्वहं उत्कृष्टदर्पधुरंधरं अत एव अपूर्वं गतिं आश्चर्यकरशीघ्रगमनं निजमुष्टेः ताडनस्य प्राक्विमतेषु कृतस्वमुष्टिप्रहारस्य कथासु प्रसङ्गेषु एकं मुख्यं यथा तथा आकुलं तदेकासक्तमित्यर्थः । मठविप्राणां कुलं समूहः आशु शीघ्रं आटत् अटति स्म । 'अट् पट् गतौ' इत्यस्माद्धातोर्लङ् ॥ २१ ॥ हरीति । कारुणिको दयालुः 'स्याद्दयालुः कारुणिकः' इत्यमरः । उष्णकरः सूर्यः हरिकार्यधुर्यं विमतखण्डनलक्षणश्रीविष्णुकार्यधुरंधरं अमुं विद्याधीशं किरणैः न स्पृशति स्म । तत्तापशङ्कयेति भावः । कुतः यद्यस्मात् तदैव तदानीमेव जनताया जनसमूहस्य चरणोत्थितेन भुवः भूमेः परागपटलेन रजःपुञ्जेन अन्तरितः व्यवहितः अभूत् । अत्र जनपादघट्टनभवरजःपुञ्जतिरोहितस्य सूर्यस्य विद्याधीशतापपरिजिहीर्षुत्वेनोत्प्रेक्षणात् उत्प्रेक्षालंकारः । तेन जनानां संमर्दातिशयो व्यज्यते ॥ २२ ॥ अवकर्ण्येति । प्रतिपट्टणं पट्टणेषु यथार्थेऽव्ययीभावः । वर्त्मनि मार्गे तं विद्याधीशं अवकर्ण्य आगच्छन्तं श्रुत्वा रयात् वेगादेत्य प्रत्युद्गम्य प्रमदभीभ्यां सन्तोषभयाभ्यां विवशैः परवशैः तादृङ्महानुभावलाभेन प्रमदः तत्तेजोऽतिशयेन भयमिति ज्ञेयम् । मायिसचिवैः मायावादिमन्त्रिभिरपि किमुत वैष्णवैरिति भावः । स्वविभवानुगुणं निजसंपदनुरूपं अस्य गुरोः परितोषणं निरमायि निर्मितम् । भावे लुङ् ॥ २३ ॥ शनकैरिति । ततः अनन्तरं यतिराट् कतिपयैः दिवसैः शनकैः वेङ्कटगिरीन्द्रपतिं अधिगत्य प्राप्य पुरतः तस्य पुरस्तात् नतिं प्रणामं आरचय्य कृत्वा विबुधालिभिः सुरगणैः नुतं तमितिशेषः । तं वेङ्कटेशं बहुधा बहुप्रकारेण नुनाव स्तवाति स्म । 'नु स्तुतौ' इति धातोः लिट् ॥ २४ ॥ तस्य स्तुतिप्रकारमेव चतुर्भिराह कमलेति । कमलायाः मनःकमलस्य भानुमान् सूर्यः तदुल्लासक इत्यर्थः । तस्मै । विमलानां शुद्धानां सज्जनानामित्यर्थः । आशयान्तः हृदयमध्यमेव अधिवास्तु अधिकगृहं अस्यास्तीति अधिवास्तुमान् 'तदस्यास्तीति' मतुप् । तस्मै । शमलापहारिणी शतानि रूपाणि मत्स्याद्यवताराणि अस्य सन्तीति शतरूपवान् 'अवतारा ह्यसंख्येया हरेः सत्त्वनिधेर्द्विजाः ।' इति भागवतात् । 'मादुपधायाश्च' इत्यादिना मस्य वत्वम् । तस्मै । हिमं लुनातीति हिमलावी सूर्यः तत्किरणः हिमकिरणः चन्द्रश्च हिमलावितत्किरणौ नेत्रे यस्य सः इति नेत्रवान् तस्मै । तुभ्यं नमः इत्युत्तरश्लोकेनान्वयः ॥२५॥ दरिण इति । दरः शङ्खः अस्यास्तीति दरी तस्मै । स्वभक्तजनता-

जनतादरिणे दयिने चराचरतलोदयिने । हरये दनूद्भवघटाहरये भवते नमः सकललाभवते ॥ २६ ॥ अतिदुःसहापदवनीध्रपविर्दुरितौघदुर्भरतमिस्ररविः । भवदङ्घ्रिसेवनमुपान्तनिधिर्विदुषां श्रुतीरितसमस्तविधिः ॥ २७ ॥ नियतिस्थितिप्रलयसर्गसमावृतिबोधमुक्तिनहनाद्यखिलम् । भवतो यतो भवति देहभृतां जगदेकराट् त्वमत एव विभो ॥ २८ ॥ विविधैस्स्तवैरिति चिराय भवार्णवकर्णधारमभिवन्द्य हरिम् । अपि तत्प्रसादमधिगत्य ततो निरगात्स रङ्गनगराभिमुखः ॥२९॥ पथिकालहस्तिनगराधिपतिं प्रणमय्य काञ्च्यभिधयोल्लसिताम् । नगरीमवाप नगरीतिकनद्घनगोपुरामनुगतः सुजनैः ॥ ३० ॥ करवेगवत्युदकक्लृप्तसमाप्लवनाद्यशेषनियमो यतिराट् । वरदं ददर्श करदम्भसरोरुहसंभृतारिदरमादरतः ॥ ३१ ॥ सरसीजभूरचितहोमवपाप्रसरत्परीमलधुरीणतनुम् । मुखचन्द्रि-

---

यामाद्रियते इति स्वभक्तजनतादरी तस्मै । चराचरतलेषु स्थावरजङ्गमप्रदेशेषु उदयति सन्निधत्ते इति चराचरतलोदयी तस्मै । दनूद्भवा दानवा ते एव घटाः करिसमूहाः तस्या हरये सिंहाय । सकललाभोऽस्यास्तीति सकललाभवान् तस्मै पूर्णकामायेत्यर्थः । हरये हरिनाम्ने भवते तुभ्यं नमः 'नमः स्वस्ति' इत्यादिना चतुर्थी । यमकप्रभेदोऽयं शब्दालङ्कारः ॥ २६ ॥ अतीति । हे हरे भवदङ्घ्रिसेवनं त्वच्चरणपरिचर्या विदुषां ज्ञानिनां अतिदुःसहा आपदेव अवनीध्रः पर्वतः तस्य पविः वज्रं तथा दुरितौघ एव दुर्भरतामिस्रा गाढान्धकारः तस्य रविः सूर्यः तथा उपान्तनिधिः समीपस्थनिक्षेपः श्रुतीरितसमस्तविधिः वेदोक्तसमस्तसत्कर्मानुष्ठानं भवतीति शेषः । अत्र हरिचरणसेवनस्य वज्रत्वेनाभेदाध्यवसायात् आपद्दुरितयोः गिरितामिस्रत्वनिरूपणाच्च ताद्रूप्यभेदरूपकाणां संकरः ॥ २७ ॥ नियतीति । हे विभो देहभृतां शरीरिणां नियतिर्नियमनं स्थितिप्रलयसर्गाः स्थितिसंहारसृष्टयः समावृतिरज्ञानं बोधो ज्ञानं मुक्तिर्मोक्षः नहनं बन्धनं च इत्यखिलं समस्तं आदिशब्देन वृध्द्यादीनां संग्रहः । यतः कारणात् भवतः त्वत्तः सकाशात् भवति अतः कारणादेव त्वं जगतामेकराट् भवसीति शेषः । 'उत्पत्तिस्थितिसंहारा नियतिर्ज्ञानमावृत्तिः । बन्धमोक्षौ च पुरुषाद्यस्मात्स हरिरेकराट् ॥' इति प्रमाणात् ॥ २८ ॥ विविधैरिति । स विद्याधीशः इत्येवं विविधैः बहुविधैः स्तवैः भवार्णवकर्णधारं संसाराब्धितारकं हरिं चिराय सुचिरं अभिवन्द्य स्तुत्वा तस्य हरेः प्रसादं अनुग्रहं अधिगत्य ततः वेंकटाचलात् रङ्गनगराभिमुखः श्रीरङ्गदिगभिमुखः सन् निरगात् निर्गतः ॥ २९ ॥ पथीति । सुजनैरनुगतः स विद्याधीशः पथि कालहस्तिनगराधिपतिं कालहस्तीश्वरं प्रणमय्य प्रणम्य 'ल्यपि लघुपूर्वात्' इति णेरयादेशः । नगरीत्या पर्वतरीत्या कनन्ति उल्लसन्ति घनगोपुराणि यस्याः तां तथोक्ता काञ्च्यभिधया काञ्चीतिनाम्ना उल्लसितां नगरीं काञ्चीपुरीमवाप ॥ ३० ॥ वरेति । यतिराट् वरा श्रेष्ठा या वेगवती नाम नदी काञ्चीपुर्या दक्षिणवाहिनी तदुक्तं स्कान्दे 'वेगवत्युत्तरे तीरे पुण्यकोट्यां हरिः स्वयम् । वरदः सर्वभूतानां अद्यापि परिदृश्यते ॥' इति । तस्या उदके कॢप्तसमाप्लवनाद्यशेषनियमः कृतस्नानाद्यखिलकर्मा सन् कराविति दम्भः कपटं ययोस्ताभ्यां सरोरुहाभ्यां संभृतौ धृतौ अरिदरौ चक्रशंखौ यस्य तं तथोक्तं वरदं वरदाख्यं हरिं आदरतः आदरात् ददर्श ॥ ३१ ॥ द्वाभ्यां तमेव विशिनष्टि सरसिजेति । सरसिजभूः ब्रह्मा

राङ्कुरितमन्दहसद्युतिसुन्दराधरममन्दकृपम् ॥ ३२ ॥ वरदानमुद्रणकराम्बुजतः शुभनाम-धेयविभवाज्जगति । प्रथमं तमात्मचरणाम्बुजुषामभितेष्टदानकलनाबिरुदम् ॥ ३३ ॥ नतिपूर्वमेष यतिनां तिलकः खलकञ्जभञ्जनतुषारकरः । हरिमाकलय्य तमथाश्रितवानरुणाचलेश्वरमुमारमणम् ॥ ३४ ॥ स ततो निरीय विततोरुयशाः क्षततोयपाघततितोच्चतराम् । सरितं सरोजभरितालिलसद्धरितं ददर्श धुरि तारखाम् ॥ ३५ ॥ तटयुग्मलक्षिततमालवनीशरदभ्रशुभ्रसलिला किल या । अवनेरमर्त्यपतिरत्नसरोऽन्तरतारहारसुषुमामयते ॥३६॥

---

तेन रचितो यो होमः तस्मिन् या वपा हूयमानपश्वङ्गभेदः 'मेदस्तु वपा वसा' इत्यमरः। तस्याः प्रसरत् व्याप्नुवानः यः परीमलः सौरभं 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घः । तस्य धुरीणा धुरंधरा तनुर्यस्य तं तथोक्तम्। मुखमेव चन्द्रिरः चन्द्रः 'चन्द्रः स्याच्चन्दिरोऽपि च' इति शब्द-प्रकाशे । तस्मिन्नङ्कुरितमन्दहासद्युत्या समुत्पन्नमन्दहासकान्त्या सुन्दराधरं अमन्दकृपं अतिमात्र-दयम् । पुरा किल ब्रह्मा काञ्चीपुर्यां हरिमुद्दिश्य होमं चकार । तद्धोमकुण्डात् स एव वरदराजरूपेण निरगात्। इति पौराणिकी कथात्रानुसन्धेया । तदुक्तं नीलाचलमाहात्म्ये 'होमकुण्डात्पद्मयोनेः प्रादु-रासीद्रमापतिः । वरदः सर्वभक्तानां नाम्नापि वरदः स्वयम् ॥ वपापरिमलोल्लासवासिताधरपल्लवम् । मुखं वरदराजस्य मन्दस्मितमुपास्महे ॥३२॥ 'वरदः सर्वभक्तानाम्' इत्येतदेव व्यनक्ति वरेति । पुनः किंविधम् वराणां इष्टार्थानां दानमुद्रणा दानमुद्रा यस्येति वरदानमुद्रणं तच्चतत्कराम्बुजं च तस्मात् पञ्चम्यास्तसिल् । कराम्बुजे अङ्गुष्ठतर्जनीभ्यां दानमुद्राकलनेनेत्यर्थः । तथा शुभस्य नामधेयस्य वरद इतिनाम्नः विभवात् माहात्म्यात् च आत्मचरणाब्जजुषां स्वकीयपादाब्जभाजां भक्तानां अभितेष्टस्य दानकलनायाः दानक्रियायाः बिरुदं असाधारणचिह्नं जगति प्रथयन्तं प्रख्यापयन्तम् । अत्र दान-मुद्रावरदनामलक्षणाभ्यां भक्तेष्टदानसामर्थ्यसूचकत्वेनोत्प्रेक्षणादुत्प्रेक्षा । सा च व्यञ्जकप्रयोगाद्गम्या ॥३३॥ नतीति । खलाः विमता त एव कञ्जानि कमलानि तेषां भञ्जने तुषाकरः चन्द्रः यतीनां तिलकः यतिश्रेष्ठ नतिपूर्वं प्रणतिपुरःसरं तं हरिं वरदराजं आकलय्य स्तुत्वा अथ अनन्तरं अरुणाचलेश्वरं उमारमणं महादेवं श्रितवान् आश्रितवानभूदिति शेषः। अरुणगिरिनामकपुरीं गत्वा तत्रत्यहरं ननामे-त्यर्थः ॥३४॥ स इति । विततोरुयशाः विस्तृतगुरुकीर्तिः स विद्याधीशः ततः अरुणाचलान्निरीय निर्गत्य तोयं स्वोदकं पिबन्तीति तोयपाः स्वोदकपायिनो जनाः क्षता विद्धा तोयपानां अघ-ततिः पापपङ्क्तिः यया सा तस्या भावस्तत्ता तया हेतुना उच्चतरां अतिश्रेष्ठामित्यर्थः । सरोजैः भरितैः धृतैः अलिभिः लसन्त्यः हरितः वीचयः यस्या सा तथोक्ता 'हरिद्दिगन्तरङ्गे स्त्री हरिद्वर्णे तु वाच्यवत् ।' इति प्रतापः । अत एव तारखां अत्युच्चस्वरां सरितं नदीं कावेरी इत्यर्थः । धुरि अग्रे ददर्श ॥ ३५ ॥ तामेव विभिर्विशिनष्टि तटेति । तटयुग्मे तीरद्वये लक्षिता तमालवनी तापिच्छवनं यस्याः सा तथोक्ता । 'कालस्कन्धस्तमालः स्यात्तापिच्छः ।' इत्यमरः। शरदभ्रवत् शरत्कालमेघवत् शुभ्रसलिला या कावेरी अवनेः भूमेः कस्याश्चिन्नायिकायाश्चेति गम्यते । सापेक्षत्वेऽपि गमकत्वात्समासः । अमर्त्यपतिरत्नसरयोः इन्द्रनीलमणिमालिकयोरन्तरः मध्यस्थः यस्तारहारः 'तारः स्याच्छुद्धमौक्तिके' इति विश्वः । तस्य सुषमामिव सुषमां शोभां अयते भजति किल । अत्र उभयतीरतमालवनावृतशुभ्रोदकवर्तिन्याः कावेर्याः भूनायिकायाः इन्द्र-

लहरीकराकलिततामरसा करिभिः प्रक्लृप्तसलिलस्नपना । विदधाति या विबुधपालिनुता कमलेव रङ्गकमितुः प्रमदम् ॥ ३७ ॥ मयि सन्निकर्षजुषि याति मुधा सरिदन्तराण्यखिलपापनुदि । जनतेति या हसति तीरलसन्नवफेनपुञ्जनिभतः सततम् ॥ ३८ ॥ अवगाह्य तामथ कवेरसुतां यतिसिन्धुरः प्रमदबन्धुरहृत् । विधिमौषसं विधिवदाकालयन्नुनुदे स खेदमयमाटनजम् ॥३९॥ घननारिकेलपनसक्रमुकामलकाम्रभासिनि तदीयतटे । पृतनां निवेश्य सहिताप्तजनो वररङ्गनामपुरमाप गुरुः ॥ ४० ॥ समतीत्य सप्तवरणीं महतीं महतीविनोदरसिकाभिनुतम् । भुजगेन्द्रतल्पमजमानतवान्नतवाञ्छिताकलनकल्पतरुम् ॥ ४१ ॥

---

नीलहारद्वयमध्यगतमुक्ताहारत्वेनोत्प्रेक्षणादुत्प्रेक्षा । सा च अन्यधर्मस्य अन्यत्रायोगात् सुषमामिव सुषमां इति निदर्शनाक्षेपात् निदर्शनया संकीर्यते ॥ ३६ ॥ लहरीति । लहर्यस्तरङ्गा एव कराः पाणयः तैः आकलिततामरसा धृतपद्मा । करिभिः वनगजैः प्रक्लृप्तसलिलस्नपना कृतस्वोदकस्नाना । विबुधालिभिः विद्वत्ततिभिः अभिनुता या कावेरी कमलेव लक्ष्मीरिव रङ्गकमितुः रङ्गनेतुः 'कमिता कामुकः पुमान्' इत्यमरः । प्रमदं हर्षं विदधाति । लक्ष्मीपक्षे तस्याः पद्मकरत्वं पार्श्वद्वये गजशुण्डाधृतकुम्भोदकाभिषिक्तत्वं विबुधपाल्या देवसमूहेन नुतत्वं योऽयम् । 'लक्ष्मीर्दिव्यैर्गजेन्द्रैर्मणिगणखचितैः स्नापिता हेमकुम्भैः । नित्यं सा पद्महस्ता मम वसतु गृहे सर्वमाङ्गल्ययुक्ता ॥' इत्यादिप्रमाणात् । अत्र रूपकश्लेषानुप्राणितोऽयमुपमालंकारः ॥ ३७ ॥ मयीति । अखिलानि पापानि नुदति परिहरति इति अखिलपापनुत् । 'सत्सु द्विष' इत्यादिना स्त्रियां क्विप् । तस्यां मयि आत्मानि सन्निकर्षजुषि समीपवर्तिन्यां सत्यां जनता जनसमूहः वृथा 'तृषितो जान्हवीतीरे कूपं खनति दुर्मतिः ।' इति न्यायेनेति भावः । अन्याः सरितः सरिदन्तराणि सुप्सुपेति समासः । तानि यातीत्येवं या कावेरी तस्याः तीरे लसता फेनपुञ्जस्य निभतः 'निभं छलं कैतवं च तथा गजनिमीलिका । इति वैजयन्ती । सततं हसति जनतामिति अर्थात् गम्यते । अपह्नवोत्थापितेयं गम्योत्प्रेक्षा ॥ ३८ ॥ अवगाह्येति । अथ दर्शनानन्तरं यतिसिन्धुरः यतिश्रेष्ठः स विद्याधीशः प्रमदबन्धुरहृत् हर्षपूर्णहृदयः सन् तां कवेरसुतां कावेरीं अवगाह्य तस्यां स्नात्वेत्यर्थः । उषःसम्बन्धिनं औषसं विधिं प्रातःकृत्यं विधिवच्छास्त्रोक्तरीत्या आकलयन् कुर्वन् सन् अयने मार्गे अटनात्संचारात् जायते इत्यटनजः तं खेदं श्रमं नुनुदे पर्यहार्षीत् ॥ ३९ ॥ घनेति । घनैः महत्तरैः नारिकेलपनसक्रमुकाम्रैः प्रसिद्धवृक्षैः भासते इति भासि तस्मिन् । तदीयतटे कावेरीतीरे पृतनां ब्राह्मणसेनां 'पृतनानीकिनी चमूः' इत्यमरः । निवेश्य निक्षिप्य गुरुः विद्याधीशः सहिताप्तजनः कैश्चिदाप्तजनैः सहितः सन् वरं श्रेष्ठं रङ्गनामकपुरं रङ्गनगरमवाप ॥ ४० ॥ समतीत्येति । स इति शेषः । स विद्याधीशः महतीं उन्नतां सप्तानां वरणानां समाहारः सप्तवरणीं 'अकारान्तोत्तरपदाद्विगुः स्त्रियामिष्टः' इति स्त्रीत्वात् 'द्विगोः' इति ङीप् । सप्तप्राकारा । 'प्राकारो वरणः सालः' इत्यमरः । तां अतीत्य महती नारदवीणा 'महती नारदस्य स्यात्तुम्बुरोस्तु कलावती ।' इति वचनात् । तस्याः विनोदे वादने रसिकं रसज्ञं नारदमित्यर्थः । तेन अभिनुतं नतानां स्वपादनम्राणां वाञ्छितार्थकलने दाने कल्पतरुं भुजगेन्द्रतल्पं शेषशायिनं अजं रङ्गेशनामकं हरिं आनतवान् नमस्कृतवान् । 'कवेरनन्दिनीमध्ये सप्तप्राकारवेष्टिते । रङ्गे तुङ्गाहिशयनमाधिशेते

धवले फणिप्रवरभोगतले शयितं शतक्रतुमणीमहसम् । हिमिकोर्वराधरतले विहरन्नववारिवाहरुचिमादधतम् ॥ ४२ ॥ करुणामिवास्य भुजमध्यगतामधिगत्य स स्रजमिहाब्जमयीम् । स्वयमर्पयत्पदसरोजयुगे नुतिरूपहेमसुमदाम हरेः ॥ ४३ ॥ पुनरेत्य सह्ययतनयोपवनीमवनीमनःकमलनाकमणिः । विमतागमान्धतमसप्रकरं निजगोगणेन निखिलं बिभिदे ॥ ४४ ॥ तमुपागतं समुपकर्ण्य मुदा त्रिशिरःपुरात्तिरमलक्षितिपः । अभिगम्य तत्र चतुरङ्गचमूसहितोऽनमत्सकलराजनुतम् ॥ ४५ ॥ घनसारचन्दनलवङ्गफलोत्करकुङ्कुमाम्बरसुवर्णभरान् । उपदीकृतान्नृपतिनायमुरीकृतवानसङ्गहृदयः करुणात् ॥ ४६ ॥ विबुधाः परे नृपवराश्रयिणस्तदुदारवाक्पटिमधूतमदाः । अपतंस्तदीयचरणे धरिणीपरिणीश्च

---

रमापतिः ॥ ' इतिवचनात्सप्तावरणत्वादिकमनुसन्धेयम् ॥ ४१ ॥ धवल इति । पुनः किंविधं धवले फणिप्रवरस्य शेषस्य भोगतले शरीरप्रदेशे शयितं 'भोगः सुखेस्त्र्यादिभृतावहेश्च फणकाययोः ।' इत्यमरः । स्वयं शतक्रतुमणी इन्द्रनीलरत्नं 'मणिर्द्वयोः' इति स्त्रीत्वम् । 'किं ततान विधिरिन्दुमणीभिः ।' 'सौत्रामणीनां प्रभया मणीनाम् । इत्यादिमहाकविप्रयोगाः । तस्या मह इव महः तेजो यस्य तं तथोक्तम् । अत एव हिमिकोर्वराधरस्य हिमाद्रेस्तले तटे विहरतः नववारिवाहस्य नवमेघस्य रुचिं आदधतं स्वीकुर्वाणम् । उपमागर्भितोऽयं निदर्शनालंकारः ॥ ४२ ॥ करुणामिति । सः विद्याधीशः इह रङ्गे अस्य हरेः भुजमध्यगतां अब्जमयीं स्रजं मालिकां करुणामिव हरेः कृपामिव अधिगत्य पूजकेन दत्तां प्राप्येत्यर्थः । हरेः पादसरोजयुगे नुतिरूपहेमसुमदाम स्तोत्रलक्षणकनककुसुममालिकां अर्पितवानिति । विनिमयकथनादन्योऽन्यालंकारः । 'परिवृत्तिर्द्वयोर्यत्र तदन्योऽन्यं प्रचक्षते ।' इति लक्षणात् ॥ ४३ ॥ पुनरिति । अवन्याः भूमेः मन एव कमलं तस्य नाकमणिः सूर्यः । अवनीस्थसकलजनहृदयोल्लासक इत्यर्थः । 'आकाशे त्रिदिवे नाकम्' इत्यमरः । स विद्याधीशः सह्यतनया कावेरी तस्या उपवनीं पुनरेत्य निजगोगणेन स्ववाक्प्रपञ्चेन सूर्यपक्षे स्वकिरणसमूहेनेति गम्यते । विमतानां आगमः अद्वैतशास्त्रं स एव अन्धतमसप्रकरः गाढान्धकारसमूहः तम् । 'ध्वान्ते गाढेऽन्धतमसम्' इत्यमरः । बिभिदे बिभेद । तत्रत्यैः विमतैः सह वादं कृत्वा तदीयसिद्धान्तं निराकरोदित्यर्थः । श्लेषसंकीर्णमभेदरूपकम् ॥ ४४ ॥ तमिति । तिरमलक्षितिपः तिरमल इतिनामकः कश्चिन्मधुरादेशाधिपतिः उपगतं समीपागतं समुपकर्ण्य श्रुत्वा चतुरङ्गचमूसहितः सन् मुदा त्रिशिरसः पुरात् स्वाधिष्ठानात् अभिगम्य तत्र सकलराजनतं तं विद्याधीशं अनमत् ॥ ४५ ॥ घनेति । नृपतिना तिरमलरायेण उपदीकृतान् घनसारः कर्पूरः पटीरः लवङ्गं प्रसिद्धं फलोत्करः चूतरम्भादिफलराशिः कुङ्कुमं प्रसिद्धं अम्बराणि वस्त्राणि सुवर्णभारान् दीनारसमूहान् असङ्गहृदयः विषयेषु निस्पृहचित्तः अयं विद्याधीशः करुणात् दयया उरीकृतवान् स्वीकृतवान् । 'करुणस्तु रसे वृक्षे' इति करुणरसविवक्षया पुंलिङ्गप्रयोगः ॥ ४६ ॥ विबुधा इति । नृपवराश्रयिणः तिरमलराजोपजीविनः परे विमताः विबुधाः पण्डिताः राज्ञा साकमागता इत्याशयः । तस्य विद्याधीशस्य उदारवाक्पटिम्ना उपन्यासपाटवेन धूतमदाः निरस्तगर्वाः सन्तः तदीयचरणे गुरुपादे अपतन् तं प्रणेमुरित्यर्थः । धरिणीपरिणीः राजा च विस्मयरसाम्बुनिधौ अपतदिति वचनविपरिणामेन योज्यम् । स्वाश्रितविबुधेषु तस्य

विस्मयरसाम्बुनिधौ ॥ ४७ ॥ बहुमानितो यतिशिखामणिना सकृपेण भक्तिभरितो नृपतिः । सचिवान्नियुज्य स तदुक्तिकृतौ प्रमनाः स्वयं निजमगान्नगरम् ॥ ४८ ॥ स्वगुरोः शुभंयुनि दिनेऽथ गुरुः स तदन्तरासिकरमेशमुदे । धरणीसुपर्वविसरान्सुघृतप्लुतमन्नमारभत भोजयितुम् ॥ ४९ ॥ हरिदष्टकादभिययुर्वसुधाविबुधाः सुधामधुरसूपयुतम् । त्वरयान्नमत्तुमनसश्चपला नृपलालिताङ्घ्रिनियमीन्द्रपदम् ॥ ५० ॥ तदात्व एव द्विजधोरणीनां बलाभिमानाद्यखिलस्वचोरः । क्षुण्णामकः कोऽपि खलः पिचण्डपुरीसहस्रेषु समेधते स्म ॥ ५१ ॥ निद्रालस्यस्तेयहिंसाभ्यसूयाचिन्तादैन्यद्वेषभूम्नां निदानम् । यत्संसर्गं प्राहुरुर्व्यां समस्तप्राणिस्तोमः केवलं यद्विधेयः ॥ ५२ ॥ सचिवीकृत्य यः पञ्च षट्सु कामादिकेष्वपि । एकमेव निराचक्रे मदं खेदकरोऽङ्गिनाम् ॥५३॥

---

निस्तुलपाण्डित्यबुद्धिमत्त्वाद्गुरौ ततोऽप्यधिकपाण्डित्यदर्शनेन विस्मितोऽभूदित्यर्थः ॥ ४७ ॥ बहिवति । भक्तिभरितः स नृपतिः सकृपेण दयालुना गुरुशिखामणिना बहुमानितः बहुमाने दयैव निमित्तमिति ज्ञेयम् । प्रमना हृष्टमानसः सन् तस्य गुरोः उक्तिकृतौ आज्ञाकरणे सचिवान्नियुज्य आज्ञाप्य निजनगरमगात् ॥ ४८ ॥ स्वेति । अथ नृपतिनिर्गमान्तरं स गुरुः स्वगुरोर्वेदव्यासस्य शुभंयुनि प्रशस्ते दिने चैत्रशुद्धद्वितीयायामित्यर्थः । 'रौद्रे चैत्रे सितेऽश्विभ्यां द्वितीयायां दिवं ययौ । वेदव्यासः' इति वचनात् । तस्य स्वगुरोरन्तरासिकः अन्तर्यामी यो रमेशः तस्य मुदे प्रीत्यै सुघृतकृतमन्नं धरणीसुपर्वविसरान् भूदेवसमुहान् भोजयितुमारभत । आराधनां कर्तुमिच्छति स्मेत्यर्थः ॥ ४९ ॥ हरिदिति । चपलाः चञ्चलाः स्वयं द्विजातित्वादिति भावः । वसुधाविबुधाः विप्राः सुधावन्मधुरसूपयुतं अन्नं अत्तुं मनो येषां ते अत्तुमनसः 'तुंकाममनसोरपि' इति मकारलोपः । हरितां अष्टकात् अष्टदिग्भ्यः सकाशात् नृपैः लालितौ वन्दनादिभिः संभावितौ अङ्घ्री यस्य तस्य विद्याधीशस्य पदं त्वरया अभिययुः ॥ ५० ॥ अथ सर्गान्तं सूपराजस्य क्षुद्रिपुपराभवकथाकल्पनव्याजेन गुरुकृतसमाराधनातिशयं विवक्षुः कविस्तावत्क्षुद्रिपोः स्थानस्वरूपादिकं त्रिभिः श्लोकैः कथयति तदात्व इति । तदात्वे तत्काले एव 'तत्कालस्तु तदात्वं स्यात्' इत्यमरः । द्विजधोरणीनां विप्रपङ्क्तीनां बलाभिमानाद्यखिलस्वचोरः समस्तबलाभिमानाद्यपहारकः इत्यर्थः । 'क्षुधातुराणां न बलं न तेजः' इति न्यायात् । क्षुत् बुभुक्षा । क्षुदिति नाम यस्य सः क्षुण्णामकः कोऽपि असाधारणः खलः दुर्जनः । पिचण्डा द्विजानां उदराणि 'पिचण्डकुक्षी जठरोदरं तुन्दम्' इत्यमरः । ते एव पुर्यः तासां सहस्रेषु समेधते स्म प्रावर्धत । ब्राह्मणा क्षुधिता बभूवुः इत्याशयः । वृत्तमुपजातिः ॥५१॥ निद्रेति । उर्व्यां भूमौ यस्य क्षुन्नामकखलस्य संसर्गं संपर्कं निद्रा आलस्यं अलसता स्तेयं चौर्यं हिंसा प्राणिद्रोहः अभ्यसूया परोत्कर्षासहिष्णुत्वं चिन्ता विचारः दैन्यं कार्पण्यं द्वेषो विरोधश्चेत्येतेषां भूमानः अतिशयाः तेषां निदानं आदिकारणं प्राहुः जना इति शेषः । किं च समस्तप्राणिस्तोमः जरायुजाण्डजाद्यखिल प्राणिसमूहः केवलं परं यस्य खलस्य विधेयः वश्यः भवतीति शेषः । शालिनीवृत्तम् ॥ ५२ ॥ सचिवीकृत्येति । अङ्गिनां शरीरिणां खेदकरः यः खलः षट्सु कामादिकेषु अरिषड्वर्गेषु सत्स्वपि । पञ्च कामादिपञ्चकं सचिवीकृत्य स्वस्य सचिवान् सहायान् विधाय एकं मदं गर्वमेव

**दुरात्मनस्तस्य विजृम्भणं तद्विलोक्य दूनानपि भूमिदेवान् । कृपालुराज्ञापयदस्य शान्त्यै सूपाधिराजं सुखतीर्थशिष्यः ॥ ५४ ॥ तच्छासनं शिरसि सादरमादधद्द्रागुच्चाटनं पटुतरस्य रिपोश्चिकीर्षुः । युद्धाय बद्धहृदयः खलु सन्ननाह प्रौढाग्रणीः सुदृढमाढकसूपराजः ॥ ५५ ॥ तस्य क्रीडोचितं प्रादुरासीदष्टसहस्रकम् । पुराणां कदलीपत्रनाम्नामम्लानवैभवम् ॥ ५६ ॥ अवगाढकवेरनन्दिनीपयसः शुद्धहृदो द्विजातयः । अथ चक्रुरहोऽतिसंमदात्सलिलाभ्युक्षणपूर्वकैरलम् ॥ ५७ ॥ भक्तैरच्छतरैः महोत्सवदशाकोद्यद्भटैः सैन्धवप्रोन्मीलद्रुचिभिः शताङ्गलसितैः कुम्भीतभव्यागमैः । प्राज्यश्रीर्वरर्णिनीनुतगुणो बाल्हीकवाहस्स्वयं भास्वन्म-**

---

निराचक्रे निरस्तवान् । क्षुधातुराणां कामाद्यसंभवात् मदस्य अनुत्पत्तेश्चेति भावः । अनुष्टुप्छन्दः ॥ ५३ ॥ दुरात्मन इति । दुरात्मनस्तस्य खलस्य तत् तादृशं विजृम्भणं अभिवृद्धिं च अत एव दूनान् संतप्तान् 'संतापितसंतप्तौ धूपितधूपायितश्च दूनश्च ।' इत्यमरः । भूमिदेवानपि विलोक्य कृपालुः सुखतीर्थशिष्यः विद्याधीशः अस्य खलस्य शान्त्यै सूपाधिराजं सूपलक्षणभूपतिं आज्ञापयत् तं शमयेत्याज्ञापयामास । अत्र अन्नाद्यखिलवस्तुषु सत्स्वपि द्विजानां सूपप्रियत्वात्सूपस्यैव प्राधान्येन निर्देशः । पाचकान् परिवेषणायाज्ञापयदिति हृदयम् ॥ ५४ ॥ तदिति । प्रौढेषु भक्ष्यभोज्यादिसमस्तमहितवस्तुषु अग्रणीः श्रेष्ठः आढकसूपराजः आढकग्रहणं माधुर्यातिशयद्योतनार्थम् । तच्छासनं गुर्वाज्ञां सादरं यथा तथा आदधत् दधानः द्राक् पटुतरस्य परदुःखजननसामर्थ्यस्य रिपोः क्षुधः उच्चाटनं चिकीर्षुः सन् योद्धुं बद्धहृदयः आसक्तचित्तः सन् सन्ननाह संनद्धवान् । खलु । खल्विति वाक्यालङ्कारे । 'निषेधवाक्यालङ्कारे जिज्ञासानुनये खलु ।' इत्यमरः ॥५५॥ सूपराजस्य राजधानीं निर्दिशति। तस्येति । तस्य सूपराजस्य क्रीडोचितं विहारार्हं अम्लानवैभवं दैर्घ्यवैशाल्याद्यभङ्गुरसमृद्धिमत् कदलीपत्रनाम्नां पुराणां अष्टसहस्रकं प्रादुरासीत् । अष्टसहस्रकदलीपत्राणि युगपद्विस्तारयामासुरिति हृदयम् ॥ ५६ ॥ अवगाढेति । अथ अनन्तरं द्विजातयो ब्राह्मणाः अवगाढकवेरनन्दिनीपयसः कावेरीसलिले कृतस्नानाः सन्तः अत एव शुद्धहृदः शुद्धान्तःकरणाः अतिसंमदात् अत्यन्तहर्षात् सलिलाभ्युक्षणपूर्वकैः उपचारैः अदः कदलीपत्रपुराष्टसहस्रकं अलंचक्रुः अलंकृतवन्तः । सूपराजस्य सोपद्रवकरक्षुद्रिपुनिवारणोद्यतत्वात्तत्पुरालंकरणं द्विजानां विहितमेवेति भावः । कदलीपत्रेषु भोक्तृभिः सलिलप्रोक्षणादिकं स्वाभाविकमितिज्ञेयम् । चन्द्रिकावृत्तम् ॥५७॥ भक्तैरिति । प्रकृष्टा आज्यश्रीः घृतसमृद्धिर्यस्य सः । अन्यत्र प्राज्या प्रभूता श्रीः संपद्यशः । सूपराट् सूपराजः सैन्धवेन लवणेन प्रोन्मीलन्ती रुचिः स्वादो येषां ते तथा । अन्यत्र सैन्धवैः स्वाधिष्ठिततुरङ्गैः प्रोन्मीलनद्रुचिभिः प्रादुर्भवत्कान्तिभिः । शतेन अङ्गैः जीरकार्द्रकमरीच्याद्यनेकसंभारांशैः लसितैः विभासितैः ।अन्यत्र शताङ्गैः रथैः लसितैः । 'शताङ्गः स्यन्दनो रथः' इत्यमरः । कुम्भ्यः कुम्भाः अविवक्षया स्त्रीत्वम् । ताभ्यः इतः प्राप्तः भव्यागमः प्रशस्तागतिर्येषां तैः । अन्यत्र कुम्भिभिः गजैः इताः भव्यागमाः येषां तैः । गजानारुह्य गच्छद्भिरित्यर्थः । 'कुम्भी करेणुः' इति विश्वः । अच्छतरैः अतिधवलैः भक्तैः अन्नैः उपलक्षितैरिति शेषः । 'भिस्सा स्त्री भक्तमन्धोऽन्नम्' इत्यमरः । अन्यत्र अच्छतरैः निष्कपटाचित्तैः भक्तैः स्वास्मिन्भक्तिमद्भिः । महोत्सवं ददतीति महोत्सवदानि शाकान्येव उद्भटानि अतिशायितवस्तूनि तैः । अन्यत्र महान्तः उत्सवदाः

ण्डकखेटकैस्तदविशद्बहवाकृतिः सूपराट् ॥ ५८ ॥ तस्मिन्क्षणे कुङ्कुमगन्धसारकस्तूरिकाकर्दमसौममाल्यैः । अलंकृतात्मा प्रमदात्पपाठ सूक्तानि भूमीसुरपङ्क्तिरुच्चैः ॥ ५९ ॥ पुरेषु तेषु प्लवमानपोलिकाप्लवैरगाधाः प्रसितोरुसैकताः । घृतापगाः प्रेक्ष्य ननन्द सूपराट् सघारिकोद्यत्भ्रमपायसोर्मिकाः ॥ ६० ॥ तासां तटे स विहरञ्शुचिभक्तवश्यश्चित्रादिकैर्विरचितप्रतिहाररक्षः । शत्रोः खलस्य सविधं प्रजिघाय पञ्च प्राणादिकाहुतिभटान्वरमन्त्रपूर्वम् ॥ ६१ ॥ तेषामनिर्गमादेष कोपाटोपोच्चलद्वपुः । आदिदेश बलं स्वीयं

---

शाकाः शकजातीयाः ते च ते उद्भटा उज्जृम्भमाणा भटाश्च तैः उपलक्षितः सन् । मण्डकानि चक्राकारगोधूमनिर्मितभक्षविशेषाः तान्येव खेटकाः फलकानि 'खेटकौ ग्रामफलकौ' इत्यमरः । तैश्चोपलक्षितः । वरवर्णिनीभिः हरिद्राभिः हरिद्राचूर्णमेलनादित्यर्थः । नुतगुणाः श्लाघितगौरवर्णाः । 'निशाख्या काञ्चनी पीता हरिद्रा वरवर्णिनी ।' इत्यमरः । अन्यत्र वरवर्णिनीभिः उत्तमस्त्रीभिः नुतगुणः संस्तुतनिजशौर्यगुणः । 'उत्तमा वरवर्णिनी' इत्यमरः । स्वयं बाह्लीकं हिङ्गुं वहतीतिबाह्लीकवाहः 'बाह्लीकं हिङ्गु रामठम्' इत्यमरः । अन्यत्र बाह्लीकदेशजः वाहो अश्वो यस्य सः । 'वनायुजाः पारसीका काम्बोजा बाह्लिकाः हयाः ।' इत्यमरः । बहवाकृतिः बहुधा कारवान् कदलीपत्रसहस्रकं प्रत्येकं परिवेष्टितत्वेन बह्वाकृतित्वम् । अन्यत्र कामरूपीत्यर्थः । तत्र पुराणां अष्टसहस्रकं अविशत् प्रविवेश । शाकान्नघृतसूपाः परिवेषिता इति फलितोऽर्थः । अत्र शब्दार्थश्लेषानुप्राणितोऽयं रूपकालंकारः ॥५८॥ **तस्मिन्निति** । तस्मिन्क्षणे भूमिसुरपङ्क्तिः कुङ्कुमं घुसृणं गन्धसारं चन्दनं कस्तूरीकर्दमः सौममाल्यैः मालिकाश्च तैरलंकृतात्मा सन् प्रमदादुच्चैः सूक्तानि अन्नसूक्तानि उच्चैः पपाठ । यथा लोके राज्ञः पुरप्रवेशसमये तत्संभाविता ब्राह्मणा हि तस्य स्वस्तये सूक्तानि पठन्ति तद्वदिति ध्वनिः ॥ ५९ ॥ **पुरेष्विति** । तेषु पुरेषु कदलीदललक्षणेषु प्लवमानाः पोलिका भक्षविशेषा ता एव प्लवा उडुपानि 'उडुपन्तु प्लवः कोलः' इत्यमरः । तैः अगाधाः ताः । अगाधजलेष्वेव प्लवानि प्लवन्ते इति प्रसिद्धम् । प्रकृष्टसिताः प्रकृष्टशर्कराः ता एव सैकतानि यासु ताः प्रसितोरुसैकताः । घारिकाः भक्षविशेषाः एव उद्यन्तो भ्रमाः आवर्ताः । 'स्यादावर्तोऽम्भसां भ्रमः । इत्यमरः ।' पायसानि परमान्नान्येव ऊर्मिकास्तरङ्गाः तैः ताभिश्च सह वर्तन्त इति सघारिकोद्यद्भ्रमपायसोर्मिकाः । ताः घृतापगाः घृतलक्षणनदीः प्रेक्ष्य सूपराट् ननन्द । सूपस्य घृतसाधनत्वादिति भावः । यथा लोके राजानो हि नद्यादिजलदुर्गवेष्टितत्वेन नगरस्य दुःसाध्यत्वं विमृश्य नन्दन्ति तद्वदिति ध्वनिः ॥ ६० ॥ **तासामिति** । शुचेः शुभ्रस्य भक्तस्य अन्नस्य वश्यः वशवर्ती । अन्यत्र शुचीनां अन्तःशुद्धानां अमात्यादिस्वभक्तानां वश्यः यः स सूपराजः तासां घृतापगानां तटे विहरन् चित्रादिकैः चित्रादिबलिभिः । चित्रनामकादिभटैरिति च गम्यते । विरचितप्रतिहाररक्षः कृतद्वारगुप्तिः सन् खलस्य शत्रोः क्षुन्नाम्नः खलस्य सविधं समीपं पञ्चप्राणादिका आहुतय एव भटाः तान् वरमन्त्रपूर्वं 'प्राणाय स्वाहा' इत्यादिमन्त्रपुरःसरं प्रजिघाय प्रहितवान् । राजानो हि युद्धात्पूर्वमेव स्वापराधपरिहाराय सामपूर्वकं दूतान् शत्रुसमीपं प्रेषयन्ति । इति राजनीतिः । यदाह मनुः 'साम्ना दानेन भेदेन समस्तैरथ वा पृथक् । विजेतुं प्रयतेतारीन् न युध्येत कदाचन'' । इति । 'दण्डस्त्वगतिका गतिः' । इति याज्ञ-

नगरस्कन्दने रिपोः ॥ ६२ ॥ सद्यः पिचण्डनगराण्यविशन्प्रसर्पिसर्पिर्मदाम्बुलहरीसुरभीकृताशाः । दन्ताञ्चितोच्चलगुडाः प्रचलत्कराग्रविभ्राजिताः स्फुटमपूपमहाद्विपेन्द्राः ॥ ६३ ॥ सितोल्लसच्चामरचारुमूर्तिकं परिस्फुरत्प्राज्यमहोर्मिकाप्लुतम् । ततः सदावर्तिनि शुद्ध मानसस्यदोत्कटं पायसवाहमण्डलम् ॥ ६४ ॥ केचिच्चिक्षिपुरन्तराशु कदलीकुन्तानन्तान्परे संयावप्रदरानुदारमहसो द्राक् शर्करासन्ततिम् । केचित्पर्पटचक्रचक्रमपरे सन्तप्तसर्पिर्झरीः स्फारीभूतपटोलिकादिनलकान्कूष्माण्डमुख्यान् पृथक् ॥ ६५ ॥ स रसायनवाहिनीवृतः

---

वल्क्यः ॥ ६१ ॥ तेषामिति । एषः सूपराजः तेषां प्राणाहुतिभटानां अनिर्गमात् पिचण्डपुरेभ्यः पुनः गमनराहित्याद्धेतोः यः कोपाटोपः कोपातिशयः तेन उच्चलद्वपुः कम्पमानशरीरः सन् रिपोः नगरास्कन्दने नगरनिरोधाय स्वीयं बलं सैन्यं आदिदेश आज्ञापयामास ॥६२॥ उद्धलप्रवेशप्रकारमेवाह सद्य इति । सर्वत्र प्रसर्पतीति प्रसर्पीणि सर्पींषि घृतान्येव मदाम्बुलहर्यः मदोदकतरङ्गाः ताभिः सुरभीकृताशाः वासितदिक्काः । एतेन घृतानामसाधारणं सौरभ्यं व्यज्यते । दन्तेषु भोक्तृणां दशनेषु अञ्चितानि लग्नानि उच्चलानि जिह्वाग्रनोदनाच्चलितानि गुडानि येषां ते तथोक्ताः । एतेन अपूपानां गुडभूयस्त्वं व्यज्यते । अन्यत्र दन्तयोर्विषाणयोः अञ्चिताः बद्धाः उच्चा उन्नता लगुडा अयोदण्डा एषां ते । परसैन्यप्रहरणार्थं गजदन्तयोः अयोदण्डादिकं बध्नन्तीति प्रसिद्धम् । प्रचलत्सु भुजिक्रियाव्यापारवत्सु कराग्रेषु भोक्तृणां दक्षिणपाण्यग्रेषु विभ्राजिता उल्लसिताः । अन्यत्र प्रचलद्भिः कराग्रैः स्वशुण्डाञ्चलैः विभ्राजिताः । अपूपा एव महाद्विपेन्द्राः सद्यः दानादानक्षण एव स्फुटं प्रकाशं यथा तथा पिचण्डनगराणि अविशन् । प्रथमं चापल्यादपूपानेव जक्षुरित्यर्थः । युयुत्सवो हि राजानो द्विपान् पुरस्कृत्य गच्छन्ति इति प्रसिद्धमेव ॥ ६३ ॥ सितेति । ततो गजप्रवेशानन्तरं सिताः शर्करा एव उल्लसच्चामराणि तैः चारुमूर्तिकं मनोज्ञशरीरं अश्वानां पार्श्वयोः चामरबन्धनं प्रसिद्धम् । परिस्फुरतां प्रकृष्टाज्यानां महोर्मिकाः बृहत्तरङ्गाः ताभिः प्लुतं संपृक्तम् । अन्यत्र स्फुरन्त्यः प्राज्याः प्रभूताः महत्यः ऊर्मिकाः प्लुतानि चेति गतिविशेषाः यस्य तं तथोक्तम् । 'पङ्क्तीकृतानामश्वानां नमनोन्नमनादिभिः । लक्ष्यते या जवात् सा तु गतिरूर्मिरितीर्यते' ॥ 'आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम्' ॥ इत्यादिलक्षणात् । सदा आवर्तते पुनः पुनः आनीयते इति सदावर्ती । अन्यत्र सन्तः प्रशस्ता आवर्ता देवमण्यादयः अस्यास्तीति सदावर्ती 'मूर्ध्नि देवमणिः कण्ठे शुक्तिर्वापि प्रदृश्यते । यस्य सोऽयं तुरङ्गः स्यान्महैश्वर्यप्रदायकः' ॥ इति भोजेनोक्तम् । विरुद्धेन मानसस्य भोक्तृमनसः स्यदेन वेगेन उत्कटं स्वयमतिमात्रं मनोरथाधिकमित्यर्थः । अन्यत्र निरुद्धमानसस्यदेन तिरस्कृतमनोवेगेन उत्कटं गर्वितम् । पायसान्येव वाहाः तुरङ्गाः तेषां मण्डलं समूहश्च । अविशदिति पूर्वेणान्वयः ॥ ६४ ॥ केचिदिति । केचित् द्विजाः योधाश्चेति ध्वनिः । कदल्यः कदलीफलान्येव कुन्ताः आयुधविशेषाः तान् । उदारमहसः अतिमात्रतेजस्कान् एकत्र पिष्टसौरभ्यादन्यत्र शोणोत्तेजनाच्चेतिभावः । परे अन्ये च अनन्ताः संयावाः पत्रसाध्यभक्ष्यविशेषाः । 'संयावः पत्रपाचितम्' इत्यमरः (?) ते एव प्रदराः बाणाः 'सायकः प्रदरः काण्डः कङ्कपत्रः शिलीमुखः' । इत्यमरः ॥ तान् । तथा परे शर्कराणां सितानां राशिम् । शर्करा एक शर्करा सिकता । श्लिष्टरूपकम् ।

सितवाजी महितोपदंशवान् । सघृतातपवारणोऽविशत्प्रसभद्वेषि पुराणि सूपराट् ॥ ६६ ॥ क्षुद्द्वेषिणं तत्क्षणमात्मशक्त्या निरस्य सूपावनिपे प्रवृद्धे । भूमीसुराहर्षवशादवर्षंस्तन्मूर्ध्नि दध्योदनपुष्पवर्षम् ॥ ६७ ॥ इत्थं दिनत्रयमसौ यतिसार्वभौमो भूमीसुरान् रुचिरमष्टसहस्रसंख्यान् । मृष्टान्नमन्वहमभोजयदादरेण विश्वंभरोऽप्यधित तृप्तिमदोऽन्तरस्थः ॥ ६८ ॥ हस्ताम्बुजे मकरकच्छपपद्मशंखान् रेखाच्छलेन स वहन् हृदये मुकुन्दम् । त्रिंशत्सहस्रगणितान्व्यदिशद्द्विजानां दीनारकानिति यदत्र किमद्भुतं तत् ॥ ६९ ॥

---

प्राकारादिदुर्गास्कन्दने तप्तसिकताप्रक्षेपणं प्रसिद्धम् । केचिपदरे च पर्पटानि माषविकारभक्ष्यभेदाः तान्येव चक्राणि चक्रायुधानि तेषां चक्रं समूहं च । तथा अपरे संतप्तसर्पिषां झरीः प्रवाहान् । तप्ततैलादिप्रक्षेपणमपि प्रसिद्धम् । पटोलकाः शाकविशेषाः तदादय एव नलका आयुधविशेषाः तांश्च । कूष्माण्डा एव कूष्माण्डाः पिशाचभेदाः तन्मुख्यान् तत्प्रभृतींश्च । युद्धे मान्त्रिकैः अरिसैन्यमारणाय कूष्माण्डादिग्रहप्रयोगं कारयन्तीति प्रसिद्धम्। अन्तः पिचण्डपुरान्तः पृथक् चिक्षिपुः । सर्वं यथाकामं अभुञ्जन्तेति फलितोऽर्थः ॥ ६५ ॥ **स इति** । सः सूपराट् रसायनानां चोष्यद्रव्यविशेषाणां व हिनीभिः नदीभिः वृतः । अन्यत्र रसस्य वीर्यस्य अयनानि स्थानीभूताः रसायनानि शौर्यादयो गुणाः तेषां या वाहिनी सेना तया वृतः । 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः।' इत्यमरः । 'सेनानद्यौ तु वाहिन्यौ' इति धनञ्जयः । सितं वाजं अन्नं अस्यास्तीति सितवाजी शुभ्रान्नमिश्रितमित्यर्थः । 'सोमाय वाजिनेऽश्मकं चतुर्निर्वपेत्' इति श्रुतौ 'वाजिने अन्नवते' इतिव्याख्यातत्वात् वाजशब्दोऽन्नवाचकः । अन्यत्र सितो वाजी तुरङ्गो यस्येति सितवाजी श्वेताश्वरूढ इत्यर्थः । महिताः उपदंशाः भक्षणानि लवणशाकानि अस्य सन्तीति महितोपदंशवान् । 'उपदंशस्तु भक्षणम्' इत्यमरः । (?) घृतमेवातपत्रारणं तेन युक्तः सघृततापवारणः सन् द्वेषिणः क्षुद्रिपोः पुराणि पिचण्डाख्यानि अविशत् विवेश ॥६६॥ **क्षुदिति** । सूपावनिपे सूपराजे तत्क्षणमात्मशक्त्या स्वसामर्थ्येन स्वकीयशक्तिनामकायुधविशेषेण च क्षुद्द्वेषिणं क्षुधाशत्रुं निरस्य निष्कास्य हत्वा च प्रवृद्धे सति भूमीसुराः हर्षवशात् तन्मूर्ध्नि सूपराजमस्तके दध्योदनमेव पुष्पाणि तेषां वर्षं अवर्षन्। समस्तभक्ष्यादिभोजनानन्तरं दध्योदनमभुञ्जतेत्यर्थः । रिपुजित्वरस्य राज्ञश्चोपपरि प्रजाः पुष्पलाजादिकानि प्रक्षिपन्तीति प्रसिद्धम् ॥६७॥ प्रकृतमाश्रित्योक्तार्थं निगमयति । **इत्थमिति** । इत्थं उक्तरीत्या असौ यतिसार्वभौमो विद्याधीशः अष्टसहस्रसंख्याकान् भूमीसुरान् आदरेण दिनत्रयमन्वहं सुचिरं यथा तथा प्रकृष्टान्नमभोजयत् । भोजयतेर्ण्यन्ताद्द्विकर्मकत्वम् । अमीषां ब्राह्मणानां अन्तस्थः अदोऽन्तरस्थः विश्वंभरो हरिरपि तृप्तिं अधित आधत्त अभजदित्यर्थः । विश्वंभरस्यापि तृप्तिकरत्वाद्भोजनस्यातिशयो गम्यते । अत्र 'नाहं तृप्यामि यजमानहविर्वितानैः ।' इत्यादि प्रमाणमनुसन्धेयम् ॥ ६८ ॥ **हस्तेति** । स गुरुः रेखाच्छलेन हस्ताम्बुजे मकरकच्छपपद्मशङ्खान् हृदये मुकुन्दं च वहन् दधानः सन् अत्र श्रीरङ्गे त्रिंशत्सहस्रगणितान् दीनारकान् द्विजानामदिशत् दत्तवानिति यत् तदद्भुतं किम्? इति काकुः । मकरादिनिधीन् दधानस्य त्रिंशत्सहस्रदीनारदानं आश्चर्यं न भवतीत्यर्थः । 'महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ । मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नव ॥' इत्यमरः । हस्ते मकरादिरेखात्वं महानुभवलक्षणम् ।

श्रीरङ्गात्स निरीय तञ्जनगरीरम्योपवन्यामितस्तत्रत्यै रघुनाथपार्थिवमुखैरभ्यर्चितः सादरम् । संभाव्याथ सुधीन्द्रयोगितिलकं श्रीकुम्भकोणादिकग्रामेष्वानमदिन्दिराप्रणयिनं मोदेन नाणीयसा ॥ ७० ॥ दिग्भ्यस्तत्सविधं समेत्य शतशो दुर्वारवाग्वैखरीगर्वोद्रेकवशात्प्रशान्तकुधियः सद्यस्तदीयोक्तिभिः । ह्रीमन्तः स्वमतेऽप्यनादरभृतस्तं मन्यमाना गुरुं पेतुःपन्नलिनद्वये यतिमणेरद्वैतिविद्वज्जनाः ॥ ७१ ॥

इतिश्रीविद्याधीशविजयेऽष्टमः सर्गः ॥ ८ ॥

तदनन्तरं तनुभृतां गुरूत्तमो हितमाचरन्विहितकार्यधूर्वहः । मधुरामवाप मधुरां स सम्पदा मधुभृत्पदाब्जमधुनि (?) भृताशयः ॥ १ ॥ तरसा समेत्य पुरतस्तमादरादवतंसभूषणमशेषयोगिनाम् । सचिवाः प्रणेमुरुचितोपचारवाग्विभवाः प्रभावसदृशोपदाश्रियः ॥ २ ॥ तटिनीमितस्तदनु ताम्रपर्णिकां न दिशां मुखानि स यशोभिरात्मनः । अकरोदलं पर-

---

तत्प्रपञ्चस्तु विस्तारभयान्न लिख्यते । हृदि मुकुन्दध्यानपुरःसरं तन्नीत्यै दत्तवानित्याशयः । अत्र किमद्भुतं इति निन्दया अद्भुतमेवेति स्तुतेः गम्यत्वाद् व्याजस्तुतिर्नामालंकारः । 'निन्दया वास्तुतिर्यत्र स्तुत्या वा गम्यते च सा । व्याजस्तुतिमलंकारमलङ्कारविदो विदुः ॥' इति तल्लक्षणात् । स च श्लेषमूल इति तद्भेदः ॥६९॥ श्रीति । स गुरुः श्रीरङ्गान्निरीय तञ्जनगर्याः रम्योपवन्यां इतः प्राप्तः सन् तत्रत्यैः तञ्जानगरस्थैः रघुनाथपार्थिवमुखैः रघुनाथनायकाद्यैः सादरमभ्यर्चितः तथा अनन्तरं सुधीन्द्रयोगितिलकं संभाव्य नमस्कारादिभिः संमान्य तस्य स्वतोऽप्याश्रमज्येष्ठत्वात् । नाणीयसा अतिमहता । नशब्दस्य 'सप्सुपा' इति समासः । मोदेन श्रीकुम्भकोणादिग्रामेषु इन्दिराप्रणयिनं शाङ्गपाण्यादिनामकं लक्ष्मीशं अनमत् प्रणनाम ॥ ७० ॥ दिग्भ्य इति । अद्वैतिविद्वज्जनाः दुर्वारा या वाग्वैखरी वागाडम्बरः तया यो गर्वः तस्य उद्रेकवशात् हेतोः शतशः दिग्भ्यः दिशां सकाशात् तत्सविधं गुरुसमीपं समेत्य तज्जिगीषयेति भावः । तदीयोक्तिभिः गुरूपन्यस्तबलवच्छास्त्रवचनैः प्रशान्तकुधियः निरस्तकुत्सितामिथ्याबुद्धयः अत एव ह्रीमन्तः स्वमते स्वकीयाद्वैतसिद्धान्तेऽप्यनादरभृतः किमुत शाक्तेयादिसिद्धान्तेष्विति भावः । अत एव तं गुरुं आत्मोपदेष्टारं मन्यमानाः सन्तः यतिमणेः पन्नलिनद्वये चरणारविन्दयुगले पेतुः प्रणेमुरित्यर्थः ॥ ७१ ॥

इति श्रीमद्हृदयकोनेरिणा जनार्दनसूरिकारिते श्रीमद्विद्याधीशविजयव्याख्याने शब्दार्थदीपिकायामष्टमः सर्गः ॥ ८ ॥

तदनन्तरमिति । तदनन्तरं चोलदेशसंचारानन्तरं मधुभिदो हरेः पदाब्जमधुना ध्यानलक्षणेन निभृताशयः। विहितकार्याणां हरिभक्ततद्द्वेषिरक्षणशिक्षणकृत्यानां धूर्वहः । स गुरूत्तमः तनुभृतां हितमाचरन् सर्वप्राणिहितार्थमेवं तत्संचार इति भावः । संपदा समृध्या मधुरां मनोज्ञां मधुरां मधुरापुरीं अवाप । अस्मिन्सर्गे मञ्जुभाषिणीवृत्तम् । ' सजसा जगौ च यदि मञ्जुभाषिणी ' इति तल्लक्षणात् ॥ १ ॥ तरसेति । सचिवाः तत्रत्यमन्त्रिणः आदरात् पुरतो मधुरापुरतः तरसा समेत्य मार्गे समभिगम्य उचितोपचारवाग्विभवाः प्रभावसदृशोपदाश्रियः स्वप्रभुत्वानुरूपसमर्पितबलिसमृद्धयः सन्तः न तु केवलशुष्कप्रियोक्तय इति भावः । अशेषयोगिनां

मशेषधीमतामपि तद्भवैरमलमौक्तिकोत्करैः ॥ ३ ॥ अथ सेतुबन्धमतिबन्धुरोल्लसत्कपिबाहुसन्धितमघेन्धनानलम् । अधिगत्य सिन्धुसलिले कृताप्लवः स बबन्ध तत्र रघुसिन्धुरे मतिम् ॥ ४ ॥ कमलाप्रियस्य कमनीयमन्दिराण्यखिलानि भुव्यमितमोदधूर्वहः । स चचाल सर्वविमतालिशार्वरद्युमणिः सतामभिनवामरद्रुमः ॥ ५ ॥ बदरीं क्रमेण निबरीशसिंधुजाहितसन्निधानमहितां जगद्गुरुः । ववले यियासुरखिलैः सुधीजनैरपि धर्मनामनगरीं गरीयसीम् ॥ ६ ॥ अवकर्ण्यकर्णमधुरां तदागतिं वरपूर्णबोधबुधपूर्वसूरयः । अभिजग्मुरञ्चितमुदस्तमादरादपि वासुदेवयतिराट्पुरःसराः ॥ ७ ॥ प्रथमं रजः कलकलोऽथ धूर्वहा तदनूक्षपङ्क्तिरपि सूरिवाजिनः । परिचारकालिरथ दोर्बलोत्कटाप्यभिजग्मुषां मुदमवर्धयन् क्रमात् ॥ ८ ॥ सुकृतप्रपञ्चमिव सप्रतीककं महितं प्रबोधमिव नेत्रगोचरम् । भुवि पूर्णचन्द्रमिव कल्पितक्रमं ददृशुर्यमीश्वरममी समीपतः ॥ ९ ॥ तदुदारदर्शनपलायितात्म-

---

अवतंसं भूषणं तं गुरुं प्रणेमुः ॥ २ ॥ तटिनीति । तदनु मधुराप्रवेशानन्तरं सः गुरुः ताम्रपर्णिकां नाम तटिनीं नदीं इतः प्राप्तः सन् आत्मनः यशोभिः दिशां मुखानि परं केवलं नालमकरोत् । किं तु तद्भवैः ताम्रपर्णीजनितैः अमलमौक्तिनां उत्करैः समूहैः अशेषविदुषां समस्तस्वाश्रितपण्डितानामपि मुखानि अलमकरोत् अलंचकार । ताम्रपर्णीसागरसङ्गे मौक्तिकान्युद्भवन्तीति प्रसिद्धम् । प्रभुभिः समर्पितानि तत्रत्यमौक्तिकानि विदुषां करणाभरणार्थं दत्तवानित्यर्थः ॥ ३ ॥ अथेति । सः गुरुः अतिबन्धुरैः अत्यन्तदृढैः उल्लसद्भिः चलद्भिः कपीनां नलादीनां बाहुभिः सन्धितं निर्मितं अघेन्धनानां स्वदृष्टजनपापकाष्ठानां अनलं सेतुबन्धं अधिगत्य तत्र सिन्धुसलिले कृताप्लुवः सन् रघुसिन्धुरे रामचन्द्रे मतिं बबन्ध । मत्या रामलीलां सस्मारेत्यर्थः ॥ ४ ॥ कमलेति । सर्वविमतालिरेव शार्वरं अन्धतमसं 'शार्वरं त्वन्धतमसम्' इत्यमरः । तस्य द्युमणिः सूर्यः । तथा अभिनवामरद्रुमः अभीष्टदो नूतनकल्पवृक्षः स गुरुः अमितमोदधूर्वहः सन् भुवि कमलाप्रियस्य श्रीपतेः अखिलानि कमनीयमन्दिराणि चचार । पश्चिमदिशि सङ्गलिकामेत्य तत्प्रान्तेषु समस्तदेवायतनान्यगमदित्यर्थः ॥ ५ ॥ बदरीमिति । निबिडेन निबरीशेन अविच्छिन्नेनेतियावत् । सिंधुजा लक्ष्मीः तस्याः हितो हरिः तस्य सन्निधानेन महितां पूजितां बदरीं बदरिकाश्रमं क्रमेण यियासुः यातुमिच्छुः सन् यातेः सन्नन्तादुप्रत्ययः । अखिलैः सुधीजनैः गरीयसीं धर्मनामनगरीं धर्मपुरीं ववले जगाम ॥ ६ ॥ अवकर्ण्येति । कर्णमधुरां तस्य गुरोः आगतिं आगमं अवकर्ण्य अञ्चितमुदः प्राप्तहर्षाः वराः श्रेष्ठा पूर्णबोधबुधपूर्वसूरयः पूर्णबोधाचार्यादिपण्डिताः अपि अपिशब्दः समुच्चये । वासुदेवयतिराट्पुरःसराः सन्तः आदरात्तं गुरुं अभिजग्मुः ॥ ७ ॥ प्रथममिति । प्रथमं प्राक् रजः जनचरणोत्थधूलिः अथ कलकलः जनकोलाहलध्वनिः तदनु धूर्वहा भारवाहिनी उक्ष्णां बलीवर्दानां पङ्क्तिः अपिः समुच्चये । अथ सूरिवाजिनः विद्वत्तुरङ्गाः अथ दोर्बलेन उत्कटाः मत्ताः परिचाराकालिरपि अभिजग्मुषां गुरुं प्रत्युद्गतानां पूर्णबोधादीनां क्रमात् मुदं अवर्धयन् । रजःप्रभृतीनां उत्तरोत्तरं गुरुसन्निकर्षलिङ्गत्वादिति भावः ॥ ८ ॥ सुकृतेति । सप्रतीककं सदेहबन्धं सुकृतप्रपञ्चं पुण्यविस्तारमिव नेत्रगोचरं दृग्विषयं महितं प्रबोधं ज्ञानमिव भुवि कल्पितक्रमं कृतपादविक्षेपं पूर्णचन्द्रमिव यमीश्वरं गुरुं अमी पण्डिताः समीपतः ददृशुः ॥ ९ ॥

दुर्दमजन्महेतुशमलग्रहा इव । न्यपतन्पदाब्जमभितः सगौरवं सुधियः प्रहर्षविवशाः सहस्रशः ॥ १० ॥ परिरम्भणेक्षणकराब्जचालनस्मितपूर्वकैरयममून् सभाजनैः । समभावयत्सदयमौचितीविदां प्रथमो यथाक्रममशेषभूसुरान् ॥ ११ ॥ नगरीं प्रविश्य नवतोरणध्वजामभिवन्द्य तावदगजामनोहरम् । अधिगत्य मन्दिरमथाकरोद्धरेर्नृहरेर्नतिं नियमिनां शिरोमणिः ॥ १२ ॥ विमले स वृद्धविबुधस्रवन्तिका सलिलेवगाह्य सकलं तथान्हिकम् । विनिवर्त्य कर्मविमलाशयोऽवसद्धरिपादपद्महृतधीर्मठान्तरे ॥ १३ ॥ विविधानि तस्य च विरागितावनेश्चरितान्यनन्यसुकराण्यहर्दिवम् । भुवि के प्रजल्पितुमिहेशते तथाप्यहमीरयामि चपलो यथामति ॥ १४ ॥ उषसि प्रशस्तमुभयोर्द्विजन्मनोर्मुखतोऽवधारितमुरार्दनश्रुतिः । स समुत्थितोऽथ ववृतेऽन्तरे बहिर्द्विविधेन शौचविधिना समुज्ज्वलः ॥१५॥

---

तदिति । सुधियः पण्डिताः तस्य गुरोः उदारदर्शनेन पलायितः आत्मनः दुर्दमं दुःशमं जन्मनां हेतुभूतं यत् शमलं पापं तदेव ग्रहो येषां ते तथोक्ता इव प्रहर्षविवशाः सन्तः पदाब्जं गुरुचरणाब्जं अभितः सहस्रशः सगौरवं यथा तथा न्यपतन् पेतुः प्रणेमुः । लोके ग्रहग्रहस्तपुरुषः मन्त्रादिना ग्रहोच्चाटने कृते स्वयं विवशत्वेन पतति तद्वदित्युत्प्रेक्षालंकारः ॥ १० ॥ परिरम्भणेति । औचित्यमेव औचिती षित्वाङ्ङीष् । तां विदन्तीति औचितीविदः उचितज्ञाः तेषां प्रथमः श्रेष्ठः अयं गुरुः परिरम्भणं आलिङ्गनं तथा ईक्षणं कराब्जचालनं स्मितं च इति एतत्पूर्वकैः सभाजनैः अमूनभ्यागतान् अशेषभूसुरान् सहृदयं यथा तथा यथाक्रमं समभावयत् संभावितवान् ॥ ११ ॥ नगरीमिति । नियमिनां शिरोमणिः गुरुः नवतोरणध्वजां नगरीं धर्मपुरीं प्रविश्य तावत् प्रथमं अगजायाः पार्वत्याः मनोहरं रुद्रामेश्वरनामकं अभिवन्द्य अथ अनन्तरं नृहरेः नृसिंहाख्यस्य हरेः मन्दिरं प्रविश्य नतिं अकरोत् ॥ १२ ॥ विमल इति । स गुरुः विमले वृद्धविबुधस्रवन्तिकासलिले गोदावरीवारिणि अवगाह्य स्नात्वा तथा सकलमाह्निकं कर्म विनिवर्त्य विमलाशयः सन् हरिपादपद्मेन हृतधीः हरिचरणासक्तचित्तः सन् मठान्तरे तत्रत्यमठमध्ये अवसत् ॥ १३ ॥ अथास्य प्रातरारभ्य आनिद्रान्तं कर्तव्यं कार्यं विवक्षुः कविस्तावत्स्वोत्कर्षं परिहरति । विविधानीति । अनन्यसुकराणि इतरयतिजनदुष्कराणि विविधानि विरागितावनेः वैराग्यस्थलभूतस्य तस्य गुरोः चरितानि अहर्दिवं दिने दिने भुवि के वा जनाः प्रजल्पितुं वक्तुं ईशते प्रगलभन्ते । न केऽपीति काकुः । तर्हि मौनमेव तव शरणमित्याशङ्क्याह तथापि चलः चञ्चलस्वभावः अहं यथामति निजबुद्धिमनतिक्रम्य ईरयामि ' नभः पतन्त्यात्मसमं पतत्रिणः ' इति न्यायेनेति भावः ॥ १४ ॥ अथ सर्गान्तमस्य दिनचर्यामेव वक्तुमारभते । उषसीति । उषसि उषःकाले ' पञ्च पञ्च उषःकालः ' इति तल्लक्षणम् । समुत्थितः सन् प्रशस्तं यथा तथा उभयोर्द्विजन्मनोः मुखतः मुखात् अवधारितमुरार्दनश्रुतिः आकर्णितगजेन्द्रमोक्षादिहरिश्रुतिः अथ अनन्तरं बहिः अन्तरे हृदये च द्विविधेन शौचविधिना समुज्ज्वलः ववृते अभूत् । ' शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा । मृज्जलाभ्यां स्मृतं बाह्यं आन्तरं हरिचिन्तनम् ॥ ' इति स्मरणात् । ' यतीनां चतुर्गुणम् ' इति विध्युक्तबाह्यशौचकरणानन्तरं हरिं दध्यौ इत्यर्थः ॥ १५ ॥ तच्छौचोत्थितमृत्तिकाप्रभावमाह ।

महिता तदङ्घ्रिकरमर्दितोज्झितां मृदमाकलय्य वपुषि स्वयं जनाः। क्षयकुष्ठकोष्ठगद-दुर्दमग्रहैः सहसोज्झिताश्च सुखिनोऽभवन्नहो ॥ १६ ॥ करदीपिकालिकलिताध्वनाशनै-र्नियमीन्दुरेत्य निरयप्रमाथिनि। विशदे ममज्ज विधिवत्स गौतमीपयसि द्युसिन्धुपयसी-भराडिव ॥ १७ ॥ तदथोऽवगाहतरलीकृतोचलल्लहरीभरेव लसति स्म वाहिनी। हरयेऽ-दसीयहृदयाब्जवासिने विविधार्हणाविधिहृताविवाकुला ॥ १८ ॥ तुलसीमृदाप्यतुलया स गोमयैरवलिप्य देहमसकृत्कृताप्लवः। सलिले निमज्य कलिलेपहृत्यसौ विमले जजाप कमलेशितुर्मनुम् ॥ १९ ॥ यतितल्लजोऽयमलमल्लकं परं दधदप्यनूरुकरदंशिताकृतिः। रुरुचेऽतिपाटलरुचावगुण्ठितावयवो यथैव वरपट्टवाससा ॥ २० ॥ अथ गोपिकाद्यपदचन्द-नाद्वपूरचितोर्ध्वपुण्ड्रमरिपूर्वमुद्रणैः। अकृतालमेष सुकृतालवालभूर्निवसन्मुकुन्दनिधिपेटिको-पमम् ॥ २१ ॥ मुनिराट् कृताचमनमुख्यसत्क्रिया दिवि भानुबिम्बभुवि भावयन्हरिम्।

---

**महितामिति**। महितां प्रशस्तां यास्य गुरोः अङ्घ्रिकरमर्दिता उज्झिता च तां मृदं मृत्तिकां स्वयं वपुषि आकलय्य आविलिप्य जनाः क्षयो राजयक्ष्माख्यो रोगः कुष्ठः प्रसिद्धः कोष्ठगदः कुक्षिरोगः 'पुंसि कोष्ठोऽन्तर्जठरे कुसूलेऽन्तर्गृहेऽपि च।' इत्यमरः। तथा दुर्दमग्रहाः दुःसहब्रह्मराक्षसादि पिशाचाश्च तैः सहसा उज्झिताः सन्तः सुखिनश्चाभवन्। अहो तदीयशौचमृत्तिकाया एव तादृगनुभवत्वादाश्चर्यमित्यर्थः ॥ १६ ॥ **करेति**। सः नियमीन्दुः गुरुः करदीपिकालिभिः कलितेन दर्शितेन अध्वना शनैः एत्य निरयान् नरकान् प्रमथ्नातीति निरयप्रमाथी सकलपापहारीत्यर्थः। तस्मिन् विशदे गौतमीपयसि द्युसिन्धोः मन्दाकिन्याः पयसि इभराट् ऐरावत इव विधिवत् ममज्ज सस्नौ ॥ १७ ॥ **तदिति**। तस्य गुरोः अथ जलान्तः अवगाहेन निमज्जनेन तरलीकृतः अत एव उल्ललन् लहरीणां तरङ्गाणां भारो यस्याः सा तथोक्ता इव वाहिनी गोदावरी अदसीये गुरुसंबन्धिनि हृदयाब्जे वसतीति हृदयाब्जवासी तस्मै हरये विविधार्हणाविधिः नानाविधपूजाविधिः तस्य आहृतौ संपादने आकुला ससंभ्रमेव लसति स्म इत्युत्प्रेक्षा ॥ १८ ॥ **तुलसीति**। सः असौ गुरुः अतुलया प्रशस्तया तुलसीमृदा गोमयेनापि असकृत्पुनः पुनः देहमवलिप्य कृताप्लवः सन् तथा कलिना युगेन यो लेपः पापलेपः तं हरतीति तध्दृत् तस्मिन् विमले सलिले गोदाजले निमज्य कमलेशितुः श्रीपतेः मनुं मन्त्रं अघमर्षणादिकं जजाप। 'त्रिर्जपेदघमर्षणम्' इति प्रमाणादिति भावः ॥ १९ ॥ **यतीति**। अयं यतितल्लजः यतिश्रेष्ठः परं केवलं अलमल्लकं कौपीनं दधदपि अनूरोः गरुडाग्रजस्य अरुणस्य 'सूरसूतोऽरुणोऽनूरुः' इत्यमरः। करैः किरणैः दंशिताकृतिः कवचितशरीरः अत एव अतिपाटलरुचा वरेण श्रेष्ठेन पट्टवाससा अवगुण्ठितावयवो आच्छादिताङ्गः इव रुरुचे। कौपीनमात्रमाधत्त इति फलितोऽर्थः ॥ २० ॥ **अथेति**। अथ अनन्तरं सुकृतानां आलवालभूः आश्रयस्थानं एष गुरुः गोपिकाद्यपदचन्दनात् गोपीचन्दनादित्यर्थः। रचितोर्ध्वपुण्ड्रं निवसन् हृदि स्थितवान् यो मुकुन्दनामा निधिः तस्य पेटिकोपमं तदाधारभूतमित्यर्थः। अरिपूर्वमुद्रणैः चक्रादिपञ्चमुद्राभिः अलमकृत अलंकृतवान्। लोके निक्षेपपेटिकोपरि जतुमुद्रां निक्षिपन्ति तद्वदिति ध्वनिः ॥ २१ ॥ **मुनिराडिति**।

शनकैर्जजाप जनकैरवेशिता प्रणवं महाघगणवञ्चकं मुहुः ॥ २२ ॥ प्रयतः परो यतिरूपानयत्तदा तदुपान्तमाशु तपनीयसंपुटीम् । तरुणारुणोस्रततिसङ्गमस्फुरद्द्विगुणीभवद्द्युतिविभासिदिक्तटीम् ॥ २३ ॥ स्नपयांबभूव विवृतात्तदन्तरादपकृष्य गन्धतुलसीदलादिकम् । निखिलेऽपि मूर्ध्नि निहिताञ्जलावसौ पयसाब्जगेन परमात्ममूर्तिकाः ॥ २४ ॥ सुचिरं यतीन्दुरिह रामसूरिणा श्रवणावतंसकृतशार्ङ्गभृत्कथः । प्रचचाल वेत्रकरवारिताग्रतो जनताविमर्दविशदीकृतायनः ॥ २५ ॥ भुजमध्यभासितुलसीमणीसरः कटिबद्धसूत्रकलितालमल्लकः । करपङ्कजातकनदीशसंपुटो मृदुपादपद्मयुतमञ्जुपादुकः ॥ २६ ॥ हरिगीतिकापठनकिञ्चिदुल्ललद्रुचिराधरोऽम्बुजदलायतेक्षणः । धमनीततस्य तपसा कृशीयसो वपुषोऽप्यदूढमहसा दुरासदः ॥ २७ ॥ गुरुपादभक्तिभरवत्पुरन्ध्रिकाकृतपात्रदीपकलिकापरिभ्रमः । मठविप्रमुष्टिहतभीतिदूरतस्थितमन्त्रिकोटिघटितस्फुटाञ्जलिः ॥ २८ ॥ सुरपादपोऽनु सुरभिः

---

जनाः सज्जनाः कैरवेशिता चन्द्रः आल्हादक इत्याशयः । मुनिराट् गुरुः कृताचमनसत्क्रियः सन् दिवि आकाशे भानुबिम्बभुवि स्थितमिति शेषः । हरिं भावयन् महाघगणवञ्चकं महापापसमूहनाशकं प्रणवं शनकैः मुहुः जजाप ॥ २२ ॥ प्रयत इति । तरुणारुणः प्रौढसूर्यः तस्य उस्रततेः संगमेन किरणपङ्क्तेः संपर्केण स्फुरन्त्या द्विगुणीभवन्त्या स्वप्रभया विभासीनि दिशां तटानि यस्यास्तां तथोक्तां तपनीयसंपुटीं शालग्रामगर्भितस्वर्णसंपुटं प्रयतः स्नानादिना पवित्रः परो यतिः आशु तस्य गुरोः उपान्तं समीपं आनीतवान् निर्माल्यापकषार्थमिति भावः ॥ २३ ॥ स्नपयामिति । असौ गुरुः विवृतात् पिधानविनोदनेन प्रकाशितात् । तस्याः संपुटयाः अन्तरात मध्यात् गन्धतुलसीस्रगादिकं अपकृष्य निखिले समस्तप्रेक्षकजने मूर्धनि निहिताञ्जलौ सति परमात्मनः मूर्तिकाः शालग्रामशिलाः इत्यर्थः । अब्जं शंखं गच्छतीति अब्जगम् । 'अन्यत्रापि दृश्यते ' इति गमेर्डः । शंखस्थेन पयसा वारिणा स्नपयांबभूव ॥ २४ ॥ सुचिरमिति । यतीन्दुः गुरुः इह गोदातटे सुचिरं रामसूरिणा रामाचार्येण श्रवणावतंसकृता श्रवणभूषणीकृता शार्ङ्गभृतः हरेः कथा यस्य सः तथोक्तः । श्रुतरामसूरिपठ्यमानभागवतादिकथ इत्यर्थः । वेत्रकरैः वारितेन अग्रतः पुरस्ताज्जनतायाः पुरस्तजनसमूहस्य विमर्देन हेतुना विशदीकृतं संबाधराहित्यात्प्रकाशितं अयनं यस्य स तथोक्तः सन् प्रचचाल मठं प्रययौ ॥२५॥ चलनं त्रिभिः कुलकेनाह । भुजेति । भुजमध्यभासितुलसीमणीसरः कटिसूत्रे कलितालिमल्लकः बद्धकौपीनः । करपङ्कजाते करकमले कनत् उल्लसत् ईशस्य हरेः संपुटः यस्य सः मृदुपादपद्मयुतमञ्जुपादुकः पादुकारूढः ॥ २६ ॥ हरीति । भगवद्गीतायाः पठनेन किंचिदुल्ललद्रुचिराधरः । अम्बुजदलायतेक्षणः धमनीभिः नाडीभिः ततस्य व्यासस्य तपसा कृशीयसः वपुषापि उदूढेन उत्पन्नेन महता तेजसा दुरासदः ॥ २७ ॥ गुर्विति । गुरुभावेन स्वस्मिन् गौरवेण भक्तिभरवत्यः याः पुरन्ध्रिकाः पतिव्रताः स्त्रियः 'पुरन्ध्री सुचरित्रा तु ' इत्यमरः । ताभिः कृतः पात्रदीपिकालिकानां परिभ्रमो यस्य सः । ताभिः कृतनीराजन इत्यर्थः । मठविप्राणां मुष्टिहतेः मुष्टिताडनाया भीतिः तेन हेतुना दूरस्थिताभिः मन्त्रिकोटिभिः घटितस्फुटाञ्जलिः प्रचचाल इति पूर्वेणान्वयः ॥ २८ ॥ सुरेति । सुरपादपो नु कल्पवृक्षः किम् ' नुप्रश्ने वितर्के च ' इत्यमरः । सुरभिः कामधेनुः किं अथवा सुरः कश्चिद्देवो

सुराऽथवा कमलाकरो नु करुणो नु मूर्तिमान् । किमु चन्द्रमाः किमु मनोरथः सतामिति तं ददर्श यतिपुङ्गवं जनः ॥ २९ ॥ स मठे ततो रघुपतेर्दृढव्रतो बहुधा प्रदक्षिणविधानमाचरन् । प्रमदेन साष्टशतसङ्ख्यया नतीरतनोच्च माङ्गलिकदीपिकार्पणम् ॥ ३० ॥ अधिसंसदञ्चति कुशासनं यतिप्रवरेऽथ वेदनिधियोगिपूर्वकाः । अपिकेशवार्यबुधसत्यपूर्वकव्रतयोगि (ना ? )रायणविपश्चिदाह्वयाः ॥३१॥ यदुपत्यनन्तनरसिंहरोहिवेंकटभीमरामहरिधर्मसूरयः । बहवः प्रणम्य सुधियस्तथेतरे विनयात्तदोपविविशुर्यथाक्रमम् ॥ ३२ ॥ सह तैः सुधाब्धिरचितावगाहनः प्रहरद्वयेऽप्यतियति प्रभुः सताम् । अवगाह्य सिन्धुसलिलेऽथ पूर्ववद्धरिमारिराधयिषति स्म सादरम् ॥ ३३ ॥ स्वकराब्जघृष्टघुसृणोद्रवोन्मिलत्पृथुदिव्यगन्धघुटिको हरेः पुरः । स निषद्य क्लृप्तसरसीरुहासनः ककुभो बबन्ध ककुदस्तपस्विनाम् ॥३४॥ स निरुद्धनिश्वसितमारुतश्चिरात् हृदयाब्जभावितहृषीकनायकः । पललाददुर्ग्रहपलायनोद्भटं

---

वा कमलाकरो नु मूर्तितान् करुणो नु करुणरसः किं चन्द्रमाः किमु सतां मनोरथः किमु इत्येवं बहुविकल्पपूर्वकं इति भावः । यतिपुङ्गवं जनो ददर्श । एतेन जनानां सुरपादपादिदर्शनानन्दः तद्दर्शनाद् व्यज्यते ॥२९॥ स इति । दृढव्रतः स गुरुः ततोऽनन्तरं रघुपतेः बहुधा प्रदक्षिणाविधानं विधिं आचरन् प्रमदेन साष्ठशतसंख्यया नतीः प्रणामांश्च मङ्गलदीपिकार्पणं च अतनोत् ॥३०॥ अधीति । यतिप्रवरे गुरौ अधिसंसद् सभायां विभक्त्यर्थेऽव्ययीभावः । कुशासनं अञ्चति प्राप्नुवति सति अथानन्तरं वेदनिधियोगिपूर्वकाः केशवाचार्यबुधः केशवाचार्यः सत्यपूर्वकव्रतयोगी सत्यव्रतयोगीत्यर्थः । नरायणविपश्चित् नारायणाचार्यः ' नरायणो नरयणो नारायण इतीरिताः ' । इति शब्दभेदप्रकाशे । एतदाह्वयाः सत्यव्रतनारायणाचार्यनामानः पण्डिता इत्यर्थः । ॥ ३१ ॥ यद्विति । यदुपतिः अनन्तः नरसिंहः रोह्विवेंकटभीमः रामहरिश्च धर्मश्चेति सूरय एतेः सर्वेऽप्याचार्याः । तथा बहवः इतरे सुधियश्च तदा प्रणम्य गुरुं नत्वा विनयात् यथाक्रमं उपविविशुः ॥ ३२ ॥ सहेति । तैः पूर्वोक्तविद्वद्भिः सह सुधाब्धौ न्यायसुधासमुद्रे रचितावगाहः कृतप्रवेशः सुधां व्याकुर्वन्नित्यर्थः । सतां प्रभुः गुरुः प्रहरद्वये यामद्वये अतियति अतिक्रान्ते सति अथ अनन्तरं पूर्ववत्प्रातःकाले इव सिन्धोः गोदानद्याः सलिले अवगाह्य स्नात्वा सादरं हरिं आरिराधयिषति स्म आराध्दुं इच्छति स्म ॥ ३३ ॥ स्वेति । तपस्विनां कुकुदः श्रेष्ठः स गुरुः ' प्राधान्ये राजलिङ्गे च वृषाङ्के ककुदोऽस्त्रियाम् । ' इत्यमरः । स्वकरजाभ्यां घृष्टा संघर्षिता घुसृणद्रवेण कुङ्कुमरसेन उन्मीलन्ती संमिश्रिता पृथ्वी बृहती दिव्यगन्धघुटिका यस्य सः तथोक्तः । हर्यर्थं स्वयमेवघृष्टचन्दनः सन् क्लृप्तसरसीरुहासनः कृतपद्मासनः सन् हरेः पुरः निषद्य उपविश्य ककुभः बन्धं गरुडमुद्रया दिग्बन्धनं चकार ॥ ३४ ॥ स इति । स गुरुः चिरं निरुद्धनिश्वसितमारुतः कृतप्राणायामः सन् हृदयाब्जे भावितः हृषीकाणां इन्द्रियाणां नायको नियामको हृषीकेशो यस्य स तथोक्तः । पललादाः राक्षसाः दुर्ग्रहाः दुष्टग्रहाश्च तेषां पलायने निराकरणे उद्भटं समर्थं पटुघण्टिकाध्वनिं अतिमात्रं घण्टानिनादं प्रकटीचकार ॥ ३५ ॥ श्लोकद्वयमेकान्वयमाह । पृथ्वीति । पृथुरत्नस्य स्थूलमणिखचितस्य सूर्यपुटकाद्वयस्य पीठिका-

प्रकटीचकार पटुघण्टिकाध्वनिम् ॥ ३५ ॥ पृथुरत्नसूर्यपुटगद्वयान्तराकनकातपत्रघटनामनोहरे । परितोऽभिगुम्फितपरार्घ्यमौक्तिकस्रगमूल्यपट्टपटिकापरिष्कृते ॥३६॥ विपुलप्रभालिविवृताञ्चलः स्फुरन्नवरत्नदीप्तिनटदिन्द्रकार्मुके । रमणीयविष्टरतले रघूत्तमप्रतिमां तपोनिधिरभिन्यवीविशत् ॥ ३७ ॥ मुकुटाद्यनेकमणिभूषणोज्वलां ललितस्मिताधरलसन्मुखाम्बुजाम् । करयुग्मक्लृप्तकनकेषुकार्मुकां निजपार्श्वभासिनिमिराजकन्यकाम् ॥ ३८ ॥ अरिशुद्धिवर्णपरिमाणनिस्तुला हरिसन्निधानगरिमाः शिलाश्रयाः । अधिपात्रमेष निदधे पराशरात्मजमूर्तिकाश्च दुरितार्तिहारिणीः ॥ ३९ ॥ कृतपीठशङ्खकलशाधिदेवताकलनो हृदब्जगतमीशमाकृतौ । प्रविभाव्य भास्वदिदमङ्गकान्यसौ कलयाञ्चकार करनीरजन्मना ॥ ४० ॥ अथ पार्श्ववर्तिनि धरामरव्रजे मुखरीकृता किल हरिन्मुखस्वरे । निगमं पदक्रमनिरङ्कुशाध्वना समुदीरयत्यपि समञ्चति स्पृधम् ॥ ४१ ॥ तुलसीदलेन तुहिनाम्बुनिर्मलं विकिरन्स

---

पार्श्वे परिभागश्रीलितस्येति भावः । अन्तरा मध्ये कनकातपत्रस्य घटनया मनोहरे परितः अभितः गुम्फिता अभिगुम्फिता मध्ये मण्डलाकारेण ग्रथिता परार्घ्यानां श्रेष्ठानां मौक्तिकानां स्रक् मालिका यस्याः सा तया । अमूल्यपट्टिकया अनर्घ्यपट्टवस्त्रेण परिष्कृते आस्तरणेन अलंकृते ॥ ३६ ॥ विपुलेति । विपुला या प्रभालिः पश्चाद्भागफलकः तस्याः विवृतेषुस्पष्टेषु अञ्चलेषु स्फुरन् नवरत्नदीप्तिभिः नटन्ति समन्तात्प्रसर्पन्ति इन्द्रकार्मुकाणि यस्य तं तथोक्तम् । रत्नानां नानाविधत्वात् तत्कान्तिप्रसर्पणात् इन्द्रकार्मुकभ्रमो द्रष्टॄणां जायते इत्याशयार्थः । रमणीये विष्टरतले दारुमयपीठिकाप्रदेशे रघुत्तमप्रतिमां तपोनिधिः गुरुः अभिन्यवीविशत् अभिनिवेशितवान् । अभिपूर्वात् विशतेर्ण्यन्ताल्लुङ् ॥ ३७ ॥ रघुत्तमप्रतिमामेव विवृणोति । मुकुटेति । मुकुटादिभिः अनेकमणिभूषणैः उज्ज्वलां ललितस्मिताधरेण लसन्मुखाम्बुजां करयुग्मेन क्लृप्तकनकेषुकार्मुकां धृतस्वर्णमयबाणचापां निजपार्श्वे भासते इति निजपार्श्वभासिनी निमिराजकन्यका जानकी यस्यास्तां तथोक्ताम् । एतादृशरघूत्तमप्रतिमां न्यवीविशत् इति पूर्वेणान्वयः ॥ ३८ ॥ अरीति । एष गुरुः अरिशुध्द्या चक्रशुध्या वर्णेन परिमाणेन च निस्तुलाः निरुपमाः तत एव हरिसन्निधानस्य गरिम्णः गौरवस्य आश्रया आधारभूताः शिलाः शालग्रामान् दुरितार्तिहारिणीः पराशरात्मजमूर्तिकाः व्यासप्रतिमाश्च अधिपात्रं पात्रे निदधे अभिषेकार्थं निक्षिप्तवान् ॥३९॥ कृतेति । कृतं पीठशंखकलशाधिदैवतानां कलनं आवाहनं येन स तथोक्तः । हृदब्जगतं ईशं हरिं आकृतौ प्रतिमायां प्रविभाव्य आवाह्य असौ गुरुः भास्वन्ति अस्याः प्रतिमायाः अङ्गकानि भास्वदिदमङ्गकानि तानि करनीरजन्मना स्वकराब्जेन कलयांचकार । अष्टाक्षर्या पस्पर्श इत्यर्थः ॥ ४० ॥ अथेति । अथ आवाहनानन्तरं पार्श्ववर्तिनि निजपार्श्वस्थे धरामरव्रजे भूसुरसमूहे मुखरीकृताखिलहरिन्मुखः संजातप्रतिध्वनीकृतदिङ्मुखः स्वरो निजध्वनिः यस्मिंस्तथा । समञ्चिता परस्परेण कृता स्पृधा यस्मिंस्तथा । पदक्रमयोः निरङ्कुशाध्वना निरर्गलरीत्या निगमं वेदं समुदीरयति उच्चारयति सति अपिः समुच्चये ॥ ४१ ॥ तुलसीति । सः गुरुः तुलसीदलेन तुहिनाम्बुनिर्मलं वारि विकिरन् उपरि क्षिपन् तथा विविधोपचारकृत् पादुकार्पणाद्यनेकोपचारी सन् अधिचन्द्रवासितैः अधिककर्पूरवासितैः अमलैः

वारिविविधोपचारकृत् । अमलैः पयोभिरधिचन्द्रवासितैर्विदधेऽभिषेचनविधानमीशतुः ॥४२ निजसौरभातिशयनिघ्नतालिना हरिचन्दनेन रघुनन्दनाकृतिम् । समभावयद्घुसृणसारहारिणा दृशदोऽपि दिव्यहरिसन्निधिस्फुरः ॥ ४३ ॥ भरताग्रजातमपि भारतीदलप्रकरैः सहस्रपरिसङ्ख्ययोज्वलैः । तमपूपुजत् तरुणफुल्लमल्लिकाम्बुजहल्लकादिसुमदामतल्लजैः ॥ ४४ ॥ जनता तदीयजगदीशपूजनोत्सवदर्शनोत्सुकतयाभ्युपेयुषी। विधृताञ्जलिः शिरसि वीतगात्रसञ्चलनातिसङ्कुलतयाब्रवीन्मिथः ॥४५॥ न चलत्यसौ न च दिशो विलोकतेऽपघनान्न च स्पृशति नैति खर्वताम् । न च वेत्ति किञ्चिदितरद्रघूत्तमप्रतिमेक्षणैकपरिशीलितेक्षणः ॥ ४६ ॥ निजपार्श्वयुग्मनिहितोरुगिण्डिकाद्वयवारिशोधितशयाम्बुजद्वयः । अलमल्लकैकपरिधानवानहो हरिपादसङ्गतहृदेव वर्तते ॥ ४७ ॥ करयोर्दिवाकरकुलेन्दुपूजने निजयोरपीह निखिलार्थनिस्पृहः । तदुदारदिव्यतनुदर्शने दृशोरगणेयभावमिव चायमीहते ॥ ४८ ॥ कति न क्षितौ

---

पयोभिः उदकैः ईशितुः शालिग्रामसन्निहितहरेः अभिषेचनविधानं विदधे ॥ ४२ ॥ निजेति । निजेन सौरभातिशयेन निघ्नतालिना स्वाधीनभ्रमरेण 'अधीनो निघ्न आयत्तः' इत्यमरः । घुसृणेन कुङ्कुमेन हारिणा मनोहरेण हरिचन्दनेन रघुनन्दनाकृतिं च तथा हरिसन्निध्या सन्निधानेन स्फुरन्तीति स्फुरः 'सत्सू द्विष' इत्यादिना क्विप् । दृषदः शिला अपि समभावयत् संभावितवान् । चन्दनसमर्पणं कृतवानित्यर्थः ॥ ४३ ॥ भरतेति । सहस्रपरिसंख्यया उपलक्षितैः सहस्रत्वेन गणितैरित्यर्थः । उज्ज्वलैः भारतीदलप्रकरैः तुलसीदलसमूहैः 'तुलसीभारती समे' इति शेषे । तरुणानां फुल्लानां विकसितानां मल्लिकाम्बुजहल्लकादिसुमानां कुसुमानां दामतल्लजैः माल्यश्रेष्ठैश्च भरताग्रजातमपि रामचन्द्रं च अपूजयत् पूजितवान् ॥ ४४ ॥ जनतेति । तदीयस्य गुरुसंबन्धिनः जगदीश्वरपुजनोत्सवस्य दर्शनोत्सुकतया अभ्युपेयुषी दिगन्तरादाजग्मुषी जनता जनसमूहः शिरसि धृताञ्जलिः सती अतिसंकुलतया हेतुना वीतगात्रसंचलना निश्चलाङ्गा सती मिथः अब्रवीत् परस्परेण एवं वक्ष्यमाणरीत्या बभाषे ॥ ४५ ॥ तदुक्तिप्रकारमेव सप्तभिराचष्टे । नेति । असौ गुरुः रघूत्तमप्रतिमायाः ईक्षणे दर्शने एकं यथा तथा परिशीलिते परिक्षिप्ते ईक्षणे नेत्रे यस्य स तथा सन् न चलति । दिशश्च नावलोकते । अपघनान् अङ्गानि 'अङ्गं प्रतीकोऽवयवोऽपघनोऽथ कलेवरम् ।' इत्यमरः । तांश्च न स्पृशति । खर्वतां कुब्जभावं नैति न याति । किंचित् इतरत् कृत्यं न च वेत्ति ॥४६॥ निजेति निजपार्श्वयुग्मे निहितस्य उरोः महतः गिण्डिकाद्वयस्य वारिणा शोधितशयाम्बुजद्वयः मुहुर्मुहु क्षालितकराब्जयुग्मः अलमल्लकैकपरिधानवान् कौपीनमात्राच्छादनवान् हरिचरणासक्तहृदयः एव वर्तते । अहो अदृष्टपूर्वमहिमत्वादाश्चर्यम् ॥ ४७ ॥ करयोरिति । निखिलार्थेषु निस्पृह अयं गुरुः दिवाकरकुलेन्दुः रामचन्द्रः तस्य पूजने विषये निजयोः करयोः स्वपाण्योः अगणेयभावं असंख्याततां च तथा तस्य रामस्य उदारा महिता दिव्या या तनुः प्रतिमा तस्याः दर्शने निजयोः दृशोश्च अगणेयभावं ईहते इच्छति स्मैव । तथास्माकं प्रतिभातीत्याशयः ॥ ४८ ॥ कतीति । अस्तरजसः निरस्तरजोगुणाः यतिवरंसकाः यतिश्रेष्ठाः कति पुरा पूर्वं रघुनाथं न समार्चिचन्

यतिवरांसकाः पुरा रघुनाथमस्तरजसः समार्चिषन् । पुनरेव भक्तिभरपूर्वशीलतोद्भुतदेवतार्चनविधिर्विभासते ॥४९॥ सुदृढा च भक्तिरसुरार्दने कृपा विपुलाश्रितेषु विषयेष्वरागता । अतुलं तपश्चतुरताखिलागमेष्वतिमानुषंचरितमस्य मौनिनः ॥५०॥ असकृत्प्रसादसुमुखोऽदसीयया वरिवस्ययैव वनजातलोचनः । करुणारसार्दितकटाक्षवीक्षणैरमुमादरादनुजिघृक्षति स्फुटम् ॥५१॥ सुकृतं त्वनन्यसुकरं पुराजनैः सकलैरमीभिरपि साधितं बहु । परथा कथं गुरुरथाङ्गभृत्पदाम्बुजपूजनेक्षणमहो घटेत नः ॥५२॥ प्रसरत्यथेति वचसि प्रजाननाद्धुरि स क्रमादगुरुधूपमीशतुः । अकरोन्न यावदपि तावदानशे ककुभोऽब्जराजघनघुङ्घुमो ध्वनिः ॥ ५३ ॥ अतिमात्रतालनिनदैः सगीतकैः प्रविसृत्वरैर्निगमपाठनिस्वनैः । धृतिहारिभिर्धवलशङ्खघोषितैः बधिरीभवत्यवहिते महाजने ॥५४॥ वदनेन्दुबिम्बमभिराममिन्दिराकमलस्य षोडशकलाधिकद्युतिः । ववृते न किं परिवृतोडुमण्डलं यतिराट् करभ्रमितदीपिकालिभिः ॥५५॥ सितशर्क-

---

सर्वेऽपि समर्चितवन्त एवेत्यर्थः । पुनः किन्तु एषः गुरुभक्तिभरपूर्वं भक्त्यतिशयपुरःसरं शीलितः कृतः अद्भुतः आश्चर्यकरदेवार्चनविधिर्यस्य सः तथा सन् विभासते ॥ ४९ ॥ सुदृढेति । अस्य मौनिनः गुरोः असुरार्दने हरौ भक्तिश्च सुदृढा । आश्रितेषु कृपा विपुला महती । विषयेषु अरागता वैराग्यं तपः अतुलं अखिलागमेषु चतुरता व्याख्यानचातुर्यं च इत्यादि चरितं अतिमानुषम् । न हि मानुषेषु ईदृक् चरितं दृष्टमिति भावः ॥ ५० ॥ असकृदिति । अमुष्य गुरोः संबन्धिनो अदसीयया असकृद्बहुशः वरिवस्यया शुश्रूषया 'वरिवस्या तु शुश्रूषा' इत्यमरः । प्रसादसुमुखः वनजातलोचनः श्रीरामः करुणारसार्दितैः कटाक्षवीक्षणैः अमुं गुरुं आदरात् अनुजिघृक्षति अनुग्रहीतुमिच्छति । अन्यथा ईदृक् सौमुख्यं कुत इति भावः । स्फुटमित्युत्प्रेक्षा ॥५१॥ सुकृतमिति सकलैः अमीभिर्जनैः अस्मदादिभिः अनन्यसुकरं जनान्तरदुष्करं बहु सुकृतं पुरा पूर्वजन्मनि साधितं सम्पादितम् । कुतः । परथा अन्यथा नोऽस्माकं गुरोः संबन्धिनो रथाङ्गभृत्पदाम्बुजपूजनस्य ईक्षणं दर्शनं कथं घटेत । प्राग्जन्मपुण्यं विना न घटेत एवेत्यर्थः । अहो आश्चर्यमेतद्दर्शनघटनमित्यर्थः ॥ ५२ ॥ प्रसरतीति । इति इत्थं वचसि प्रजानां आननात् प्रसरति सति अथ अनन्तरं सः गुरुः क्रमात् ईशितुः हरेः धुरि अग्रे यावत् अगुरुधूपं नाकरोत्तावदपि ततोऽपि प्रागित्यर्थः । अब्जराजस्य शंखश्रेष्ठस्य घनं घुंङ्घुमध्वनिः ककुभो दिश आनशे प्राप । धूपार्पणसमये पुरुषाः शखं दध्मुः इति फलितार्थः ॥ ५३ ॥ अतीति । सगीतकैः गानसहितैः अतिमात्रतालनिनदैश्च प्रविसृत्वरैः समन्ताद्विसृमरैः निगमपाठनिस्वनैश्च धृतिहारिभिः श्रोतृजनधैर्यहरैः धवलशंखघोषितैश्च अवहिते सावधाने महाजने बधिरी भवति सति ॥ ५४ ॥ वदनेति । षोडशकलाभ्यः अधिकद्युति अत एव अभिरामं इन्दिराकमनस्य श्रीपतेः वदनेन्दुबिम्बं यतिराजः करेण भ्रमिताभिः नीराजिताभिः दीपिकालिभिः करणैः परिवृतोडुमण्डलं नक्षत्रमण्डलपरिवृत्तं न ववृते किं न बभूव किम् । स्वयं षोडशकलाधिकद्युतित्वात् वदनेन्दुबिम्बं नक्षत्रमण्डलवेष्टितं भवत्येवेत्यर्थः । रूपकोत्प्रेक्षयोः संकरः ॥ ५५ ॥ सितेति । यतिवरेण विनिवेदितं सितशर्करा च अच्छघृतं च मृद्वीका द्राक्षा च 'मृद्वीका मृद्विकेत्यपि' इति शब्दभेदप्रकाशे । मधुद्रवः क्षौद्ररसः

राच्छघृतमृद्विकामधुद्रवनारिकेलकदलीफलादिकम् । विनिवेदितं यतिवरेण विश्वभुक् परिगृह्य हर्षपरतन्त्रतामगात्॥५६॥वरधूपदीपमुकुरप्रकीर्णकव्यजनार्पणादिविभवैः परिक्रमैः । नतिभिः प्रशस्तनुतिभिः प्रसेदिवानमुना व्यधायि किमु नाजभूसुतः॥५७॥अनुभूय भक्तिविवशः सशेषिका-मथ तीर्थकार्पणकृतार्थिताखिलः।अवगाढभव्यजरठामरापगः पचतां मठेऽन्तिकमगाद्विपश्चिताम् ॥५८॥इह भैक्ष्यकल्पितयमात्रमाचरन् विनिवेद्य देवविमताहिताय तत्। अधिपङ्क्ति भक्तमति-मृष्टमश्नतां बुभुजेऽन्नसाधनितभारतीदलः ॥ ५९ ॥ अथ सायमाप्लवनपूर्वकर्मकृद्धरयेऽ-र्पितानतिशतः स दीपिकाम् । परिकल्प्य संसदि समासदत् बृषीमुररीकृताखिलविपश्चि-दानतिः ॥ ६० ॥ स्तावं स्तावमसौ गुणान्निजगुरोः साकं सुधीतल्लजैः । नीत्वा च प्रहरद्वयं निशि ततः क्लप्तागमालोकनः ॥ सर्वांस्ताननुमान्य मान्यचरितस्तत्तद्गृहावाप्तये । शेते दर्भकटे स्वयं स्म मनसा ध्यायन्भुजङ्गेशयम् ॥ ६१ ॥ इत्येवमाद्यमुकरं मनसापि

---

नारिकेलानि च कदलीफलानि च इत्यादिकं विश्वभुक् हरिः ' त्रीन् लोकान् व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः ।' इति प्रमाणात् परिगृह्य तन्निवेदितं स्वीकृत्य हर्षपरतन्त्रतां अगात् । हृष्टोऽभूत् ॥ ५६ ॥ वरेति । वरधूपदीपमुकुरप्रकीर्णकव्यजनार्पणादिविभवैः । प्रकीर्णकं चामरम् । ' चामरं तु प्रकीर्णकम् ' इत्यमरः । तथा परिक्रमैः प्रदक्षिणाभिः नतिभिः प्रशस्तनुतिभिश्च करणैः अमुना गुरुणा कर्त्रा अजभूः दशरथः तस्य सुतो रामः प्रसेदिवान् अत्यन्तं प्रसन्नः न व्यधायि किमु न कृतः किमु । प्रसन्नीकृत एवेत्यर्थः ॥ ५७ ॥ अन्विति । भक्तिविवशः स गुरुः शेषिकां निर्माल्यं अनुभूय स्वयं तीर्थस्वीकारानन्तरं हरिनिर्माल्यतुलसीमालिकादिकं कण्ठादिके धृत्वेत्यर्थः । अथ अनन्तरं तीर्थकस्य तीर्थोदकस्य अर्पणेन दानेन कृतार्थिताखिलः सार्थकितसर्वजनः अवगाढ-दिव्यजरठामरापगः वृद्धगङ्गायां कृतस्नान इत्यर्थः । मठे पचतां स्वयंपाकवतां विदुषां अन्तिकं समीपं अगात् । भिक्षार्थमिति भावः ॥५८॥ इहेति । इह तेषां निकटे भैक्षिकलितयमात्रं आच-रन् तद्भैक्ष्यं देवविमताः दैत्याः तेषां अहितो हरिः तस्मै निवेद्य अतिमृष्टं भक्ष्यभोज्यसहितं भक्तं अन्नं अश्नतां अधिपङ्क्ति पङ्क्तौ अन्नस्य साधनितानि भारतीदलानि तुलसीदलानि येन स तथोक्तः सन् बुभुजे । तद्भक्ष्यान्नमपि तुलसीदलमात्रं व्यञ्जनीकृत्य भुक्तवानित्यर्थः ॥ ५९ ॥ अथेति । अथ भोजनानन्तरं सायं आप्लवनपूर्वकर्मकृत् स्नानपूर्वकं प्रणवजपादिकर्मकृत् सन् तथा हरये अर्पितानतिशतः दीपिकां हरये नीराजनं परिकल्प्य उररीकृताखिलविपश्चिदानतिः अङ्गीकृ-तसकलविपश्चिन्नमस्कारः सन् संसदि बृषीं कुशासनं ' यतीनामासनं बृषी ' इत्यमरः । समासदत् कुशासने उपाविशत् ॥ ६० ॥ स्तावमिति । मान्यचरितः असौ गुरुः सुधीतल्लजैः विद्वच्छ्रेष्ठैः साकं निजगुरोः वेदव्यासस्य गुणान् स्तावं स्तावं स्तुत्वा स्तुत्वा आभीक्ष्ण्ये णमुल् । निशि प्रहरद्वयं नीत्वा ततोऽनन्तरं सर्वांस्तान् सुधीतल्लजान् तत्तद्गृहाप्तये तेषां तेषां गृहप्रवेशाय अनुमान्य अनु-ज्ञाप्येत्यर्थः । क्लप्तागमालोकनः कृतशास्त्रपूर्वावलोकनः सन् भुजङ्गे शेते इति भुजङ्गेशयं शेष-शयनं हरिं ' शयवासवासिष्वकलात् ' इत्यलुक् । मनसा ध्यायन् स्वयं दर्भकटे कुशास्तरणे शेते स्म ॥ ६१ ॥ इतीति । इति उक्तरीत्या धन्याग्रणीः गुरुः एवमादि इदंप्रभृति अन्यैः मनसापि

चान्यैर्धन्याग्रणीर्हरिपदार्चनमश्रमाणुः ( लुः ) ॥ कुर्वन्नहर्दिवमशेषदिशासु तेने कीर्तिं प्रवर्तितबुधार्तिहरैकचर्यः ॥ ६२ ॥

इति श्रीविद्याधीशविजये नवमः सर्गः ।

जयत्यजस्रं जगदेकनाथपादाम्बुजातप्रवणाशयालिः । आश्चर्यचर्यासदनं स विद्याधीशव्रतीन्द्रो बुधलोकचन्द्रः ॥ १ ॥ विधाय लोके विविधोक्तिजालैर्मुधा मतान्येव मुहुः परेषाम् । व्यधान्मना वारणसीप्रयाणे सुधारसास्वादसुखैकभूमिः ॥२॥ शर्माभियोगाय च सज्जनानां शर्मेतरार्थाय च दुर्जनानाम् । अञ्चन्निवासं जगतां त्रयाणामुवास मासांश्चतुरः स योगी ॥ ३ ॥ गोदावरीवारि निमज्ज्य जातु मोदादसौ निर्मितकल्यकर्मा । सास्था नतीश्चक्रभृते वितन्वन्नास्थानवेदीमविशद्विशालाम् ॥ ४ ॥ मध्यास्तीर्णं राङ्कवं चर्म तस्यामध्यासीने मौनिराजे तदानीम् । आर्या नेमुः सादरं पूर्णबोधाचार्याद्यास्तं शास्त्रचर्चानिवार्याः ॥ ५ ॥ सक-

---

किमुत कायेनेति भावः । असुकरं दुष्करं हरिपदार्चनं अश्रमाणुः ( लुः ) श्रमलेशरहितः सन् कुर्वन् किंचेति चार्थः । अहर्दिवं प्रवर्तिता बुधानां विदुषां आर्तिहरा एका मुख्या चर्या येन सः तथोक्तः सन् अशेष दिशासु कीर्तिं तेने विस्तारयामास ॥ ६२ ॥ इति श्रीमद्विद्याधीशविजये महाकाव्ये गदयक्रोणेरिणा जनार्दनसूरिकारिते नवमः सर्गः समाप्तः ॥ ९ ॥

अस्मिन्सर्गे कामदेवनिराकरणकथां प्रपञ्चयितुकामः कविस्तावत्तमेव गुरुं हर्षवशात्स्वयं स्तौति । जयेति । जगदेकनाथस्य हरेः पदाम्बुजाते चरणकमले प्रवणाशयालिः आसक्तचित्तभ्रमरः आश्चर्यचर्याणां सदनं स्थानीभूतः बुधलोकस्य विद्वज्जनस्य चन्द्रः चन्द्रवदाह्लादकः स विद्याधीशयतीन्द्रः अजस्रं जयति सर्वोत्कर्षेण वर्तते । अद्यापि कीर्तिलक्षणशरीरेणेति भावः । तदुक्तं दण्डिना 'आदिराजयशोबिम्बमादर्शं प्राप्य वाङ्मयम् । तेषामसन्निधानेऽपि न स्वयं पश्य नश्यति'॥ इति । अस्मिन्सर्गे नाना वृत्तानि । तावच्चत्वारिंशच्छ्लोका उपजातयः ॥१॥ कामदेवकथोपयोगितया तावदुपोद्घातं रचयति । विधायेति । सुधारसास्वादसुखैकभूमिः मुख्यस्थानभूतः गुरुः विविधोक्तिजालैः लोके परेषां मतानि मुधा व्यर्थानि मुहु विधाय वारणसी काशी 'वाराणसी वारणसी वारणस्यापि कथ्यते ।' इतिशब्दभेदप्रकाशे । तस्याः प्रयाणे तामुद्दिश्य गन्तुमित्यर्थः । मनो व्यधात् इच्छति स्म ॥२॥ शर्मेति । शर्माभियोगाय संतोषघटनाय तथा दुर्जनानां च शर्मेतरत् असुखं अर्थं प्रयोजनं तस्मै । त्रयाणां जगतां निवासं आधारभूतं हरिमित्यर्थः । अञ्चन् भजन् स योगी गुरुः चतुरो मासानुवास । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । चातुर्मास्यं धर्मपुर्यां वसति स्म ॥ ३ ॥ गोदावरीति । जातु कदाचित् गोदावर्याः वारि वारिणि निमज्ज्य मोदात् निर्मितकल्यकर्मा कृतप्रातःकृत्यः असौ गुरुः चक्रभृते हरये सास्थाः आस्थासहिताः नतीः प्रणामान् वितन्वन् विशालां आस्थानवेदीं अविशत् ॥ ४ ॥ मध्येति । मौनिराजे गुरौ तस्यां वेद्यां मध्ये आस्तीर्णं रङ्कुः मृगविशेषः । 'रङ्कुः स यद्रोमकृतं वस्त्रं राङ्कवमुच्यते ।' इति वैजयन्ती । रङ्कुसंबन्धि राङ्कवं तच्चर्म अध्यासीने सति 'अधिशीङ्स्थासां कर्म' इति कर्मत्वम् । तदानीं शास्त्रचर्यायां अनिवार्याः परैरजेयाः पूर्णबोधाचार्याद्याः आर्याः तं सादरं नेमुः । शालिनीवृत्तम् ॥

लानवलोक्य साधुदृष्ट्या कृतनारायणकीर्तनः कृपावान् । समभावयदग्रतोऽनपेतक्रममेतानुपवेशनाद्विनीतान् ॥ ६ ॥ अथ केचन पेठुरस्ततन्द्रप्रतिभाभेददिगन्तरप्रसिद्धाः । वसुधाविबुधाः सुधां पुरस्तात्पपरराद्धान्तपरासलब्धवर्णाम् ॥ ७ ॥ कृतपामसौ स्वेन गुरोः समुद्यदगण्यकारुण्यबलावलम्बात् । प्रख्यापयामास वितीर्णसौख्यां व्याख्यां सुधासारनिबद्धसख्याम् ॥ ८ ॥ परतन्त्रजातपटकर्तरिकां विवृतिं निपीय परिषत्सुधियाम् । अतिचित्रमोदकलनेन गलत्तुलसीदलं समधुनीत शिरः ॥ ९ ॥ प्रेरितेऽथ विधिना समये स्मिन्वारितोऽपि सुहृदां समवायैः । सूरितोद्यदवलेपभरौघापूरितोऽगमददः सद एकः ॥ १० ॥ मूर्तिमन्तमिव मोहसंग्रहं दर्पसारमिव दृष्टिगोचरम् । संचरन्तिमिव साहसोद्यमं यं चिरं जगति जानते जनाः ॥ ११ ॥ तत्तादृक्षं कामदेवाभिधानं वीक्ष्यास्थायां विद्वदग्रेसरास्ते । गूढाकारं सौगतं मन्यमाना रीढां चक्रु सस्मितास्याः सदस्याः ॥ १२ ॥ तदपि वीतविलज्जतया खलः

---

सकलानिति । कृपावान् स गुरुः सकलान् एतान् प्रणतान् साधुदृष्ट्या प्रसन्ननेत्रेण अवलोक्य कृतनारायणकीर्तनः सन् अग्रतः स्वपुरस्तात् अनपेतक्रमं अत्यक्तक्रमं यथा तथा उपवेशनात् विनीतान् नतान् समभावयत् संभावितवान् ॥ ६ ॥ अथेति । अथ उपवेशनानन्तरं अस्ततन्द्रेण जाड्यरहितेन प्रतिभाभेदेन स्वबुद्धिविशेषेण दिगन्तरप्रसिद्धाः केचन वसुधाविबुधा परेषां राद्धान्तनिरासे लब्धवर्णां विचक्षणां सुधां न्यायसुधां पुरस्तादग्रे पेठुः पठितवन्तः । चन्द्रिकावृत्तम् ॥ ७ ॥ कृपामिति । असौ गुरुः स्वगुरोः वेदव्यासस्य अगण्यकारुण्यबलावलम्बात् स्वेन आत्मना क्लृप्तां कृतां सुधासारेण अमृतधारया निबद्धसख्यां तद्वन्मधुरामित्यर्थः । अत एव वितीर्णसौख्यां श्रोतॄणां दत्तमोदां व्याख्यां सुधाविवृत्तीं प्रख्यापयामास प्रकटीचकार । स्वोक्तटीकारीत्या व्याचख्यावित्यर्थः ॥ ८ ॥ परेति । परेषां तन्त्राणि सिद्धान्ताः 'तन्त्रं प्रधाने सिद्धान्ते' इत्यमरः । तेषां जातं समूह एव पटः तस्य कर्तरिकां तच्छेदनकरीमित्यर्थः । विवृतिं सुधाटीकां निपीय सादरं श्रुत्वा सुधियां परिषत् सभा अतिचित्रमोदकलनेन अत्याश्चर्यहर्षभजनहेतुना गलत्तुलसीदलं स्रस्तकर्णलग्ननिर्माल्यतुलसीदलं यथा तथा शिरः समधुनीत धुतवती । 'धूञ् कम्पने' इति धातोः लङ् ॥ ९ ॥ प्रेरित इति । अथ अनन्तरं अस्मिन् समये विधिना दैवेन प्रेरितः अत एव सुहृदां समवायैः समूहैः 'समवायश्च यो गणः' इत्यमरः । वारितः 'मा गाः' इति निवारितोऽपि सूरितया वैदूष्येण उद्यतः उज्जृम्भमाणः तस्य अवलेपभरस्य गर्वातिशयस्य ओघेन प्रवाहेण आपूरितः पूर्णः कश्चिद्विमतः अदः सदः अमुष्य गुरोः सभां आगमत् । तज्जिगीषयेति भावः ॥ १० ॥ तत्स्वरूपं व्यनक्ति मूर्तिमन्तमिति । जगति जनाः यं मायिनं मूर्तिमन्तं मोहसंग्रहमिव दृष्टिगोचरं दर्पसारमिव संचरन्तं साहसोद्यममिव जानते । मोहादीनां स एव पराकाष्ठेति भावः ॥ ११ ॥ तन्नामकथनपूर्वकं तद्वृत्तान्तमाह तादिति । स एव तादृक्षः तत्तादृक्षः अद्वैतशास्त्रे निरुपम इत्यर्थः । तं कामदेवाभिधानं आस्थायां सभायां 'आस्थानीयत्नयोरास्था' इत्यमरः । विद्वदग्रेसराः ते सदस्याः पुर्णबोधाचार्याद्याः गूढाकारं सौगतं प्रच्छन्नबौद्धं मन्यमानाः सस्मितास्याः सन्तः तस्मिन् क्षुद्रबुध्द्येति भावः । रीढां अवज्ञां चक्रुः । 'रीढा

समधिगत्य समग्रसभान्तरा । यतिवरेण्यमलोकयदद्भुताकृतिमदभ्रसुधाकृतमज्जनम् ॥१३॥ तुलसीमणिमालिकालिराजद्गलसीमानमुदञ्चितोर्ध्वपुण्ड्रम्। अरिशंखगदाम्बुजातभास्वद्वरनारायणमुद्रिकाङ्कितान्गम् ॥ १४ ॥ स्वगुरूत्तमपादभक्तिलब्धाखिलशास्त्रार्णवपारमप्यगर्वम् । हरिताश्मदलाभया तुलस्या हरिपादार्पितया परीतकर्णम् ॥ १५ ॥ ततो यमेतस्य विदूर देशे कृतोपवेशस्तदुदारवाचाम् । धाटीं प्रगल्भार्थविभूषणैकपेटीं निजश्रोत्रपुटीं निनाय ॥ १६ ॥ सहसं गुरुणाभ्यधायि मायी कथमत्रेत्यपदेकृताभिशङ्कः । कथमित्यपि किं त्वयास्मदुक्तं सकलं तावदनूद्यतां जडेति ॥ १७ ॥ तदुदारवचोऽनुवादशक्तिः समुदीये न तदास्य यत्नतोऽपि । विनतातनयानुभूम (?) तस्य क्व नु दात्यूहशिशोरशोभनस्य ॥१८॥ उत्थाय वेगादुपजातभीतिर्व्यर्थाभिमानव्यथमानचेताः । दुष्टोऽथ याति स्म जवेन वस्त्राकृष्टो पि कैश्चित्कृतिभिर्विधुन्वन् ॥१९ ॥ अद्वैतवादे किल तत्त्ववादी विद्वत्प्रबर्हा विजिता म-

---

वमाननावज्ञा ' इत्यमरः ॥ १२ ॥ तदिदि । तदपि तथापि तैरेवमवमानितोऽपि खलः कामदेवाख्यः वीतलज्जतया निर्लज्जत्वेन हेतुना समग्रसभाया अन्तरा मध्यं अन्तरेत्यव्ययम् । अधिगम्य अदभ्रा अर्थभूयसी या सुधा न्यायसुधा तस्यां कृतमज्जनं सुधां व्याचक्षाणमित्यर्थः । अद्भुताकृतिं यतिवरेण्यं यतिश्रेष्ठं गुरुं अलोकयत् ॥ १३ ॥ द्वाभ्यां कुलकेन गुरुमेव विशिनष्टि । तुलसीति । तुलसीमणिमालिकानां अलिभिः पङ्क्तिभिः राजद्गलसीमानम् । उदञ्चितोर्ध्वपुण्ड्रम् ललाटे रचितोर्ध्वपुण्ड्रम् । अरिं चक्रं शंखः गदा च अम्बुजातं पद्मं भास्वती भासमाना वरा श्रेष्ठा नारायणमुद्रिका च ताभिरङ्कितान्गम् ॥ १४ ॥ स्वेति । पुनः किंविधम् । स्वगुरूत्तमस्य वेदव्यासस्य पादभक्त्या लब्धः अखिलशास्त्रार्णवानां पारो यस्य तम् । तथाप्यगर्वम् हरिताश्मदलस्य गरुत्मतमणिशकलस्य आभेव आभा यस्याः सा । तद्वद्धरिद्वर्णा इत्यर्थः । तया हरिपदार्पितया तुलस्या परीतकर्णं वेष्टितकर्णम् । आलोकयतेति पूर्वेणान्वयः ॥ १५ ॥ तत इति । ततो दर्शनानन्तरं एतस्य गुरोः विदूरदेशे समीपदेशे कृतोपवेशः सन् प्रगल्भार्था एव भूषणानि तेषां एकपेटीं मुख्याश्रयभूतामित्यर्थः । तस्य गुरोः उदारवाचां धाटीं निरङ्कुशव्यवहारं निजश्रोत्रपुटीं निनाय । तद्व्याख्यां शुश्रावेत्यर्थः ॥ १६ ॥ सहसमिति । मायी कामदेवः ' अत्र कथम् ' इति अपदे अस्थाने कृताभिशङ्कः सन् गुरुणा सहसं सस्मितं अभ्यधायि उक्तः । किमिति' हे जड कथमित्यपि किं ज्ञात्वा अत्र कथमिति उक्तवानसीत्यर्थः । तावत्प्रथमं अस्मदुक्तं सकलं त्वया अनूद्य उक्तार्थानुवादानन्तरं दूषणं देयमिति भावः । इत्यभिधायीत्यन्वयः ॥ १७ ॥ तदिति । तदा तदानीं तस्य गुरोः उदारस्य वचसः अनुवादशक्तिः यत्नतोऽपि अस्य खलस्य न समुदीये नोत्पन्ना । उक्तमेव दृष्टान्तेन द्रढयति । अशोभनस्य अमङ्गलस्य दात्यूहः कालकण्ठकाख्यपक्षिविशेषः । ' दात्यूहकालकण्ठकः ' इत्यमरः । तस्य शिशोः विनतातनयस्य वैनतेयस्य अनुभूमा (?) अनुगममाहात्म्यं क्व नु । न कुत्रापीत्यर्थः । दृष्टान्तालंकारः ॥ १८ ॥ उत्थायेति । उपजातभीतिः तदुक्तानुवादासामर्थ्यादिति भावः । अत एव व्यर्थाभिमानव्यथमानचेताः अयं दुष्टः मायी वेगादुत्थाय कैश्चित् कृतिभिः सभ्यविद्वद्भिः

येति । रुषा विषादोद्गतया स पुर्यां मृषावचो नीचमतिर्वितेने ॥ २० ॥ अपरेद्युरधीशिता यतीनां प्रहितं तेन गतत्रपेण पत्रम् । अशृणोज्जगतो यथार्थसत्त्वे किमु मानं लिखतेत्युदूढपद्यम् ॥२१॥ तत्पद्यभावकलनोद्गतमन्दहासज्योत्स्नाङ्कुरोल्लसितसन्नयनाम्बुजेन । ऊचे वचो गुरुवरेण च पूर्णबोधनामाभिनन्दितजगत्तदभिज्ञरत्नम् ॥ २२ ॥ कपटी भवतां पुरो निसर्गादपटीयानधरस्य कम्पनेऽपि । इदमेकमलीकमाकलय्य स्वयमुद्रावकृतोद्यमोऽद्य शङ्के ॥ २३ ॥ गत्वैकः कुशलमतिस्तदस्मदीयः शेमुष्या विजितमरिं विधाय वादे । आयातु स्फुटजयशङ्खतूर्यघोषप्रस्फूर्तिक्षुभितमहादिगन्तदन्ती ॥ २४ ॥ इति वादिनि पारिकाङ्क्षिचन्द्रे कृतिषूत्थाय विपश्चिदाशु कश्चित् । नरहर्यभिधानुरूपकोपः परतन्त्रोद्दलने गुरुं व्यनंसीत् ॥ २५ ॥ तदपाङ्गदृष्टिकलितानुशासनः प्रतिवादिदुष्टमृगसन्निरासनः । नृहरिः प्रपद्य नृहरेर्निकेतनं न्यषदत्स

---

जवेन वस्त्राकृष्टः प्रत्युत्तरं वेदत्याकृष्टवस्त्रोऽपि विधुन्वन् तान् विधुन्वानः सन् याति स्म गच्छति स्म ॥ १९ ॥ अद्वैतेति । तत्त्ववादिविद्वत्प्रबर्हाः मया अद्वैतवादे विजिताः किल इत्येवं नीचमतिः स मायी विषादेन पराभवदुःखेन उद्गतया रुषा हेतुना पुर्यां मृषा वचः असत्यवचनं वितेने विस्तारयामास ॥ २० ॥ अपरेद्युरिति । अपरेद्युः अन्येद्युः जगतां यथार्थसत्त्वे सत्यत्वसद्भावे मानं प्रमाणं किं लिखत अस्ति चेदिति भावः । इत्येवं उदूढपद्यं लिखितश्लोकं गतत्रपेण तेन मायिना प्रहितं प्रेषितं पत्रं यतीनां अधीशिता गुरुः अशृणोत् पठ्यमानं शुश्राव ॥ २१ ॥ तदिति । तस्य पद्यस्य श्लोकस्य भावकलनेन अभिप्रायावगमेन उद्गतायाः मन्दहासज्योत्स्नायाः अङ्कुरेण प्ररोहेण उल्लसिते विकासिते सन्नयनाम्बुजे यस्य तेन तथोक्तेन गुरुवरेण अभिनन्दितजगत् स्वचरित्रेण संतोषितसर्वलोकं पूर्णबोधनामा तत् प्रसिद्धं अभिज्ञरत्नं विद्वद्रत्नं पूर्णबोधाचार्यनामा विद्वच्छ्रेष्ठ इत्यर्थः । 'जातौ जातौ च यच्छ्रेष्ठं तद्रत्नमिति कथ्यते ।' इति धनंजय. ॥ वचः ऊचे वक्ष्यमाणरीत्या वचनमुक्तः ॥ २२ ॥ कपटीति । कपटी कुटिलः मायी भवतां पुरः अधरस्य कम्पनेऽपि निसर्गात् स्वभावात् अपटीयान् अत्यन्तमसमर्थः सन् इदमेकमलीकं पत्रिकाप्रेषणरूपं अप्रियं 'अलीकं त्वप्रियेऽनृते' इत्यमरः । आकलय्य कृत्वा अद्य स्वयं उद्रावे पलायने कृतोद्यमः कृतप्रयत्नः शङ्के एवं तर्कये ॥ २३ ॥ तर्हि किं कर्तव्यमित्यत्राह गत्वेति । तत्तस्मात्कारणात् कुशलमतिः अस्मदीयः एको विद्वान् गत्वा बहिर्निर्गत्य वादे अरिं विमतं शेमुष्या बुद्ध्या विजितं विधाय स्फुटेन जयेन लब्धा शंखस्य या शब्दप्रस्फुर्तिः घोषाभिवृद्धिः तया क्षुभितमहादिगन्तदन्ती सन् आयातु । विजयचिह्नशंखध्वनिपुरःसरं अस्मत्समीपं पुनरागच्छत्वित्याशयार्थः ॥ २४ ॥ इतीति । इत्येवं पारिकाङ्क्षिचन्द्रे योगिश्रेष्ठे इत्येवं वादिनि सति कृतिषु मध्ये कश्चित् विपश्चित् आशु उत्थाय परतन्त्रोद्दलने विमतसिद्धान्तखण्डनविषये नरहरिरित्यभिधायाः स्वनाम्नः अनुरूपकोपः नृसिंहावतारस्यात्युग्रत्वात्तन्नामधेयानुगुणकोपः सन् गुरुं व्यनंसीत् प्रयाणप्रणामं कृतवान् । 'क्रिया केवलमुत्तरम्' इतिन्यायादिति भावः । ॥ २५ ॥ तदिति । तस्य गुरोः अपाङ्गदृष्ट्या कलितानुशासनः कृतानुज्ञः प्रतिवादिनः एव दुष्टमृगाः तेषां सन्निरासनः स्वयं नरहरित्वादिति भावः । स नृहरिः नरहरिआचार्यः नृहरेः

सौधपुरतः सकेतनम् ॥ २६ ॥ तत्रातिचित्रासनमध्यवर्ती सत्रा सुधीभिर्बुधचक्रवर्ती । स प्राहिणोन्मायिखलोपकण्ठं विप्राननेकानपभीरकुण्ठम् ॥ २७ ॥ पुरि ते परितो विमृग्य यत्नाच्चिरमद्राक्षुरुपेत्य कामदेवम् । तमदभ्रभयेन रामभद्राश्रमिभिक्षोर्गृहकुक्षिमत्यजन्तम् ॥ २८ ॥ स्मित्वा संजगदुरमी निमीलिताक्षं मत्वा तं तृणमितरे हरेरगारे । सौधाग्रे नरहरिसूरिराट्स्थितस्त्वां वादार्थं मृगयति नास्ति किं त्रपा ते ॥ २९ ॥ निर्भर्त्सितोऽपि तैरेवं मायी नायातुमैहत । उपकण्ठं नृसिंहस्य शृगाल इव कुण्ठधीः ॥३०॥ तं भीतभीतमतिमेक्ष्य कृतप्रहासैस्तैरेत्य जल्पितममुष्य खलस्य वृत्तम् । आकर्ण्य सस्मितमुखो नृहरिर्जयाब्जघोषाभिपूर्णहरिदाप गुरोः सकाशम् ॥ ३१ ॥ स विहाय धर्मनगरीमधिक्षपं यतिराजमान्त्रिकभयाकुलाशयः । द्रवति स्म सत्वरमलक्षितो जनैरपि कामदेवखलदुर्दमग्रहः ॥ ३२ ॥ इति सकलसुधीभिः साकमाश्चर्यचर्यासदनममलकीर्तिक्षालिताशान्तरालः । यतिमणिरभिरामश्रीशपादारविन्दप्रवणितनिजचित्ताभृङ्गः स रेजे ॥ ३३ ॥ तत्रैव वेदनिधियोगिनि

---

श्रीनृसिंहस्य निकेतनं आयतनं प्रपद्य सौधपुरतः देवालयाग्रस्थसौधप्राग्भागे सकेतनं सध्वजं यथा तथा न्यषदत् निषसाद ॥ २६ ॥ तत्रेति । तत्र सौधाग्रे सुधीभिः सत्रा साकं चित्रासनमध्यवर्ती बुधचक्रवर्ती विद्वच्छ्रेष्ठः स नृहरिः अपभीः सन् अकुण्ठं अनिवारितं यथा तथा मायिनः खलस्य उपकण्ठं समीपं अनेकान् विप्रान् प्राहिणोत् तदाह्वानाय प्रहितवान् ॥२७॥ पुरीति । ते विप्राः पुरि पुर्यां चिरं यत्नात्परितो विमृग्य उपेत्य किंचित् स्थलमवाप्य अदभ्रभयेन अधिकभीत्या रामभद्राश्रमिभिक्षोः रामभद्राश्रमिनाम्नः कस्यचिन्मायिभिक्षोः गृहकुक्षिं गृहाभ्यन्तरकोणं अत्यजन्तं तत्रैवस्थितमित्यर्थः । कामदेवं अद्राक्षुः ॥ २८ ॥ स्मित्वेति । अमी विप्राः निमीलिताक्षम् भयेन निमीलितनयनं तृणं मत्वा 'मन्यकर्मण्यनादरे विभाषा प्राणिषु' इति विकल्पाद्द्वितीया । स्मित्वा इति वक्ष्यमाणरीत्या संजगदुः । रे कामदेव नरहरिसूरिराट् हरेः अगारे सौधाग्रे स्थितः सन् त्वां वादार्थं मृगयति । ते तव त्रपा नास्ति किम् ? । अस्तिचेदागच्छेति भावः ॥ २९ ॥ निर्भर्त्सित इति । तैः विप्रैरेवं निर्भर्त्सितोऽपि मायी शृगालः जम्बूक इव कुण्ठधीः प्रतिहतबुद्धिः नृसिंहस्य नृहरेः उपकण्ठं आयातुं नैच्छत् न इच्छति स्म । न हि सिंहसमीपं जम्बुको गच्छतीति भावः ॥ ३० ॥ तमिति । भीतभीतं अत्यन्तभीतबुद्धिं तं खलं एक्ष्य कृतप्रहासैः तैः विप्रैः एत्य जल्पितं उक्तं अमुष्य खलस्य वृत्तं आकर्ण्य सस्मितमुखः नरहरिः जयाब्जघोषेण अभिपूर्णा हरितोः दिशो यस्य स तथा सन् गुरोः सकाशमाप ॥ ३१ ॥ स इति । यतिराज एव मान्त्रिकः ग्रहोच्चाटनमन्त्रज्ञः तस्माद्भयाकुलाशयः सन् सः कामदेवः खल एव दुर्दमग्रहः दुर्निवारपिशाचोऽपि अधिक्षपं रात्रौ धर्मनगरीं विहाय जनैरलक्षितः सन् सत्वरं द्रवति स्म ॥ ३२ ॥ इतीति । इत्युक्तरीत्या आश्चर्यचर्यायाः सदनं स्थानीभूतः । अमलकीर्त्या क्षालिताशान्तरालः शोधितदिङ्मण्डलः । अभिरामस्य श्रीशस्य पादारविन्दे प्रवणितनिजचित्तभृङ्गः स यतिमणिः विद्याधीशगुरुः सकलसुधीभिः साकं रेजे ॥ ३३ ॥ तत्रेति । तत्र धर्मपुर्यामेव मूलरामचन्द्राकृतिं अनेकान् बुधांश्च वेदनि-

मूलरामचन्द्राकृतिं च विनिधाय बुधाननेकान् । आप्तैः समं सपदि वृद्धसुरस्रवन्तीं तीर्त्वा धनेशहरितं यतिराट् प्रतस्थे ॥ ३४ ॥ स स्कन्धदेशधृतदिग्विजयाभिरामरामाकृतिर्मृदुपदाब्जकृतप्रचारः । मन्त्रीश्वरैरनुगतो बहुभिर्वराणि पश्यन् पुराणि ववले भवलेपदूरः ॥ ३५ ॥

इति श्रीमद्विद्याधीशविजये महाकाव्ये गदयकोनेरिणा विनिर्मिते दशमः सर्गः ॥

ततः स रेवां समतीत्य मार्गे प्रयागमेत्य प्रयतान्तरङ्गः । क्लृप्तत्रिवेणीसलिलावगाहश्चक्रेऽर्चनं चक्रभृतो यतीन्दुः॥१ ॥ततः सकाशं गुणवारिराशिरवाप्य धूताखिलपापराशिम् सस्नौ मुकुन्दीयपदारविन्दकनन्मरन्दे मणिकर्णिकायाम् ॥२॥ उमाधवं विश्वपतिं स बिन्दुरमाधवं च प्रणिपत्य तत्र । उवास मासं वरमध्वशास्त्रव्याख्यासमाख्यापितबुद्धिसारः ॥३॥ ब्रम्हेन्द्रनामा यतिभूमिकाप्तिप्रच्छादितप्राग्जनिदैत्यभावः । सोऽभूददः साधुगुणाभितप्तनाराचधाराप्रविदीर्णकर्णः ॥४॥ स दुष्टचेताः स्वमरिष्टमिष्टप्रायं तदा दुष्टचतुष्टयेन । संमन्त्र्य किंचिच्चकमे यतीन्दोर्द्रोहाय मोहायतचित्तवृत्तिः ॥ ५ ॥ अदोऽन्तिकं प्रेषयदागमेषु

---

धियोगिनि वेदनिधियोगिवशे इत्यर्थः । निधाय यतिराट् गुरुः आप्तैः समं सपदि वृद्धसुरस्रवन्तीं वृद्धगङ्गां तीर्त्वा धनेशहरितं उत्तरदिशं प्रतस्थे बदरिकाश्रमजिगमिषया प्रस्थितवान् ॥३४॥ स इति । भवलेपदूरः स गुरुः स्कन्धदेशेन धृतदिग्विजयाभिरामस्य दिग्विजयरघुनाथस्य रामा मनोज्ञा आकृतिः प्रतिमा यस्य सः । तथा मृदुपादाब्जाभ्यां कृतप्रचारः । तथा बहुभिः मन्त्रीश्वरैः अनुगतः वराणि श्रेष्ठानि पुराणि मार्गे नगराणि पश्यन् ववले चलति स्म ।

इति श्रीविद्याधीशविजयव्याख्यायां दशमः सर्गः ॥

**तत इति**। ततः अनन्तरं प्रयतान्तरङ्गः सः यतीन्दुः मार्गे रेवां नर्मदानदीं समतीत्य प्रयागमेत्य क्लृप्तत्रिवेणीसलिलावगाहः सन् चक्रभृतः चक्रपाणेः हरेः अर्चनं चक्रे । अस्मिन्सर्गे उपजातिवृत्तम् ॥१॥ **तत इति** ।गुणवारिराशिः। स गुरुः ततः प्रयागक्षेत्रात् धूतः अखिलानां जनानां पापराशिर्यया सा तथा तां काशीमवाप्य मुकुन्दीयस्य मुकुन्दसम्बन्धिनः । 'वृद्धाच्छः' इति छप्रत्ययः । पदारविन्दस्य कनन् भासमानः मरन्दः मकरन्दभूता मुकुन्दपादारविन्दोद्भूता इत्यर्थः । तस्मिन् । मणिकर्णिकायां सस्नौ ॥२॥ **उमेति**। तत्र काश्यां स गुरुः उमाधवं विश्वपतिं बिन्दुरमाधवं बिन्दुमाधवं च प्रणिपत्य वरस्य मध्वशास्त्रस्य व्याख्यायां समाख्यापितः सम्यक् प्रख्यापितः बुद्धिसारः निजबुद्धिबलं यस्य सः तथा सन् मासं मासप्रमितकालं उवास ॥३॥ **ब्रह्मेति** यतेः संन्यासिनः भूमिका वेषः तदाप्त्या तद्ग्रहणेन प्रच्छादितः प्राग्जन्यां प्राग्जन्मनि दैत्यभावः।प्राग्जन्मनि दैत्य एव इदानीं विप्रशरीरेण संन्यस्त इत्यर्थः। ब्रह्मेन्द्रनामा स दैत्यः अदः अमुष्य गुरोः साधवः प्रशस्ता ये गुणाः ते एव अभितप्तनाराच— धाराः ताभिः प्रविदीर्णकर्णः विदारितश्रोत्रः अभूत् । तद्गुणाकर्णनेनात्यन्तं दुःखितोऽभूदित्यर्थः ॥४॥ **स इति** । दुष्टचेताः मोहेन अज्ञानेन आयती दीर्घा चित्तवृत्तिर्यस्य सः तथा। स ब्रह्मेन्द्रः स्वं स्वकीयमरिष्टं स्वस्यारिष्टकरं तथापि इष्टप्रायं इष्टवत्प्रतीयमानं किमपि किंचित्कार्यं दुष्टानां चतुष्टयेन चतुर्भिर्दुष्टैः सहेत्यर्थः 'संख्याया अवयवे तयप्' । संमन्त्र्य यतीन्दोः द्रोहाय चकमे । तस्मै द्रोग्धुमि

प्रौढान् स मूढः कितिचित्सगर्वान् । विपश्चितस्तेऽपि समेत्य तादृक्व्याख्यां गुरोः शुश्रुवुरादृतेन ॥ ६ ॥ अकाण्डशङ्काङ्कुरमादधाना मध्येसभं ते कृतिभिर्मठीयैः । प्रत्युत्तरेण प्रसभं निरस्ताः स्रस्ताभिमाना सहसा प्रचेलुः ॥ ७ ॥ स्वयत्नवैफल्यकृताभ्यसूयो ब्रह्मेन्द्रदण्डी बहुलार्थदानैः । जिघांसयेव प्रजिघाय योधान् म्लेच्छान् महेच्छस्य समीपमस्य ॥ ८ ॥ उदायुधास्ते व्यगमन्न यावत्तावद्धरेः प्रेरणयैव धीरः । साकं स्वकीयैः सुजनैः सुखेन गयामयासीन्नियमिप्रवेकः ॥ ९ ॥ अफल्गुफल्गुन्यमलाम्बुक्लृप्तावगाहकर्मा स हि निर्ममेन्दुः । वटाग्रजाग्रद्वनजातनेत्रपवित्रपादानतिमाततान ॥ १० ॥ स तत्र हर्यर्चनमारचय्य तीर्थेनसार्थीकुरुते स्म लोकान्। यद्बिन्दुसंसर्गवशादनार्द्राप्येधोवृतिः पल्लविनी बभूव ॥ ११ ॥ अलोकसामान्यमहानुभावनिर्वर्णनेनास्य नितान्तनम्रः । गयावलीसंज्ञितविप्रवर्गो विश्वोऽप्यतोऽगाहत विष्णुदीक्षाम् ॥ १२ ॥ ये ये दिगन्तादनुजग्मुरेनं सर्वेऽपि ते तत्कृ-

---

च्छति स्म ॥५॥ तद्द्रोहमेवाह अद इति । मूढः स यतिः आगमेषु प्रौढान् सगर्वान् कतिचिद्विपश्चितः अमुष्य गुरोः अन्तिकं अदोऽन्तिकं प्रैषयत् । तं वादे निरा कुरुतेति प्रहितवान् । ते विपश्चितोऽपि समीपं गुरुसमीपमेत्य गुरोस्तादृङ् निरुपमां व्याख्यां अद्भुतेन शुश्रुवुः ॥ ६ ॥ अकाण्डेति । मायिविपश्चितः मध्येसभं सभामध्ये 'पारे मध्ये षष्ठ्या वा' इत्यव्ययीभावः । पूर्वपदस्य एदन्तत्वम् । अकाण्डशङ्काङ्कुरं अनवसरकाले शङ्का आदधानाः कुर्वन्तः मठीयैः कृतिभिः विद्वद्भिः प्रत्युत्तरेण प्रत्युत्तरदानेन प्रसभं बलात् निरस्ताः निराकृताः स्रस्ताभिमानिनः गलिताहंकाराः सन्तः सहसा प्रचेलुः जग्मुः ॥ ७ ॥ स्वेति । ब्रह्मेन्द्रदण्डी ब्रह्मेन्द्रयतिः स्वयत्नस्य गुरुनिराकरणलक्षणस्य वैफल्येन वैयर्थ्येन हेतुना कृताभ्यसूयः सन् बहुलानां अर्थानां द्रव्याणां दानैः म्लेच्छान् योधान् भटान् महेच्छः महाशयः 'महेच्छस्तु महाशयः' इत्यमरः । तस्य अस्य गुरोः जिघांसयैव प्रजिघाय ॥ ८ ॥ उदेति । उदायुधाः उद्धृतायुधाः ते म्लेच्छभटाः अपि यावन्नागमन् स्वान्तिकं नागच्छंस्तावत् ततः प्रागेव हरेरेव न तु पुरुषान्तरस्येति भावः । प्रेरणया धीरः नियमिप्रवेकः मौनिश्रेष्ठः गुरुः स्वकीयैः स्वजनैः साकं गयां अयासीत् । यातेः कर्तरि लुङ् ॥ ९ ॥ अफल्गिति । अफल्गुनि अतुच्छे प्रशस्ते 'असारं फल्गु' इत्यमरः । फल्गुन्याः फल्गुनी नद्याः अमलाम्बुनि क्लृप्तावगाहः कृतस्नानः सन् स निर्ममेन्दुः निरहङ्कारश्रेष्ठः गुरुः 'निर्ममो निरहङ्कारः' इत्यमरः । वटाग्रेषु जाग्रतां स्पष्टत्वेन वर्तमानानां वनजातनेत्रस्य पुण्डरीकाक्षस्य हरेः पवित्राणां पादानां आनतिं नमस्कारं आततान । गयायां विष्णुपदं नमश्चकार ॥ १० ॥ स इति । स गुरुः तत्र हर्यर्चनमारचय्य कृत्वा तीर्थेन तीर्थदानेन लोकान् जनान् सार्थीकुरुते स्म । तत्तीर्थमाहात्म्यमाह यदिति । यस्य तीर्थस्य बिन्दुसंसर्गवशात् हेतोः अनार्द्रा शुष्कापि एधसां समिधां वृतिः आवरणं पल्लविनी पल्लववती बभूव । बदरीशुष्ककाष्ठावरणं तीर्थबिन्दुपातात्पल्लवितेति प्रसिद्धम् ॥ ११ ॥ अलोकेति । गयावलीति संज्ञा येषां ते गयावलीसंज्ञिताः विप्राः तेषां वर्गः अस्य गुरोः सम्बन्धिनः । सापेक्षत्वेऽपि गमकत्वात्समासः । लोकसामान्यो न भवतीति अलोकसामान्यः तस्य महानुभावस्य महामहिम्नः निर्वर्णनेन दर्शनेन हेतुना नितान्तं नम्रः विनीतः सन् अतः गुरोः

पया द्विजेन्द्राः । पितॄणतो मुक्तिमवारणीयादवापुरत्राकृतयत्नलेशाः ॥ १३ ॥ वृन्दावनं गोकुलमाकुलानि कुर्वन्मनांसि द्विषतां मुकुन्दम् । असौ कुरुक्षेत्रमपीक्षते स्म मध्ये सरण्या मधुरामयोध्याम् ॥ १४ ॥ स तत्र तत्रायतनेषु साक्षाल्लक्ष्मीपतेरीक्षणवैभवेन । अवन्ध्यतां संसृतिबन्धदूरः सद्यो जनुर्नायनमानिनाय ॥ १५ ॥ क्वचिन्महाकाननमध्यदेशे कृतासिकं तं निशि चोरवर्गः । अवाप सौवर्णमयीति बुध्या रामारकूटप्रतिमां जिघृक्षुः॥१६॥ स्मित्वा समस्तानवदद्गुरुस्तान्यूयं नृपस्यालयचौर्यधुर्याः । आकिंचनानामिह नः समीपमागत्य हास्यास्पदतामयध्वे ॥ १७ ॥ इत्यादिवाक्यान्यवकर्ण्य तस्य माहात्म्यसंशीलनभीतभीताः । स्तेनाः प्रणम्यास्तभयं तमुच्चैर्विनीतभावेन विनिर्ययुस्ते ॥ १८ ॥ महान्ति कृच्छ्राणि विधूय मार्गे स योगिचन्द्रो बदरीमयासीत् । निरस्तनिस्तन्द्रतमस्ततिर्द्राक् पूषेव पूर्वाद्रितटीं

---

सकाशाद्विश्वः सर्वोऽपि विष्णुदीक्षामगाहत । वैष्णवा बभूवुरित्यर्थः ॥ १२ ॥ य इति । ये ये दिगन्तादेनं गुरुमनुजग्मुस्ते सर्वेऽपि द्विजेन्द्राः तस्य गुरोः कृपया अत्र गयायां अकृतयत्नलेशाः गयावलीनां द्रव्यदानादिप्रयत्नलेशमकुर्वन्त एव अवारणीयात् अपरिहार्यात् पितृणां ऋणं पितॄणं तस्मात्पितॄणतः मुक्तिमवापुः । अप्रयत्नेन गयावर्जनं चक्रुरित्यर्थः ॥ १३ ॥ वृन्दावनमिति । असौ गुरुः सरण्याः मार्गस्य मध्ये मुकुन्दं द्विषतां मुकुन्दद्वेषिणां मनांसि आकुलानि कुर्वन् वृन्दावनं गोकुलं मधुरां च कुरुक्षेत्रं च अयोध्यामपि ईक्षते स्म । वृन्दावनादिपुण्यक्षेत्राणि मार्गवशाद्गत्वा तत्रत्यहरिं ददर्श इत्याशयार्थः ॥ १४ ॥ स्वाशयार्थमेव विशदयति स इति । संसृतिबन्धदूरः सः गुरुः तत्र तत्र आयतनानि देवागाराणि 'देवसद्मन्यायतनं देवमार्गेऽपि कथ्यते ।' इति वैजयन्ती । तेषु लक्ष्मीपतेः साक्षादीक्षणवैभवेन दर्शनमहिम्ना सद्यः नायनं नयनसम्बन्धि जनुः जन्म अवन्ध्यतां सफलतां आनिनाय नीतवान् । नयतेर्द्विकर्मकात्लिट् ॥ १५ ॥ क्वचिदिति । क्वचित् कुत्रचित् बदरिकाश्रममार्गे महाकाननमध्यदेशे कृता आसिका स्थितिर्येन सः 'आस् उपवेशने' इत्यस्माद्धातोः 'धात्वर्थनिर्देशे ण्वुलवक्तव्यः' इति ण्वुल् । तं गुरुं निशि चौरवर्गः रामस्य दिग्विजयरामचन्द्रस्य आरकूटप्रतिमां 'रीतिः स्त्रियामारकूटः' इत्यमरः । सौवर्णमयीति बुध्या जिघृक्षुः गृहीतुमिच्छुः अवाप ॥ १६ ॥ स्मित्वेति । गुरुः स्मित्वा समस्तान् तानवदत् । किमिति नृपालयेषु राजमन्दिरेषु चौर्यधुर्याः चौर्यनिर्वाहकाः यूयं इह अस्मिन्वने अकिंचनानां दरिद्राणां नः अस्माकं समीपमागत्य हास्यास्पदतां अयध्वे भजथ । राजगृहेष्वनर्घ्यमाणिक्यादिवस्तुहारिणां युष्माकं अस्मद्विधदरिद्रतुच्छवस्तुकामना विडम्बनैवेत्यर्थः ॥ १७ ॥ इतीति । ते स्तेनाः चोराः तस्य गुरोः इत्यादिवाक्यानि आकर्ण्य श्रुत्वा माहात्म्यस्य महिम्नः संशीलनेन परामर्शेन भीतभीताः अत्यन्तं भीताः सन्तः अस्तभयं निर्भयं तं गुरुं उच्चैः प्रणम्य विनीतभावेन नम्रत्वेन उपलक्षिताः निर्ययुः विनिर्ययुः ॥ १८॥ महान्तीति । सः योगिचन्द्रो गुरुः मार्गे महान्ति कृच्छ्राणि चौरव्याघ्राद्युपद्रवान् विधूय निराकृत्य पूषा सूर्यः प्रभाते निरस्ता निस्तन्द्राणां उज्जृम्भितानां तमसां ततिर्येन सः तथा सन् द्राक् पूर्वाद्रेः उदयाचलस्य तटीमिव बदरीं बदरिकाश्रमं अया-

प्रभाते ॥ १९ ॥ स तत्र नारायणमादिदेवं नत्वा नरं चानतपारिजातम् । स्तवैः प्रशस्तैः स्तवनीयरूपौ तुष्टाव तुष्टावतिमग्नचेताः ॥ २० ॥ तत्सेवया कानिचिदुत्सवेन नीत्वा दिनो न्येष मनीषिसंघैः । प्रसादमासाद्य तदीयमन्तर्मेने कृतार्थं स्वमनन्यकृत्यः ॥ २१ ॥ ततो निवृत्तो गुरुरेकचक्रापुरीं परीताखिलसज्जनालिः । कालिन्दशीताचलकन्यकोद्यद्वेण्यन्तरे प्राप विभासमानाम् ॥ ॥ २२ ॥ योगेन तत्रात्मतनुं जिहीर्षुर्वगाह्य गङ्गासलिलं स जातु । आराध्य साक्षादरविन्दनाभमभोजयद्ब्रम्हकुलानि मृष्टम् ॥ २३ ॥ स्वयं मुकुन्दाङ्घ्रिसरोरुहाम्बुमात्रेण निर्वर्तितभैक्षकार्यः । निर्माय सायं हरये नतीनां शतानि दर्भासनमाससाद ॥ २४ ॥ संभावयन् केशवरामधीमत्पुरःसरान्भूमिसुरान्पुरस्तात् । कृपार्द्रदृष्ट्या कलितावलोकः सस्मेरवक्त्रेन्दुरिदं जगाद ॥ २५ ॥ विनैव यत्प्रेरणमिन्दिरापि ब्रम्हेशपूर्वामरवन्दिताङ्घ्रिः । नेष्टे परिस्पन्दितुमप्यमुष्मान्नारायणाद्दैवतमस्ति नान्यत् ॥२६॥ वशंवदोऽस्यैव भृशं कृपालुरानन्दतीर्थाभिधयावतीर्य । जगत्यकार्षीज्जगदेकजीवः सद्दर्शनं दर्शितदुर्गमार्गः॥२७॥

---

सीत । उपमालंकारः ॥१९॥ स इति । स गुरुः तत्र बदर्यां तुष्टौ हर्षे अतिमग्नचेताः सन् आदिदेवं नारायणं आनतानां प्रणतानां पारिजातं इष्टदातारमित्यर्थः । नरं च स्तवनीयरूपौ स्तुत्यरूपौ नरनारायणौ प्रशस्तैः स्तवैः तुष्टाव ॥ २० ॥ तदिति । एष गुरुः तयोः नरनारायणयोः सेवया मनीषिसङ्घैः साकं कानिचित् दिनानि उत्सवेन नीत्वा तदीयं नरनारायणसंबन्धिनं प्रसादमासाद्य अनन्यकृत्यः कृत्यान्तररहितः सन् अन्तर्मनसि स्वं आत्मानं कृतार्थं मेने । यदर्थोऽयं प्रयास इति भावः ॥ २१ ॥ तत इति । गुरुः ततो बदरिकाश्रमात् निवृत्तः सन् परीताखिलसज्जनालिः सकलसज्जनसमूहवृतः सन् कलिन्दः कलिन्दाद्रिः शीताचलः हिमाद्रिः तयोः कन्यके यमुनागङ्गाख्यसरितौ तयोः उद्यन्त्योः प्रवहन्त्योः वेण्योः अन्तरे मध्ये विभासमानां एकचक्रापुरीं प्राप ॥ २२ ॥ योगेनेति । स विद्याधीशगुरुः तत्र एकचक्रानगर्यां योगेन आत्मतनुं जिहासुः हातुमिच्छुः जातु कदाचित् गङ्गासलिलं वगाह्य अवगाह्य 'वष्टि भागुरिः' इत्यादिना अकारलोपः । अरविन्दनाभं पद्मनाभं हरिं साक्षात् स्वयमेवेत्यर्थः । आराध्य ब्रम्हकुलानि ब्राह्मणसमूहान् मृष्टं मिष्टान्नं अभोजयत् भोजयामास ॥२३॥ स्वयमिति । गुरुः स्वयं मुकुन्दाङ्घ्रिसरोरुहाम्बुमात्रेण हरिपादोदकेनैव निर्वर्तितभैक्ष्यकार्यः उदकमेव भैक्ष्यत्वेनाश्नन्नित्यर्थः । सायं नतीनां शतानि हरये निमार्य कृत्वा दर्भासनमाससाद ॥ २४ ॥ संभावयन्निति । स विद्याधीशः केशवरामधीमत्पुरःसरान् पुरस्तादग्रे संभावयन् तथा कृपार्द्रदृष्ट्या कलितावलोकः कृतवीक्षणः सन् स्मेरवक्त्रेन्दुः सस्मितमुखचन्द्रः इव वक्ष्यमाणं जगाद ॥ २५ ॥ तदुक्तिमेव षट्श्लोकेनाह विनेति । ब्रम्हेशपूर्वामरैः वन्दिताङ्घ्रिः इन्दिरा श्रीरपि यस्य हरेः प्रेरणं विनैव परिस्पन्दितुं चलितुमपि नेष्टे न समर्था । अमुष्मान्नारायणात् अन्यद्दैवतं नास्ति । स एव देवता इत्यर्थः ॥ २६ ॥ वशंवद इति । अस्यैव हरेः वशंवदः वशवर्ती भृशं कृपालुः जगदेकजीवो मुख्यप्राण आनन्दतीर्थ इत्यभिधया नाम्ना उपलक्षितः जगति अवतीर्य दर्शितदुर्गमार्गः दर्शितहरिसर्वोत्त-

स एव शास्ता गुरुरात्मबन्धुर्मध्वो दुरध्वोध्दृतिबद्धदीक्षः । तदीरणं केवलमप्रबोध-दुःसाध्यरोगोद्धरणौषधं नः ॥ २८ ॥ मध्ये तदन्ते वसतां यतीनामाश्चर्यचर्यो गुरुरस्मदीयः । यस्यैककारुण्यबलावलम्बी बिम्बं हरेरस्पृशमस्तशङ्कः ॥ २९ ॥ यथा तदीयाज्ञमिदंदिनान्तं परेशपूजापरतन्त्र एव । साकं भवद्भिः समयाननैषं श्रीमध्वराद्धान्तपथाध्वनीनः ॥ ३० ॥ रामाकृतिं दिग्विजयाभिरामां प्रगृह्य चेतः प्रतियात यूयम् । जनेऽत्र यद्गौरवमाहितं वस्तदेव वेदाद्यनिधौ विधेयम् ॥ ३१ ॥ इत्युक्तिसंसूचितसन्निकृष्टस्वकालधर्मः स हि निर्ममेन्दुः । निनाय रात्रिं नियमेन हार्दसौहार्दसंश्लिष्टजनार्दनाङ्घ्रिः ॥ ३२ ॥ शुगद्भुतत्रासरसाब्धिमग्नैस्तदा सुधीभिः श्रुततद्वचोभिः । धूतेतिकृत्यप्रतिपत्तिचित्तैरप्रापि चित्रप्रतिमोपमैव ॥३३॥ प्रातः प्रजाधीश्वरहायनाद्येत्सहस्यमासासितभूतघस्रे विश्वैकहृद्याचरितः

---

मादिदुष्प्रापमार्गः सन् सद्दर्शनं सच्छास्त्रं अकार्षीत् ॥२७॥ स इति । दुरध्वानः जगन्मिथ्येति दुर्मार्गवर्तिनः तेषां उद्धृतौ उन्मूलने बद्धदीक्षः स मध्व एव नः अस्माकं शास्ता शिक्षकः गुरुश्च आप्तबन्धुश्च । तस्य मध्वस्य ईरणं वाक्यं केवलं परं अप्रबोधः अज्ञानमेव दुःसाध्यरोगः असाध्यव्याधिः तस्य उद्धरणे नाशने औषधम् ॥ २८ ॥ मध्य इति । तस्य मध्वस्य अन्ते वसतां शिष्याणां पद्मनाभतीर्थप्रभृतीनां मध्ये अस्मदीयो गुरुः वेदव्यासः इत्याशयः 'गुरोर्नाम न गृह्णीयाच्छिष्यो भार्या पतेरपि ।' इति स्मरणात् । आश्चर्यचर्यः अद्भुतचरित्रः । यस्य गुरोः कारुण्यबलावलम्बी अहमिति शेषः । अस्तशङ्कः निर्भयः सन् 'शङ्का वितर्कभययोः' इति विश्वः । हरेर्बिम्बं रामप्रतिमां अस्पृशम् एतावत्कालं स्पृष्टवान् । न तु मम योग्यतयेति भावः ॥ २९ ॥ यथेति । तदीयाज्ञामनतिक्रम्य यथातदीयाज्ञम् 'सादृश्ये' इत्यव्ययीभावः । इदंदिनान्तं एतद्दिनपर्यन्तं परेशस्य रामस्य पूजापरतन्त्रः पूजासक्त एव तथा श्रीमध्वराद्धान्तपथे अध्वनीनः अध्वगः सन् मध्वशास्त्रं व्याकुर्वाणः सन्नित्यर्थः । अहमिति शेषः । भवद्भिः साकं समयान् कालान् अनैषम् नीतवान् ॥ ३० ॥ तेषां कर्तव्यमुपदिशति । रामेति । किंच दिग्विजये अभिरामां रामाकृतिं दिग्विजयपदेन दिग्विजयरामप्रतिमामित्यर्थः । प्रगृह्य यूयं इतः प्रतियात एतत्पुरात्प्रतिगच्छत । यातेर्लोट् । अत्र अस्मिन् जने मयीत्यर्थः । यत् गौरवं यादृक् गुरुभावः युष्माकं आहितं युष्माभिः कृतं 'कृत्यानां कर्तरि वा' इति षष्ठी । तदेव वेदाद्यनिधौ वेदनिधौ विधेयम् । स एव वः गुरुरिति भावः ॥ ३१ ॥ इतीति । इत्येवमुक्तिभिः संसूचितः सन्निकृष्टः आसन्नः स्वकालधर्मः यस्य सः तथा । 'स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः ।' इत्यमरः । स निर्ममेन्दुः विद्याधीशो गुरुः हार्देन हृत्संबन्धिना सौहार्देन स्नेहेन संश्लिष्टजनार्दनाङ्घ्रिः सन् नियमेन रात्रिं निनाय ॥ ३२ ॥ शुगिति । तदा समये तद्वचोभिः अत एव शुक् तन्मरणपर्यालोचनया दुःखं अद्भुतं तदीयज्ञानालोचनया आश्चर्यं त्रासः तादृगापद्वगत्या भयं च तेषां रसाब्धौ मग्नैः धूतेतिकृत्यप्रतिपत्ति निरस्तकर्तव्यज्ञानं चित्तं येषां ते तथोक्तैः चित्रप्रतिमोपमा अप्रापि प्राप्ता । निश्चलाङ्गैः स्थितमित्यर्थः ॥ ३३ ॥ प्रातरिति । प्रातः प्रजाधीश्वरहायने प्रजापतिसंवत्सरे उद्यतः सहस्य-

**स विद्याधीशो रमाधीशपदाब्जमार्षीत् ॥ ३४ ॥ तत्तादृशीं तस्य समस्तधीमदानन्दथुस्तेनतरामवस्थाम् । आलोक्य कृच्छ्रादवलम्ब्य धैर्यमार्यैस्तदर्हं निरमायि कर्म ॥ ३५ ॥ वृन्दारकद्वीपवतीतटे तद्वृन्दावनं नन्दितसाधुवृन्दम् । वृन्दारुमन्दारमहीजशैलीमविन्दतामन्दबलिप्रदीपम् ॥ ३६ ॥ शिरस्यदःशासनमावहन्तः स्कन्धे वहन्तो रघुनाथमूर्तिम् । मुहुस्तदीयं चरितं स्तुवन्तस्तदैकचक्रान्निरगुर्महान्तः ॥ ३७ ॥ अदोवियोगादतिदीर्घदीर्घमतीत्य पन्थानममी क्रमेण । मासैरनेकैरपि धर्मपुर्याः समीपमायुः समुदीर्णखेदाः ॥ ३८ ॥ श्रुत्वा गुरुं तादृगपुस्थमेतान्विना तमेतानपनीतधैर्यः । पपात शाखीव पटिष्ठवातविपाटितो वेदनिधीन्द्रयोगी ॥ ३९ ॥ समुत्थितोऽसौ सदसि क्षणेन निस्तन्द्रविज्ञाननिराकृताधिः । गुरोर्गरीयोगुणवर्णनांशप्रगल्भबन्दिप्रतिपत्तिमाप ॥ ४० ॥ स्नात्वाथ गोदासलिले स योगिराजो रघूणां पतिमभ्युपेत्य । नमन्नमद्भिः कृतिभिः सहाभूद्गुरोरुदन्तश्रवणैकतानः ॥ ४१ ॥ ततो**

---

मासस्य पुष्यमासस्य 'पौषे तैषसहस्यौ द्वौ' इत्यमरः । असितभूतघस्रे कृष्णचतुर्दशीदिने 'चतुर्दशी भूततिथिः' इति वचनात् । विश्वैकहृद्यचरितः स विद्याधीशः रमाधीशस्य पदाब्जं आर्षीत् प्राप । ममारेत्यर्थः । ऋ गतौ इत्यस्माद्धातोर्लुङ् ॥ ३४ ॥ **तदिति** । समस्तधीमतां विदुषां आनन्दथुस्तेनतरां अतिशयेन आनन्दहन्त्रीं तत्तादृशीं विद्याधीशस्य अवस्थां चरमदशामित्यर्थः । आलोक्य आर्यैः विद्वद्भिः कृच्छ्रात् अतिप्रयासात् धैर्यं आलम्ब्य तदर्हं कर्म खननादिकं निरमायि निर्मितम् ॥ ३५ ॥ **वृन्दारकेति** । वृन्दारकद्वीपवती देवसरित् गङ्गा तस्याः तटे नन्दितसाधुवृन्दं अमन्दबलिप्रदीपं तद्वृन्दावनं तस्य विद्याधीशस्य वृन्दावनं वन्दारवः नमस्कारशीलाः 'वन्दारुरभिवादकः' इत्यमरः । 'शृवन्द्योरारुः' इति आरुप्रत्ययः । तेषाम् । मन्दारमहीजशैलीं कल्पवृक्षशीलं अविन्दत । स्वास्मिन् प्रणतानामिष्टार्थप्रदोऽभूदित्यर्थः ॥ ३६ ॥ **शिरसीति** । अदः शासनं अमुष्य गुरोः आज्ञां शिरसि आवहन्तः रघुनाथमूर्तिं स्कन्धे वहन्तः तदीयं गुरुसंबन्धि चरितं मुहुः स्तुवन्तः महान्तः एकचक्रान्निरगुः निश्चक्रमुः ॥ ३७ ॥ **अद इति** । अमी विद्वांसः अदोवियोगात् अमुष्य गुरोर्वियोगात् अतिदीर्घदीर्घं पन्थानमतीत्य क्रमेण अनेकैः मासैरपि समुदीर्णखेदाः उत्पन्नमार्गाटनायासाः सन्तः धर्मपुर्याः समीपं आयुः ॥ ३८ ॥ **श्रुत्वेति** । श्रुत्वा तादृगवस्थमित्यर्थः । गुरुं तं गुरुं विना एतान् प्राप्तान् एतान् विदुषोऽपि श्रुत्वा वेदनिधीन्द्रयोगी वीतधैर्यः सन् पटिष्ठेन पटुतरेण प्रचण्डेनेत्यर्थः । वातेन विपाटितः शाखी वृक्ष इव पपात । मूर्च्छितोऽभूदित्यर्थः ॥ ३९ ॥ **समुत्थित इति** । निस्तन्द्रेण विज्ञानेन निराकृताधिः निरस्तमनोव्यथः 'पुंस्याधिर्मानसी व्यथा ।' इत्यमरः । असौ वेदनिधिः सदसि क्षणेन वसन् गुरोः विद्याधीशस्य गरीयसां गुणानां वर्णनांशे प्रगल्भः प्रतिभान्वितः यो बन्दिः स्तुतिपाठकः तस्य प्रतिपत्तिं प्रागल्भ्यं आप । बन्दिवद्गुरुगुणान् स्तुतवानित्यर्थः ॥ ४० ॥ **स्नात्वेति** । अथ अनन्तरं स योगिचन्द्रः वेदनिधिः गोदासलिले स्नात्वा रघूणां पतिं दिग्विजयरामं तैरानीयमानं अभ्युपेत्य अभिगम्य नमन् प्रणमन् नमद्भिः स्वस्मै प्रणमद्भिः कृतिभिः रामाचार्यादिविद्वद्भिः सह गुरोर्विद्याधीशस्य उदन्तश्रवणे वृत्तान्तश्रवणे एकतान

मठे तत्क्षणमेव मूलरामस्य पार्श्वे रमणीयमेनम्। विधाय पूजाविधिमादरेण चक्रे स वक्रेतरचित्तवृत्तिः ॥ ४२ ॥ मध्वेशितुर्दैशिकहृत्सरोजमध्यासिकस्य प्रमुदे स मौनी । सुमृष्टमन्धो वसुधासुधान्धःकदम्बकं भोजयति स्म तत्र ॥ ४३ ॥ दिनत्रयं भुक्तवतो द्विजान्तीन्प्रतोष्य कामं द्रविणौघवर्षैः । चकार सद्द्वैतमतैकराज्यपट्टाभिषिक्तः पृथिवीमशेषाम् ॥ ४४ ॥ प्रागल्भ्यमन्यादृशमेक्ष्य तस्य विद्यास्वशेषास्वपि विद्वदालिः । अशोकवन्यानयतः प्रवृत्तं विवेद वेदैकनिधित्वमस्मिन् ॥ ४५ ॥ मौनीन्दुरप्यद्भुतवावदूकशैलीं विवव्रे सकलागमेषु । हंसोऽप्यसौ मानस एव विष्वगलोलुपत्वेन परं व्यलासीत् ॥ ४६ ॥ वैराग्यरक्षां परितो वितत्य विधूतकामादिपिशाचवर्गः । बोधाञ्जनेन स्फुटचित्तदुर्गे मुकुन्दमालोकत मौनिराजः ॥ ४७ ॥ यियासतोऽस्मादपि पूर्वमेव जङ्घालभावं जयशंखघोषः । भेजे ततोऽपि प्रतिवादिवर्गस्ततोऽप्यमुष्यैव यशो दिशासु ॥ ४८ ॥ विद्याम्बुधेस्तस्य विशृङ्खलोद्यद्वाग्वैखरी-

---

आसक्तः अभूत्। तैरुच्यमानगुरुवृत्तान्तमशृणोदित्यर्थः ॥४१॥ तत इति । ततः अनन्तरं वक्रेतरचित्तवृत्तिः ऋजुबुद्धिव्यापारः स वेदनिधिः मठे तत्क्षणमेव मूलरामस्य पार्श्वे रमणीयं एनं दिग्विजयरामं निधाय आदरेण पूजाविधिं चक्रे ॥ ४२ ॥ मध्वेति । स मौनिः वेदनिधिः दैशिकस्य स्वगुरोः हृत्सरोजमध्यासिनस्य हृदयाब्जमध्यवर्तिनः मध्वेशितुः मध्वपतेः । हरेः प्रमुदे प्रमोदाय तत्र मठे वसुधासुधान्धसः भूदेवाः तेषां कदम्बकेभ्यः समूहेभ्यः सुमृष्टं अन्धः अन्नं दिशति स्म । गुरुमुद्दिश्य समाराधनं कृतवानित्यर्थः ॥ ४३ ॥ दिनेति । दिनत्रयं भुक्तवतो द्विजान् ब्राह्मणान् द्रविणौघवर्षैः द्रव्यप्रदानैः कामं यथेच्छं प्रतोष्य स वेदनिधिः द्वैतमेव एकराज्यं मुख्याधिपत्यं तस्मिन् पट्टाभिषिक्तः सन् अशेषां पृथ्वीं चचार । विमतनिरासार्थमिति भावः ॥ ४४ ॥ प्रागल्भ्यमिति । तस्य वेदनिधेः अशेषासु विद्यास्वपि अन्यादृशं अदृश्यं प्रागल्भ्यं प्रौढिमानं एक्ष्य विद्वदालिः अस्मिन् वेदैकनिधित्वं अशोकवन्यानयतः अशोकवनिकान्यायात् प्रवृत्तं विवेद । सकलविद्यानिधेरस्य वेदनिधिः इति नामधेयं अशोकवनन्यायेन संकेतग्रहणाय प्रवृत्तं इति ज्ञातवतीत्यर्थः ॥ ४५ ॥ मौनीति । असौ वेदनिधिः मौनीन्दुः मौनिश्रेष्ठः अपि सकलागमेषु अद्भुतवावदूकशैलीं वक्तृस्वभावं विवव्रे वृणोति स्म । मौन्यपि वक्तेति विरोधः । 'वावदूकश्च वक्तरि ' इत्यमरः । मौनिशब्दो यतिसामान्यवाचीति परिहारः । हंसः यतिः पक्षिविशेषोऽपि । विष्वक् समन्तात् मानसे स्वहृदये परं केवलं अलोलुपत्वेन व्यलासीत विललास । हंसपक्षिणः मानससरसि लोलुपत्वात् तद्राहित्यमिति विरोधः । परिहारस्तु स्पष्ट एव । विरोधाभासयोः संसृष्टिः ॥ ४६ ॥ वैराग्येति । मौनिराजः वेदनिधिः परितः समन्तात् वैराग्यमेव रक्षा भूतिः ' भूतिर्भसितभस्मनि । क्षारो रक्षा च दावश्च ' इत्यमरः । तां वितत्य विस्तार्य विधूतकामादिपिशाचवर्गः बोधाञ्जनेन ज्ञानलक्षणाञ्जनेन साधनेन स्फुटचित्तदुर्गे मुकुन्दः हरिरेव मुकुन्दः निधिः इति श्लिष्टरूपकम् । तं आलोकत । रूपकालंकारः ॥ ४७ ॥ यियासत इति । प्रतिवादिनिराकरणाय यातुमिच्छतः अस्माद्वेदनिधेः सकाशात् अपि पूर्वमेव जयशंखघोषः दिशासु जङ्घालभावं जाङ्घिकत्वं सत्वरगन्तृत्वं भेजे । ततो जयशंखघोषादपि पूर्वमेव प्रतिवादिवर्गः जङ्घालभावं भेजे । ततोऽपि प्रतिवादिवर्गादपि पूर्वमेव विद्यानिधेः यशः

तुङ्गतरङ्गजालैः । अद्वैतिनोऽन्ये न च भङ्गमङ्गीचक्रुः पुरस्तात्सहसैव नम्राः ॥ ४९ ॥ विरागभावं विषयेषु सर्वेष्वप्याविष्कृण्वन्नप्यभिसार्वभौमः । औदार्यतोऽधिक्षिति दुर्विधेषु सुराग एवाजनि सज्जनेषु ॥ ५० ॥ गम्भीरपद्यागमकाननान्तः खेलत्यमुष्मिन्यतिशेखरीन्द्रे । प्रदुद्रुवुस्तत्प्रतिवादिविद्वत्स्तम्बेरमाः स्रस्तमदं भयेन ॥ ५१ ॥ अयत्नमेवास्यसरोजतोऽस्य गीर्वाणवाणी द्रुतमुत्सरन्ती । व्याख्यासु खेदं विजहौ यतीनां प्राचां मुखात्सोद्यमनिर्गमोत्थम् ॥ ५२ ॥ पादाब्जमस्य प्रतितीर्थयात्रं सशर्कराध्वाटनसंस्तवेन । नमन्नमात्यावलिमौलिकोटिमाणिक्यसंघर्षणमक्षमिष्ट ॥ ५३ ॥ कामं हरेर्विस्मरणेऽस्य कोपं लोभं कथायां स्मरणे चमोहम् । दृष्टौ मदं द्वेषिणि मत्सरं च चक्रे यदप्येष धुतान्तरारिः ॥ ५४ ॥ जनार्दनाचार्य-

---

दिशासु जङ्घालभावं भेजे । 'जङ्घालोऽतिजवस्तुल्यौ' इत्यमरः । अत्र प्रयाणादीनां पूर्वपूर्वस्य उत्तरोत्तरकारणत्वेऽपि उत्तरोत्तरस्य पूर्वपूर्वकारणत्वातिशयाक्षेपात्कार्यकारणवैषम्यरूपो विषमप्रभेदः । 'कार्यकारणवैषम्यं विषमालंकृतिं विदुः ।' इति लक्षणात् ॥ ४८ ॥ **विद्येति** । अन्ये परे अद्वैतिनः विद्याम्बुधेः तस्य वेदनिधेः विशृङ्खलं यथा तथा उद्यद्भिः वाग् वैखरीलक्षणं तुङ्गतरङ्गजालैः पुरस्तात्सहसैव नम्राः सन्तः भङ्गं नाङ्गीचक्रुः न भग्नाः । शरणागतरक्षकोऽयमिति भावः । यथा लोके वेतसादयः स्वयमानता समुद्रादितरङ्गैः न च भज्यन्ते । तद्वदिति ध्वनिः ॥ ४९ ॥ **विरागेति** । यमिसार्वभौमः वेदनिधिः सर्वेषु विषयेष्वपि विरागभावं वैराग्यं आविष्कृण्वन् प्रकटयन्नपि अधिक्षिति क्षितौ दुर्विधेषु दरिद्रेषु सज्जनेषु विषये औदार्यतः सरागः रागवानेव अजनि । सकलवस्तुनिस्पृहोऽपि साधूरक्षणविषये सस्पृहोऽभूदित्यर्थः ॥ ५० ॥ **गम्भिरेति** । अमुष्मिन् यतिशेखरीन्द्रे वेदनिधिरूक्षणसिंहे गम्भीरमध्वागम एव काननं तदन्तः खेलति विहरति सति तस्य प्रतिवादिनः एव स्तम्बेरमा गजाः स्रस्तमदं निरस्तगर्वं यथा तथा भयेन प्रदुद्रुवुः ॥ ५१ ॥ **अयत्नमिति** । गीर्वाणवाणी संस्कृतवाक् व्याख्यासु व्याख्यानेषु अस्य वेदनिधेः आस्यसरोजतः मुखाब्जात् अयत्नं अप्रयत्नं यथा तथा निर्गमेन उत्थं जातखेदं विजहौ । प्राञ्चस्तु व्याख्यानसमये प्रयत्नतः संस्कृतवाण्या व्याहरन्ति । अयं तु अनायासेन इति व्यतिरेको ध्वन्यते ॥ ५२ ॥ **पदेति** । अस्य वेदनिधेः पदाब्जं प्रतितीर्थयात्रं तीर्थयात्रायां 'यथार्थे' अव्ययीभावः । शर्करेषु अध्वसु मार्गेषु अटनसंस्तवेन गमनपरिचयेन हेतुना 'संस्तवः स्यात्परिचयः' इत्यमरः । नमन्त्याः अमात्यावलेः मौलिकोटिषु किरीटाग्रेषु यानि माणिक्यानि रत्नानि तेषां संघर्षणं संघट्टनं अक्षमिष्ट सेहे । सर्वेऽपि अमात्याः तस्य पादाभिवन्दनं चक्रुरिति फलितोऽर्थः । संस्तवेनेति हेतूत्प्रेक्षा । सा च व्यञ्जकाप्रयोगाद् गम्या ॥ ५३ ॥ **काममिति** । एष वेदनिधिः यदपि यद्यपि विधूतान्तरारिः निर्जितारिषड्वर्गः तथापि हरौ कामं अस्य हरेः विस्मरणे कोपं च कथायां हरिकथाश्रवणे लोभं च स्मरणे हरिस्मृतौ मोहं परवशतां च दृष्टौ हरिप्रतिमादर्शने मदं हर्षं हर्षस्य गर्वजन्यत्वात्कार्यकारणयोरभेदः । द्वेषिणि हरिद्वेषके मत्सरं च चक्रे । कामादीनां हरिविषयत्वेन सार्थक्यं चकारेत्यर्थः ॥ ५४ ॥ **जनार्दनेति** । यतीनां वतंसः वेदनिधिः

मुखादशेषमाकर्णयन्भारतमानुपूर्व्या । स्वकीयकारुण्यसुधाभिषेकादन्वग्रहीत्तं यतिनां वतंसः ॥ ५५ ॥ स तत्र तत्रायतनानि पुण्यान्युपेत्य तीर्थम्बुकृतावगाहः । लोलम्बतामानयदम्बके स्वे रमेशबिम्बस्य पदाम्बुजातेः ॥ ५६ ॥ आजानसंशुद्धहृदोऽस्य भक्तिमाजानतीवार्ककुलेन्दुमूर्तिः । पूजासु धत्ते मुखपूर्णिमेन्दौ मन्दस्मितोदारमयूखरेखाम् ॥ ५७॥उद्दामाद्वैतिविद्वज्जनकरटिघटाप्रौढपारीन्द्रलीलः । सत्पालीहृच्चकोरोल्लसनविधिसुधीदीधितिर्भूरिकीर्त्या ॥ इन्धानः संदधानो हरिचरणसरोजान्तरे स्वान्तरङ्गं । प्राप्तोऽसौ पाण्डुरङ्गस्थलममलमभूद्बोधभूः संयमीभः ॥ ५८ ॥ स्तुवन्निजगुरोर्गुणान् रघुकुलेन्दुमाराधयन् । समस्तनिगमागमोल्लसितमर्थमुद्घाटयन् । पुरेऽत्र कृतविठ्ठलेश्वरनतिः कृतीन्द्रानतः । स वेदनिधियोगिराट् सफलतां दिनान्यापिपत् ॥ ५९ ॥ तत्रेश्वराह्वयशरद्रुचिरोर्जमासंशुद्धपक्षहरिदैवतवासरे च । प्रातः स वेदनिधिसंयमिसार्वभौमो मध्वेशपादसरसीरुहमाललम्बे ॥६०॥

---

' वष्टि भागुरिः ' इत्यादिना अकारलोपः । अशेषं भारतं जनार्दनाचार्य इति विद्याधीशविजयाद्यनेकप्रबन्धकवयिता एतट्टीकापि तत्कृतेत्यवधेयम् । तस्य मुखात् आनुपूर्व्या आदिपर्वमारभ्यक्रमेण आकर्णयन् तं जनार्दनाचार्यं स्वकीयकारुण्यसुधाभिषेकात् अन्वग्रहीत् अनुगृहीतवान्॥५५ **स इति** । स वेदनिधिः गुरुः तत्र तत्र पुण्यानि आयतनानि देवलयान् उपेत्य तीर्थाम्बुषु कृतावगाहः सन् स्वे स्वकीये अम्बके दृशौ रमेशबिम्बस्य हरिप्रतिमायाः पादाम्बुजातेः लोलम्बतां भ्रमरतां आनयत् निनाय । हरिप्रतिमादर्शनं चकारेति फलितोऽर्थः ॥ ५६ ॥ **आजानेति** । आजानसंशुध्यहृदः आजन्मसंशुद्धचित्तस्य अस्य वेदनिधेः भक्तिं आजानती आ समन्तात् जानती सम्यक् वदन्तीत्युत्प्रेक्षा । ' आच्छीनद्योर्नुम् ' इति विकल्पान्नुमभावः । अर्ककुलेन्दोः रामस्य मूर्तिः मूलप्रतिमा पूजासु मुखमेव पूर्णिमेन्दुः पूर्णिमाचन्द्रः तस्मिन् मन्दस्मितमेव उदारमयूखरेखा प्रशस्तकिरणपालिः तां धत्ते । कथमन्यथा ईदृक्स्मेरमुखत्वं प्रतिमाया इति भावः ॥५७ ॥ **उद्दामेति** । उद्दामाः विशृङ्खलाः अद्वैतिविद्वज्जना एव करटिघटा गजसमूहः तस्य प्रौढपारीन्द्रस्य प्रगल्भसिंहस्य लीलेव लीला यस्य सः । तथा सतां पाल्याः पङ्क्तेः हृदेव चकोरः तस्य उल्लासनविधौ आमोदकार्ये सुधादीधितिः चन्द्रः भूरिकीर्त्या इन्धानः प्रकाशमानः हरिचरणसरोजान्तरे स्वान्तरङ्गं संदधानः बोधभूः ज्ञानस्थलीभूतः संयमीभः यतिश्रेष्ठः असौ वेदनिधिः अमलं पाण्डुरङ्गस्थलं प्राप्तः अभूत् । स्रग्धरावृत्तम् ॥ ५८ ॥ **स्तुवन्निति** । स वेदनिधियोगिराट् अत्र पुरे पाण्डुरङ्गे निजगुरोः विद्याधीशस्य गुणान् स्तुवन् रघुकुलेन्दुं रामं आराधयन् समस्तनिगमागमेषु उल्लसितं अर्थं उद्घाटयन् शिष्येभ्यः प्रकाशयन् कृतविठ्ठलेश्वरनतिः प्रतिदिनं विठ्ठलाय कृतप्राणामः स्वयं कृतीन्द्रैः आनतः नमस्कृतः सन् दिनानि सफलतां आपिपत् निनाय । आप्नोतेर्ण्यन्तात् द्विकर्मकत्वम् ॥५९॥ **तत्रेति** । तत्र पाण्डुरङ्गे ईश्वराह्वयशरदि ईश्वरसंवत्सरे ' हायनोऽस्त्री शरत्समाः इत्यमरः । उचितः और्जमासः कार्तिकमासः ' बहुलोर्जौ कार्तिकिकः' इत्यमरः। तस्य संशुद्धपक्षहरिदैवतवासरे शुक्लपक्षद्वादश्यां प्रातश्च स वेदनिधिः संयमिसार्वभौमः मध्वेशस्य पादसरसीरुहं आललम्बे । कालधर्मं प्राप्त इत्यर्थः ॥ ६० ॥ **तमिति** ।

तं कीर्तिमात्रपरिशेषितमार्तिभाजो निर्वर्ण्य पूर्णधृतयोऽप्युपलब्धवर्णाः । तत्कर्म निर्ममणेरुचितं यदत्र धर्मागमप्रकरमर्मविदो वितेनुः ॥ ६१ ॥ तत्रान्तरे सकलवैष्णवमान्त्रिविद्वद्वृद्धाः समेत्य रहसि प्रविचार्यकार्यम् । सत्यव्रतं व्रतिवरं सुखतीर्थयोगिराध्दान्तरक्षण विचक्षणमाशशंसुः ॥ ६२ ॥ ते गत्वातिरयेण धर्मनगरीं तत्र स्थितं निर्ममप्रालेयांशुममुं निपत्य चरणाम्भोजे तदीये मुहुः । वैराग्याद्यतिमात्रसद्गुणमणिप्राग्भाररत्नाकरं श्रीमध्वेन्द्रमतावनैकपदवीपट्टाभिषिक्तं व्यधुः ॥ ६२ ॥

इति श्रीमद्विद्याधीशविजये एकादशः सर्गः

ततः स सत्यव्रतयोगिराजो हतारिवर्गो जगतां गुरुत्वम् । आसाद्य भूयो विललास हैमः परिमलर्द्धिं प्रसवो यथैव ॥ १ ॥ प्रतीपविद्वत्प्रकराभिभूतौ प्रोढागमार्थाप्रतिपादने च । परेशपूजापरतन्त्रतायां सत्यव्रतः सार्थकिताह्वयोऽभूत् ॥ २ ॥ स्वान्तस्फुर-

---

अथ लब्धवर्णा विद्वांसः कीर्तिमात्रपरिशेषितं मृतमित्यर्थः तं निर्वर्ण्य पूर्णधृतयोऽपि आर्तिभाजः सन्तः धर्मागमप्रकरमर्मविदः धर्मशास्त्रसमूहमर्माभिज्ञाः ते अत्र चरमकाले निर्ममणेः यतिश्रेष्ठस्य यदुचितं तत्कर्म वितेनुः । श्वभ्रे निचिक्षिपुरित्यर्थः ॥६१॥ तत्रेति । तत्रान्तरे तस्मिन्समये सकलवैष्णवमान्त्रिणः ( चन्द्र ? ) विद्वद्वृद्धाश्च ते समेत्य एकत्र संगत्य रहसि कार्यं प्रविचार्य सत्यव्रतिवरं सत्यव्रताख्ययोगिश्रेष्ठं सुखतीर्थयोगिनः राद्धान्तरक्षणे विचक्षणं आशशंसुः स एव पट्टाभिषेकार्हः इति निश्चिक्युरित्यर्थः ॥ ६२ ॥ त इति । ते मन्त्रिविद्वद्वृद्धाः अतिरयेण धर्मनगरीं गत्वा तदीये सत्यव्रतयोगिसंबन्धिनि चरणाम्भोजे मुहुर्निपत्य तत्र पुर्यां स्थितं निर्ममप्रालेयांशुं योगिचन्द्रं वैराग्यं तदादयोऽतिमात्राः सद्गुणमणयः तेषां प्राग्भारस्य अतिशयस्य रत्नाकरं समुद्रं अमुं सत्यव्रतं श्रीमध्वेन्द्रस्य मतावनं मतरक्षणमेव एकपदवी मुख्यमार्गः तस्यां पट्टाभिषिक्तं व्यधुः ॥ ६२ ॥

इति श्रीमद्विद्याधीशविजये महाकाव्ये गदयकोनेरिणा जनार्दनसूरिकारिते एकादशः सर्गः ॥

**तत इति** । ततः पट्टाभिषेकानन्तरं सः सत्यव्रतयोगिराजः जितारिवर्गः जितान्तःशत्रूवर्गः स्वयं राजत्वादितिभावः । परीमलर्द्धिं सौरभसमृद्धिं 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घः । आसाद्य हेम्नो विकारो हैमः प्रसवः यथा कनकपुष्पमिव 'स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने ।' इत्यमरः । जगतां गुरुत्वमासाद्य भूयो अधिकं विललास । स्वत एव महानुभावस्य जगद्गुरुत्वं सुवर्णस्य सौरभमिव अतिश्लाघ्यतावह अभूत् इति । उपमालंकारः । अस्मिन्सर्गे उपजातिवृत्तम् ॥ १ ॥ तत्सत्यव्रतनाम निर्वक्ति **प्रतीपेति** । प्रतीपविद्वत्प्रकरस्य अभिभूतौ विषये, प्रौढानां आगमार्थानां प्रतिपादने च परेशस्य हरेः पूजायां परतन्त्रतायां प्रवणत्वेन सत्यव्रतः सार्थकिताह्वयः अभूत् । उक्तकार्यत्रयेऽपि स्वयं सत्यव्रतत्वात् सत्यव्रत इति सार्थकनामधेयः अभूत् । न तु घृतकौशातकीन्यायेन व्यर्थनामायमिति भावः ॥२॥ **स्वेति** । स्वान्तं हृदयं 'स्वान्तं हृन्मानसं मनः' इत्यमरः । तस्मिन् स्फुरन् यः श्रीपतिः एकत्र सततसमर्यमाणत्वादन्यत्र संततशयितत्वाच्चेति भावः । अप्रक्लृप्तः अकृतवेलात्ययः

च्छ्रीपतिरप्रक्लप्तवेलात्ययोऽभ्यञ्चितशङ्खचक्रः । आक्रान्तसर्वान्यसरस्वतीकः सोऽभूद्गभीरो गुणवारिराशिः ॥ ३ ॥ मणीपुरश्रीरघुनाथसूरिसूनुः स कृष्णार्यसुधीवतंसः । विशिष्य तस्याखिलशिष्यवर्गे गुरोर्गरीयः करुणाश्रयोऽभूत् ॥ ४ ॥ प्रयोजनार्थं प्रभवः पुरा ये संभाविताः प्राक्तनसंयमीन्द्रैः । तानेव सर्वानपि रूढगर्वांस्तृणाय मेने स्वगणेयकीर्तिः ॥५॥ तदीयकारुण्यलवाधिगत्यै के नो यतन्ते भुवि मन्त्रिणः स्म । प्रगल्भवाचः कृतिनोऽपि के वा पुरोऽस्य नापुः स्फुटमूकशैलीम् ॥ ६ ॥ कटाक्षितोऽनेन यतीन्दुनैव निस्वोऽपि वस्वीश्वरहर्षमार्षीत् । अलक्षितोऽधिक्षिति लक्षणोऽपि साक्षादलक्ष्म्यापदखेदमेव ॥ ७ ॥

---

तीरात्ययश्च येन सः तथा । 'अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि ।' इत्यमरः । अभ्यञ्चितानि शरीरे नित्यमलंकृतानि शङ्खचक्राणि मुद्रिकारूपाणि यस्य स तथा । अन्यत्र अभ्यञ्चितं प्राप्तं शङ्खानां चक्रं समूहो यस्य सः तथा । आक्रान्ताः स्वेन पराभूताः सर्वा अन्येषां विमतानां सरस्वती वाक् येन सः तथा । 'नद्यृतश्च' इति कप् । अन्यत्र आक्रान्ताः स्वोदकेनापह्नुताः सर्वा अन्याः सरस्वत्यो नद्यो येन स तथा । 'कूलंकषा निर्झरिणी घोषवक्रा सरस्वती ।' इति नदीपर्याये शेषः । गभीरः एकत्र मानसे अन्यत्र जलेष्विति भावः । सत्यव्रत गुणानां वारिराशिः समुद्रोऽभूत् । अत्र प्रकृताप्रकृतयोः सत्यव्रतसमुद्रयोः एकनालावलम्बिफलद्वयवदर्थश्लेषः ॥ ३ ॥ **मणीति** । मणिपुरं नाम विजयपुरसमीपे भीमरथीतीरस्थो ग्रामः । तत्र यः श्रीरघुनाथसूरिः रघुनाथाचार्यः तस्य सूनुः सः प्रसिद्धः कृष्णाचार्यः तस्य गुरोः सत्यव्रतस्य शिष्यवर्गे सत्यपि विशिष्य गरीयस्याः करुणायाः आश्रयोऽभूत् । समस्तशिष्येभ्योऽपि स एव गुरोरनुग्रहविशेषं संपादितवान् ॥ ४ ॥ **प्रयोजनेति** । पुरा प्राक्तनसंयमीन्द्रैः पुरातनयतिभिः ये प्रभवः मन्त्रिणः प्रयोजनार्थं द्रव्यादिप्रयोजनापेक्षया संभाविताः बभूवुरिति शेषः। रूढगर्वान् गुरुसंभावनयेति भावः । सर्वांस्तान्प्रभूनेव अगणेयकीर्तिः सत्यव्रतः तृणाय मेने । मन्यकर्मण्यनादरे विभाषा प्राणिषु' इति चतुर्थी । स्वस्य द्रव्यादिनिस्पृहत्वात् । 'निस्पृहस्य तृणं जगत्' इति न्यायेन प्रभूंस्तृणीचकारेत्यर्थः ॥ ५ ॥ **तदीयेति** । भुवि मन्त्रिणः के वा तदीयस्य गुरुसंबन्धिनः कारुण्यस्य लेशः तस्य अधिगत्यै प्राप्तये नो यतन्ते स्म । सर्वेऽपि यतन्ते स्मेत्यर्थः। तदा प्रगल्भवाचः कृतिनो विद्वांसोऽपि के वा अस्य गुरोः पुरः अग्रे स्फुटमूकभावं नापुः । सर्वेऽपि अधरस्पन्दनेऽपि असमर्था बभूवुरित्यर्थः ॥ ६ ॥ **कटाक्षित इति** । अनेन यतीन्दुना सत्यव्रतेन निस्वः दरिद्रोऽपि कटाक्षेण वीक्षित एव तिष्ठतु संभाषणादिकमिति भावः । वस्वीश्वरस्य धनपतेः कुबेरस्य हर्षमिव हर्षमार्षीत् । तथा अधिक्षिति क्षितौ लक्षं लक्षसंख्याकानि धनानि पातीति लक्षपः लक्षाधिकार्यपि अलक्षितः गुरुणा नावलोकितः साक्षात्प्रत्यक्षमेव अलक्ष्मीः ज्येष्ठा तस्या आस्पदस्य स्थानभूतस्य परमदरिद्रस्येत्यर्थः । यः खेदः तमेव आर्षीत् इति संबन्धः । तत्कटाक्षोऽपि अतिक्रुच्छ्रलभ्य इत्याशयः ॥ ७ ॥ **प्राचामिति** । प्राचां प्राक्तनानां यतीनां गुणवर्णने विषये कविभिः या अतिशयोक्तयो असंबन्धे संबन्धलक्षणाः प्रणीताः श्लोकरूपेण रचिताः सर्वाः ताः अतिशयोक्तयः अस्य सत्यव्रतस्य गुणेषु गुणवर्णनविषये स्वभावोक्तितया परिणेमुः परिणताः।

प्राचां यतीनां गुणवर्णनेऽतिशयोक्तयो याः कविभिः प्रणीताः । ता एव सत्यं परिणेमुरस्य सर्वाः स्वभावोक्तितया गुणेषु ॥ ८ ॥ तस्मिन् गुरौ शास्तरि दुर्जनानां विशिष्टरक्षाकृतिवैष्णवेषु । असाध्वसः को नु विधातुमैच्छच्चेतो दुरध्वाटनसाहसिक्ये ॥ ९ ॥ स योगिराट् जातु वृतः सुधीभिः पुरं जिहानो विजयाभिधानम् । ततोऽतिभक्त्याखिलमन्त्रिवर्यैरभ्येत्य नीतोऽजनि पूजिताङ्घ्रिः ॥ १० ॥ वृद्धो यतिः कोऽपि तदैव कृष्णद्वैपायनाख्यश्चपलान्तरङ्गः । स्वयं जगद्देशिक इत्युरूढदुराग्रहोऽगाढ पुरं तदेव ॥११॥ छात्रैरनेकैरयमेडमूकैः कर्णेजपात्मंभरिभिः परीतः । स्वाधिष्ठितोद्यच्छिबिकाग्रभागप्रध्मातशङ्खध्वनिपूरिताशः ॥ १२ ॥ पार्श्वद्वये पाण्डुरचामराभ्यां संवीज्यमानः स्फुटतालनादः । चन्द्रोऽयमिन्द्रोऽयमितिप्रगल्भवाग्भिः पुरो बन्दिभिरीड्यमानः ॥१३ ॥ तादृग्वृथाडम्बरसंभृतात्मा जगद्गुरुत्वाभिनिवेश एव । विगाहमानो विशिखां कदाचिद्लोकि लोकैकगुरोर्भुजिष्यैः ॥ १४ ॥ तैरेत्य दुर्वृत्तममुष्य सर्वमाख्यातमाकर्ण्य गुरूत्तमोऽसौ । उदक्षिपद्भ्रूलति-

---

सत्यं उक्तार्थे नास्ति संदेहः । एतेनास्य सर्वातिशायि चरितं व्यज्यते ॥८॥ तस्मिन्निति । तस्मिन् गुरौ सत्यव्रते दुर्जनानां शास्तरि शिक्षके विशिष्टानां रक्षां करोतीति विशिष्टरक्षाकृत् तस्मिन् सति वैष्णवेषु मध्ये को नु को वा पुरुषः असाध्वसः निर्भयः सन् दुरध्वनि दुर्मार्गे अटनं संचारः निषिद्धकर्मकरणमित्यर्थः । तदेव साहसिक्यं साहसं तस्मिन् चेतोऽपि अन्तःकरणमपि आस्तां करणादिकमिति भावः । विधातुमैच्छत् न कोऽपि दुराचारे मनोमात्रमपि चकारेति गुरोराज्ञातिशयो व्यज्यते ॥९॥ स इति । स योगिराट् सत्यव्रतः जातु सुधीभिर्वृतः सन् विजयाभिधानं पुरं जिहानः प्राप्तः सन् ' ओहाङ्गतौ ' इत्यस्माद्धातोर्लटः शानजादेशः । ततो विजयापुरात् अखिलमन्त्रिवर्यैः अतिभक्त्या अभ्येत्य नीतः पुरीं प्रत्यानीतः पूजिताङ्घ्रिः अजनि जातः ॥ १० ॥ वृद्ध इति । तदैव तदानीमेव समये कोऽपि कृष्णद्वैपायनाख्यः वृद्धः यतिः चपलान्तरङ्गः अत एव स्वयं जगद्देशिकः स्वयमेव जगद्गुरुरित्यूढदुराग्रहः सन् तत्पुरमेव विजयपुरमेव अगाढ प्रायात् । ' गाहू विलोडने ' इत्यस्माद्धातोर्लुङ् ॥११॥ तदागमनप्रकारमेवाह । छात्रैरिति । एडमूकाः अज्ञानिनः ' अज्ञमात्रेऽप्येडमूकः ' इति वैजयन्ती । तैः । कर्णेजपन्तीति कर्णेजपाः सूचकाः । ' कर्णेजपः सूचकः स्यात्' इत्यमरः । ' स्तम्बकर्णयोरभिजपोः ' इत्यलुक् । आत्मानं बिभ्रतीति आत्मंभरयः स्वोदरपोषकाः 'फलेग्रहिरात्मंभरिश्च' इति निपातनात्साधुः । ' उभौ त्वात्मंभरिः कुक्षिंभरिः स्वोदरपूरके ।' इत्यमरः । कर्णेजपैश्च आत्मंभरिभिश्च तैरनेकैः छात्रैः शिष्यैः परीतः अयं वृद्धयतिः स्वेन अधिष्ठितायाः उद्यन्त्याः शिबिकायाः अग्रभागे प्रध्मातस्य शङ्खस्य ध्वनिभिः पूरिताशः ॥ १२ ॥ पार्श्वेति । पार्श्वद्वये पाण्डुरचामराभ्यां संवीज्यमानः स्फुटः तालानां कांस्यतालानां नादो यस्य स तथा पुरः पुरस्तात् प्रगल्भवाग्भिः बन्दिभिः अयं चन्द्रः अयं इन्द्रः इति ईड्यमानः ॥१३॥ तादृगिति । तादृशः वृथाडम्बरेण संभृतः न तु गुरुसंप्रदायसंभृत इति भावः । जगद्गुरुत्वाभिनिवेशो यस्य सः वृद्धः कदाचित् विशिखां पुरीं विगाहमानः सन् लोकैकगुरोः सत्यव्रतस्य भुजिष्यैः परिवारकैः अलोकि दृष्टः । ' नियोज्यकिङ्करप्रेष्यभुजिष्यपरिचारकाः । ' इत्यमरः ॥ १४ ॥ तैरिति । तैः भुजिष्यैः एत्य आख्यातं अमुष्य वृद्धस्य सर्वं दुर्वृत्तं आकर्ण्य असौ

कामुदीक्ष्य स्मेराननेन्दुर्मठविप्रवर्गम् ॥ १५ ॥ मठद्विजास्तत्क्षणमेव गाढं कटीषु सव्यान पटीर्निबध्य । कण्डूलदोर्दण्डतया रणार्थमौद्दण्ड्यसर्वस्वभुवो निरीयुः ॥ १६ ॥ दन्ताग्रसंदष्टरदच्छदास्ते रुषोर्ध्वमुल्लासितमुष्टिबन्धाः । अजस्रसंभूतघृताभिषिक्तकठोररोटीघटिताङ्गदार्ढ्याः ॥ १७ ॥ चपेटिकायष्टिकठोरमुष्टिसमष्टिनिष्पिष्टसमस्तगात्रान् । मिथ्यागुरोस्ताननुगान्व्यधुस्ते मल्लाहवोल्लासभृतो मठीयाः ॥ १८ ॥ शंखं क्वचित्कुत्रचिदेव तालं प्रकीर्णकं क्वापि विकीर्णकेशान् । विसृज्य तान्विद्रवतो विलोक्य जनाः समंताज्जहसुः प्रतोल्याम् ॥ १९ ॥ विशीर्यमाणां शिबिकां विहाय वृद्धो यतिः क्वापि विलीय भीत्या । द्रुतावशिष्टैरनुगैः समेतो दैवात्पुनर्जातममन्यत स्वम् ॥ २० ॥ इत्थं विधूतोऽपि पुनः स दण्डी स्पर्धां समृद्धां गुरुणैव तेने । दुराशयान्धीकृतचेतसो हि पश्यन्ति न स्वावमतिं परेभ्यः ॥ २१ ॥ तयोर्विवादं नृपतिर्निशम्य निर्णीय चाप्तैरपि तारतम्यम् । संभावयन्संयमिकुञ्जरं तं निराकरोत्तं यतिनं जरन्तम् ॥ २२ ॥ ततः प्रतस्थे यतिराडवाचीं राजादिभिः कल्पितराजपूजः ।

---

गुरूत्तमः सत्यव्रतः स्मेराननेन्दुः सन् मठविप्रवर्गं उदीक्ष्य भ्रूलतिकां उदक्षिपत् । वृद्धस्य अप्रतिष्ठा कार्येति भ्रुवा सूचितवान् ॥ १५ ॥ **मठेति** । औद्दण्ड्यं उद्दण्डवृत्तिः तस्य सर्वस्वभुवः समस्तसाहसस्थानीभूताः मठद्विजाः तत्क्षणं तदाज्ञाक्षणे एव कटीषु सव्यानपटीः उत्तरीयपटान् गाढं निबध्य 'संव्यानमुत्तरीयं स्यात्' इत्यमरः । कण्डूरेषामस्तीति कण्डूलाः । सिध्मादित्वादिलच् । ते दोर्दण्डा येषां तेषां भावस्तत्ता । तया हेतुना रणार्थं युद्धाय निर्ययुः ॥१६॥ **दन्तेति** । रुषा संदष्टरदच्छदाः निजदशनैरेव दष्टनिजाधराः तथा ऊर्ध्वं उल्लासितमुष्टिबन्धाः भाविमुष्टिप्रहारानभिनयन्तः अजस्रं प्रतिदिनं संभुक्ताभिः मठे भक्षिताभिः घृताभिषिक्ताभिः घृतप्लुताभिः कठोररोटिभिः गोधूमचूर्णविकारकठिणभक्षविशेषैः घटितं अङ्गानां दार्ढ्यं एषां ते तथोक्ताः । ते मठविप्राः निरीयुः ॥ १७ ॥ **चपेटिकेति** । मल्लाहवोल्लासभृतः मल्लयुद्धक्रीडाभृतः मठीयाः ते द्विजाः मिथ्यागुरोः वृद्धस्य अनुगान् चपेटिका कपोलताडनं यष्टिः लगुडः कठोरमुष्टिश्च तासां समष्टिः संपर्कः तया निष्पिष्टसमस्तगात्रान् व्यदधुः चक्रुः ॥ १८ ॥ **शंखमिति** । क्वचित् शंख कुत्रचित्तालं क्वापि प्रकीर्णकं चामरं 'चामरं तु प्रकीर्णकम्' इत्यमरः । विसृज्यैव विद्रवतः पलायमानान् विकीर्णकेशान् वृद्धशिष्यानवलोक्य जनाः प्रतोल्यां वीथ्यां समन्ताज्जहसुः हसन्ति स्म ॥ १९ ॥ **विशीर्यमाणामिति** । वृद्धो यतिः विशीर्यमाणां मठीयैः भज्यमानां शिबिकां विहाय द्रुतावशिष्टैरनुगैः समेतः सन् भीत्या क्वापि विलीय स्थितः इति शेषः । स्वं आत्मान पुनर्जातममन्यत ॥ २० ॥ **इत्थमिति** । स दण्डी वृद्धयतिः इत्थं एवं विधूतः गुरुशिष्यैरभिभूतोऽपि पुनर्गुरुणा सह समृद्धां संपूर्णां स्पर्धामेव तेने । कथमभिभूतोऽपि स्पर्धां करोतीत्याशङ्कायामर्थान्तरन्यासं न्यस्यति दुरिति । तथाहि दुराशया दुष्प्रापाभिलाषेण अन्धीकृतचेतसः जनाः परेभ्यः उत्थां परकृतां स्वावमतिं आत्मावमानं न पश्यन्ति । 'आशाया दासा ये ते दासाः सर्वलोकस्य' इति न्यायादिति भावः ॥ २१ ॥ **तयोरिति** । तयोः सत्यव्रतवृद्धयोः विवाद नृपतिः विजयापुरराजः निशम्य आप्तैः जनैः तारतम्यं तयोस्तरतमभावमपि निर्णीय निश्चित्य संयमिकुञ्जरं यतिश्रेष्ठं सत्यव्रतगुरुं संभावयन् जरन्तं जीर्णं वृद्धं निराकरोत् ॥ २२ ॥ तत

विशृङ्खलोद्यद्बिरुदाङ्कशङ्खपुङ्खानुपुङ्खारवदूरितारिः ॥२३॥ स तुङ्गभद्रातटसंगतानि पुराणि पश्यन् पुरुषोत्तमीयान् । बिम्बान् सिषेवे खलु तत्र तत्र वित्रासिताद्वैतिविपश्चिदालिः ॥२४॥ चचार पृथ्वीं चतुराननाल्या परीतपार्श्वः परमः स योगी । दुर्मन्त्रिणामन्तरुदीर्णदर्पतमोभरोत्खण्डनचण्डभानुः ॥ २५ ॥ गोदासरिद्रोधसि धर्मपुर्यां निमार्य कंश्चिन्मठमत्युदारम् । मासानसौ कांश्चन तत्र वासं चकार साकार इव प्रबोधः ॥ २६ ॥ अभूतपूर्वाद्भूतचर्यमार्याः श्रुत्वा जगद्देशिकसार्वभौमम् । दिग्भ्यः समेतास्तमुदीक्ष्य साक्षाद्धर्षान्मिथो वाचममी इयवोचन् ॥ २७ ॥ यतीन्दवः क्त्यपि न क्षमायां जनैरमीभिः खलु दृष्टपूर्वाः । अतीत्य तत्तच्चरितप्रबन्धं विचित्रमेतस्य चरित्रमिन्धे ॥२८॥ नैर्मल्यमन्तर्बहिरस्य चेदृक् पद्मेशपादार्चनपारवश्यम् । भूतेषु भाविष्वपि संभवत्सु समैक्षत द्रक्ष्यति वीक्ष्यते कः ॥२९॥ आस्तां पुरस्तात्समुदस्तवेत्रहस्तोऽत्र कैङ्कर्यजुषां समाजः । अहो वयं केवलमस्य गात्रमहोविशेषेण

---

इति । ततो अनन्तरं यतिराट् सत्यव्रतः राजादिभिः तत्पुरराजप्रभृतिभिः कल्पितराजपूजः कृतराजोपचारः विशृङ्खलं यथा तथा उद्यतः ध्मायमानस्य बिरुदाङ्कशङ्खस्य पुङ्खानुपुङ्खध्वनिभिः दूरितारिः तच्छ्रवणक्षणे एव पलायितविमतः सन् अवाचीं दक्षिणां दिशं प्रतस्थे ॥ २३ ॥ स इति । तत्र तत्र मार्गे वित्रासिताद्वैतिविपश्चिदालिः स सत्यव्रतः तुङ्गभद्रानाम नदी तस्यास्तटसंगतानि पुराणि पश्यन् पुरुषोत्तमीयान् बिम्बान् हरिप्रतिमाः सिषेवे खलु सेवते स्म ॥ २४ ॥ चचारेति । चतुराननाल्या विद्वत्पङ्क्त्या परीतपार्श्वः स योगी सत्यव्रतः दुर्मन्त्रिणां अन्तः हृदये उदीर्णः यो दर्पः स एव तमोभरः तस्य उत्खण्डने चण्डभानुः सूर्यः सन् तेषां गर्वनिर्वापकः सन्नित्यर्थः । पृथ्वीं चचार ॥२५॥ गोदेति । गोदासरितः रोधसि तीरे धर्मपुर्यां अत्युदारं कंचिन्मठं निर्माय असौ सत्यव्रतः साकारः आकृतिमान् प्रबोधो ज्ञानमिव कांश्चन मासान् मठे वासं चक्रे ॥ २६ ॥ अभूतेति । अभूतपूर्वाद्भुतचर्यं जगद्देशिकसार्वभौमं जगद्गुरुश्रेष्ठं सत्यव्रतं श्रुत्वा आर्याः विद्वांसः दिग्भ्यः समेताः सन्तः तं साक्षात् उदीक्ष्य अमी आर्याः हर्षवशात् मिथः अन्योऽन्यं वाचं इति वक्ष्यमाणरीत्या अवोचन् ॥ २७ ॥ तदुक्तमेवाष्टाभिराचष्टे । यतीति । अमीभिः जनैः अस्माभिरित्यर्थः । दृष्टपूर्वाः यतीन्दवः यतिश्रेष्ठाः क्षमायां कति न खलु । दृष्टपूर्वाः सर्वेऽपि दृष्टा एवेत्यर्थः । एतस्य गुरोश्चरित्रं तत्तच्चरितप्रबन्धं तेषां चरितकथामतीत्य इन्द्धे प्रकाशते । सर्वप्राक्तनयतिचरितातिशयितत्वमेवैतच्चरित्रस्य आश्चर्यमित्यर्थः ॥ २८ ॥ तच्चरित्रवैचित्र्यमेव दर्शयति नैर्मल्यमिति । तस्य गुरोः अन्तर्बहिः नैर्मल्यं च ईदृक् असाधारणं पद्मेशस्य श्रीपतेः पादार्चने पारवश्यं परपशतां च को वा जनः भूतेषु गतेषु समैक्षत दृष्टवान् । तथा भाविषु भविष्यत्सु अपि द्रक्ष्यति आलोकयिष्यति । तथा संभवत्सु विद्यमानेषु ईक्षते पश्यति । न कोऽपीति काकुः । कालत्रयेऽपि अस्य बहिरन्तःशुद्धिः हरिपूजापारवश्यं च न केष्वपीत्यर्थः ॥ २९ ॥ आस्तामिति । पुरस्तादुदस्तवेत्रहस्तः सन् उत्क्षिप्तवेत्रपाणिः कैङ्कर्यजुषां निवारणपरिचारकाणां समाजः पुरस्तात् आस्तां तिष्ठतु । केवलं अस्य गुरोः गात्रमहोविशेषेण तेजोऽतिशयेन वयं निवारिताः स्मः । वेत्रहस्तवेत्रसंचलनात्प्रागेव तदङ्गतेजोविशेषः सर्वान्निवारयति ।

निवारिताः स्म ॥ ३० ॥ वैराग्यमीदृङ् न तपोधनेषु विमृग्यमेतस्य गभीरभावः । न नं स्फुटं नेतरि निम्नगानां नोत्तुङ्गता वा नगराजिराजे ॥ ३१ ॥ मनःसामाधानपुरःसरं यत् रमेशपूजाविधिमादरेण । क्वचिन्महान्तो भुवि कुर्वते तदेतद्गुरूपज्ञमिति प्रतीमः ॥ ३२ ॥ व्याख्यासु निःसंशयमस्य देववाणीसमुच्चारणनैपुणीयम् । सुधोरसासेचनमाचरन्ती धिनोति शब्दग्रहयोर्युगं नः ॥ ३३ ॥ सुवर्णसावर्ण्ययुजा नितान्तं काषायवासोऽस्य शरीरकान्त्या । परीतमेतत्परभागकं तं पुष्णाति निष्णातमतेर्यतीन्दोः ॥ ३४ ॥ अत्युन्नतत्वेन समेत्य वार्धितरङ्गभङ्ग्या प्रभवो धनान्धाः । यथाधिवेलं सविधेऽस्य भीत्या विलीय चात्यन्तलघूभवन्ति ॥ ३५ ॥ इत्यादिवाक्यानि तदाश्रितानि सर्वे वदन्तः सरसाग्रगण्याः । प्राणंसिषुर्दैशिकपारिकाङ्क्षिहर्यक्षमर्यक्षुभितान्तरङ्गम् ॥ ३६ ॥ आत्मीयपाण्यब्जकृतावतारं स जातुचित् सत्यनिधिं यतीन्द्रम् । सप्रश्रयं स्वप्रतिबिम्बमेव मत्वा मुदित्वा गिरमित्यवादीत् ॥ ३७ ॥ पुरास्मदीयैर्गुरुभिः प्रतीतैः धिपाश्रितोऽन्ये विजितावशिष्टाः । सदा हरिं साधु-

---

अहो तदीया प्रभा । अतिशयोक्तिरलंकारः ॥ ३० ॥ **वैराग्यमिति** । ईदृगसाधारणं तस्य गुरोः वैराग्यं तपोधनेषु न विमृग्यम् । न कोऽपि ईदृक् विरक्तः तपोधनेषु दृष्ट इति भावः । एतस्य गभीरभावः गाम्भीर्यं निम्नगानां नदीनां नेतरि नायके समुद्रे न । नास्ति स्फुटम् । तथा उत्तुङ्गता अस्य औन्नत्यं वा नगानां पर्वतानां राजेः पङ्क्तेः राजा हिमवान् तस्मिन्नगराजिराजे न नास्ति । तदीयवैराग्यादयो निरुपमा इति भावः ॥ ३१ ॥ **मन इति** । भुवि क्वचित्प्रदेशे महान्तः सज्जनाः मनःसमाधानपुरःसरं आदरेण परमेशस्य पूजाविधिं कुर्वते इति यावत् । तत्तादृक् सावधानहरिपूजाकरणं एतस्य गुरोः उपज्ञं एतदुपज्ञम् । एतेन गुरुणैवोपदिष्टमित्यर्थः । 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम्' इति नपुंसकत्वम् । इत्येव प्रतीमः जानीमः ॥ ३२ ॥ **व्याख्यास्विति** । व्याख्यासु व्याख्यानेषु अस्य गुरोः इयं निःसशयं यथा तथा देववाण्यां संस्कृतवाण्यां समुच्चारणनैपुणी निपुणता षित्वात् ङीष् । सुधारसस्य आसेचनं आचरन्ती नः अस्माकं शब्दग्रहयोः कर्णयोः युगं धिनोति प्रीणयति । 'धिञ् प्रीणने' इत्यस्माद्धातोर्लट् ॥ ३३ ॥ **सुवर्णेति** । सवर्णस्य भावः सावर्ण्यं सुवर्णेन सावर्ण्यं युज्यते इति सुवर्णसावर्ण्ययुक् तया । निष्णातमतेः यतीन्दोः अस्य गुरोः शरीरकान्त्या परीतं आततं एतत्काषायवासः काषायवस्त्रं नितान्तं परभागं गुणोत्कर्षं 'परभागो गुणोत्कर्षः' इत्यमरः । तमेव पुष्णाति । तद्देहकान्त्या काषायशाटी वर्णोत्कर्षमाप्नोतीत्यतिशयोक्तिः ॥ ३४ ॥ **अत्युन्नतेति** । धनान्धाः धनसामग्र्योद्धताः प्रभवः वार्धितरङ्गभङ्ग्या समुद्रतरङ्गभङ्गरीत्या अत्युन्नतत्वेन प्रागतिगर्वोद्धत्या समेत्य अस्य गुरोः सविधे समीपे अधिवेलं यथा वेलामिव भीत्या विलीय च अत्यन्तं लघूभवन्ति । एतेनास्य प्रभावो व्यज्यते ॥ ३५ ॥ **इतीति** । गुरुं आश्रितानि तद्विषयकानि इत्याद्युक्तरीत्या वाक्यानि वदन्तः सर्वे सरसाग्रगण्याः जनाः अरिभिः अन्तःशत्रुभिः अक्षुभितान्तरङ्गं दैशिकपारिकाङ्क्षिहर्यक्षं गुरुयतिसिंहं प्राणंसिषुः प्रणेमुः ॥ ३६ ॥ **आत्मीयेति** । स सत्यव्रतः जातु आत्मीयपाण्यब्जात् कृतावतारं सप्रश्रयं सविनयं सत्यनिध्याख्यं यतीन्द्रं स्वप्रतिबिम्बमेव मत्वा मुदित्वा प्रहृष्य इति वक्ष्यमाणरीत्या अवादीत् ॥ ३७ ॥ तदुक्तमेव चतुर्भिराह पुरेति । पुरा पूर्वं अतीतैः प्रसिद्धैः अस्मदीयैः गुरुभिः विजि-

जनान्द्विषन्तो वसन्त्यसन्तो वसुधातलेऽस्मिन् ॥ ३८ ॥ तेषां वितण्डां परिखण्ड्य चण्डां पाण्डित्यभङ्ग्या प्रविधाय दण्डम् । कोऽन्यो विना त्वां कमलाधिनेतुः प्रसादमासदयितुं प्रगल्भः ॥ ३९ ॥ श्रीजानकीजानिपदाब्जपूजा सदागमानां प्रतिपादनं नः । सद्रक्षणं चेतरशिक्षणं च विधेयमस्मन्मठसंप्रदायः ॥ ४० ॥ तदद्य शिक्षार्थमसज्जनानां संरक्षणार्थं भुवि सज्जनानाम् । प्रयाहि मार्गं परमस्य पुंसः क्षेत्राणि पश्यन् क्षितिमण्डनानि ॥ ४१ ॥ स गौरवीं वाचमिति स्फुटार्थां सद्यः शिरःशेखरयन्प्रणम्य । गुरुं परीतः सगुणैः सुधीभिः कार्तान्तिकीं द्राक् ककुभं प्रतस्थे ॥ ४२ ॥ आरूढजाम्बूनदपल्लकीकस्तदग्रभागस्फुरिताब्जघोषः । प्रकीर्णकाभ्यां परिवीजमानः प्रशस्यमानः पटुबन्दिवृन्दैः ॥ ४३ ॥ इत्यत्र सत्यव्रतयोगिसम्राट् प्रहित्य सत्यादिनिधिं यतीन्द्रम् । स्वयं स शूर्पाख्यपुरीं ससर्प भक्तालिकार्पण्यहिमाहिमांशुः ॥ ४४ ॥ तस्मिन्पुरे देशिकचक्रवर्ती न्यायामृतग्रन्थमदृष्टपूर्वम् । स व्याकरोऽद्भुतक्लृप्तमौलिकम्पैस्तुतं पण्डितभूनिलिम्पैः ॥ ४५ ॥ विजित्य सर्वान् विमतान् दिशासु समाजितः सत्यनिधिः

---

तावशिष्टाः सदा हरिं च साधुजनान् हरिभक्तांश्च द्विषन्तो सन्तो दुर्जनाः अन्ये विपश्चितः अस्मिन्वसुधातले वसन्ति ॥ ३८ ॥ **तेषामिति** । चण्डां दुःसहां तेषां वितण्डां केवलपरसिद्धान्तखण्डनलक्षणां पाण्डित्यभङ्ग्या वैदुष्यरीत्या परिखण्ड्य तेषां शिक्षां च प्रविधाय कमलाधिनेतुः श्रीपतेः-प्रसादं आसादयितुं संपादयितुं त्वां विना अन्यः को वा प्रगल्भः । न कोऽपीति काकुः । त्वमेव समर्थः इत्यर्थः॥ ३९॥ किमस्माकं परशिक्षणव्यापारेणेत्यत आह **श्रीति** । जानकीजानेः श्रीरामचन्द्रस्य पादाब्जसेवा च सदागमानां सच्छास्त्राणां अर्थप्रतिपादनं व्याख्यानं च सतां रक्षणं च इतरे नीचाः विमताः 'इतरस्त्वन्यनीचयोः' इत्यमरः । तेषां शिक्षणं च नः अस्माकं विधेयम् । अस्माभिः कर्तव्यम् । 'कृत्यानां कर्तरि वा' इति षष्ठी । कुतः । अस्माकं मठसंप्रदायः । उक्तकार्यचतुष्टयलक्षण इति भावः ॥ ४० ॥ **तदिति** । तस्मात्कारणात् अद्य इदानीं भुवि असज्जनानां शिक्षार्थं सज्जनानां रक्षार्थं क्षितिमण्डनानि भूभूषणानि परमस्य पुंसो हरेः क्षेत्राणि पश्यन् प्रयाहि गच्छ ॥ ४१ ॥ **स इति** । सः सत्यनिधिः इत्येवं स्फुटार्थां गौरवीं गुरुसंबन्धिनीं वाचं सद्यः शिरसा शेखरयन् शिरोमालिकां कुर्वन् गुरुं प्रणम्य नत्वा सगुणैः सुधीभिः परीतः परिवृतः कृतान्तो यमः 'कृतान्तौ यमसिद्धान्तौ' इत्यमरः । तस्येमां कार्तान्तिकीं ककुभं दक्षिणां दिशं द्राक् प्रतस्थे ॥ ४२ ॥ **आरूढेति** । आरूढजाम्बूनदपल्लकीकः सुवर्णपल्लकीमारूढः तस्याः पल्लक्याः अग्रभागे स्फुरिताब्जघोषः प्रकाशितशङ्खघोषः प्रकीर्णकाभ्यां चामराभ्यां परिवीजमानः पटुभिः समर्थबन्दिवृन्दैः प्रशस्यमानः ईड्यमानः प्रतस्थे इति पूर्वेणान्वयः ॥ ४३ ॥ **इतीति** । उक्तरीत्यात्र धर्मपुर्यां सत्यादिनिधिं सत्यनिधिं कवीन्द्रं प्रहित्य प्रस्थाप्य स सत्यव्रतयोगिसम्राट् भक्तालेः कार्पण्यलक्षणस्य हिमस्य अहिमांशुः सूर्यः सन् शूर्पाख्यपुरीं ससर्प प्राप । 'सृप् गतौ' इत्यस्माद्धातोर्लिट् ॥ ४४ ॥ **तस्मिन्निति** । स देशिकचक्रवर्ती गुरुसार्वभौमः तस्मिन्पुरे शूर्पपुरे अदृष्टपूर्वं न्यायामृतग्रन्थं अद्भुतेन क्लृप्तमौलिकम्पैः पण्डितभूनिलिम्पैः विद्वद्भूसुरैः स्तुतः सन् व्याकरोत् व्याख्यातवान् ॥४५॥

सुधीभिः । समेत्य भूयो गुरुसार्वभौमं ननाम तत्रानतपारिजातम् ॥ ४६ ॥ तमानतं प्रेमरसातिरेकं पश्यन् सुदृष्ट्या स्फुटमुद्गिरन्त्या । आश्लिष्य दोर्भ्यां गुरुरादरेण न्यवीविशत्संसदि भक्तिनम्रम् ॥ ४७ ॥ इत्यादिकान्यस्य गुरोश्चरित्राण्यत्युद्भुतानीतरदुष्कराणि- साकल्यतः को नु सतां मतानि विद्वानपीष्टे विवरीतुमुर्व्याम् ॥ ४८ ॥ बह्वादिधान्याब्दत- पस्यमासवलक्षपक्षेशकुमारघस्रे । सत्यव्रताख्यो यतिसार्वभौमः श्रीमन्मुकुन्दाङ्घ्रिसरोज- माप ॥ ४९ ॥ अस्योचितं विधिमसौ विरचय्य सद्भिर्बोधैकभूमिरथ सत्यनिधिर्यतीन्द्रः । स्वीयेन चित्रचरितेन जगत्समस्तं धिन्वन् विभात्यनुदिनाश्चितरामचन्द्रः ॥५०॥ ये शृण्वन्ति गृणन्ति ये प्रतिदिनं चित्रं चरित्रं गुरोरेतत्पुस्तकमस्तकल्मषभरं यैरर्च्यते स्वालये । तेषामेव हरिर्गुरूत्तमहृदम्भोजप्रक्लृप्तासिकस्तुष्टः स्पष्टतरं ददाति च चतुर्वर्गं निसर्गोज्ज्वलम् ॥५१॥

इति श्रीमद्विद्याधीशविजये महाकाव्ये गदयकोणेरिणा जनार्दनसूरिकृते द्वादशः सर्गः

---

विजित्येति । दिशासु दिक्षु सर्वान् विमतान् विजित्य सुधीभिः सभाजितः संभावितः सत्यनिधिः तत्र शूर्पपुरे अपभ्रष्टभाषया शूर्पालीतिप्रसिद्धनगरे आनतानां पारिजातं तद्वदिष्टप्रदं गुरुसार्वभौमं सत्यव्रतं भूयः समेत्य ननाम नमश्चक्रे ॥ ४६ ॥ तमिति । आनतं भक्तिनम्रं सत्यनिधिं प्रेमरसातिरेकं उद्गिरन्त्या दृष्ट्या पश्यन् स गुरुः आदरेण दोर्भ्यां आश्लिष्य संसदि सभायां आदरेण न्यवीविशत् निवेशितवान् ॥ ४७ ॥ उक्तार्थं निगमयति । इतीति । इत्यादिकानि अद्भुतानि इतरदुष्कराणि सतां मतानि संमतानि अस्य गुरोश्चारित्राणि साकल्येन विवरीतुं प्रपञ्चेन ज्ञातुं उर्व्यां विद्वानपि अज्ञस्य का कथेति भावः । को नु को वा ईष्टे न कोऽपीति काकुः । मया दिङ्मात्रं प्रदर्शित- मिति भावः ॥४८॥ बह्विति । बह्वादिधान्याब्दस्य बहुधान्यवत्सरस्य तपस्यमासः फाल्गुनमासः 'स्यात्तपस्यः फाल्गुनिकः' इत्यमरः । तस्य वलक्षपक्षस्य शुक्लपक्षस्य ईशकुमारः स्कन्दः तस्य घस्रे फा- ल्गुनशुक्लाष्टम्यामित्यर्थः । सत्यव्रताख्यः यतिसार्वभौमः श्रीमन्मुकुन्दाङ्घ्रिसरोजं आप कालधर्मं प्राप ॥ ४९ ॥ अस्येति । बोधस्य एकभूमिः मुख्यस्थानं असौ सत्यनिधिर्यतीन्द्रः अस्य गुरोः उचितं विधिं और्ध्वदेहिककृत्यं सद्भिः विचरय्य कारयित्वा अनुदिनं अञ्चितरामचन्द्रः पूजितराममूर्तिः स्वीयेन चित्रचरितेन समस्तं जगत् धिन्वन् प्रीणयन् विभाति । सत्यनिधिविजयाख्यकाव्ये तच्चरित्रप्रपञ्चमातितांसुः कविः अत्र दिङ्मात्रतया दर्शितवान् इति सर्वमवदातम् ॥ ५० ॥ इत्थं कविः द्वादशभिः सर्गैः विद्याधीशचित्रचरित्रश्रवणादिकुर्वतां फलभूयस्त्वमाह । य इति । ये सज्जनाः चित्रं अद्भुतकरं गुरोश्चरित्रं प्रतिदिनं शृण्वन्ति पौराणिकमुखादिति भावः । तथा गृणन्ति स्तुवन्ति स्वयं पठन्तीत्यर्थः । तथा अस्तकल्मषभरं श्रवणादिकं कुर्वतां निरस्तपा- तिशयं एतस्य गुरुचरित्रस्य पुस्तकं स्वालये सज्जनैः कर्तृभिरर्च्यते स्रक्चन्दनादिभिः पूज्यते सज्जनानां गुरुतमस्य हृदम्भोजप्रक्लृप्तासिकः कृतास्थितिः एषः हरिः परमात्मा तुष्टः सन् स्पष्टतरं प्रकाशिततरं यथा भवति तथा निसर्गेण स्वभावेन उज्ज्वलं भासमानं चतुर्वर्गं धर्मार्थ- काममोक्षमित्यर्थः । 'त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकः' । इत्यमरः । ददाति । पुनरितोऽपि किमन्यदाशास्यमस्तीति भावः ॥ ५१ ॥

इति श्रीगदयकोणेरिणा जनार्दनसूरिविरचितायां श्रीविद्याधीशविजयव्याख्यायां द्वादशः सर्गः ॥

श्रीहरये नमः

तृतीयपत्रतोऽनुवृत्तम् ।

| पत्राङ्कः | पङ्क्त्यङ्कः | अशुद्धम् | शुद्धम् | पत्राङ्कः | पङ्क्त्यङ्कः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| ७१ | ७ | द्राख्य | न्द्रास्य | १०२ | ३ | श्चलःस्फुरन्न | श्चलस्फुरन्न |
| ७३ | ५ | चित्रपात्राणि | चित्रं पात्राणि | १०२ | ६ | गरिमाःशिला- | गरिमाश्रयाः- |
| ७५ | ७ | चरामिति | चरामीति | | | श्रयाः | शिलाः |
| ७६ | ३ | स्वाद निरतो | स्वादनिरतो | १०२ | ९ | मुखरीकृताकिलहरि | मुखरीकृता- |
| ७६ | ५ | त्रिषणाप्लुवः | त्रिसवनाप्लवः | | | | खिलहरि |
| ७७ | ८ | नैर्क्षीवि | नैर्ती वि | १०२ | १० | समश्चाति स्पृधम् | समश्चितास्पृधम् |
| ७९ | ४ | विर्भोम्य | विमर्म्ये | १०३ | २ | विघ्रता | जिघ्रता |
| ८० | ६ | शाकेवान | शाकेयान | १०४ | १ | समर्चिषन् | समर्चिचन् |
| ८२ | २ | करि | किरि | १०४ | १ | पुनरेव | पुनरेष |
| ८४ | २ | शयदाः | यशदाः | १०४ | ९ | कमलस्य | कमनस्य |
| ८४ | ५ | न्जराङ | न्जराड | १०४ | १० | द्युतिः | द्युति |
| ८५ | २ | घणं घन | घणंघण | १०४ | १० | यतिराट कर | यतिराट्कर |
| ८५ | ४ | परिचारकोऽघ | परिचारकौघ | १०७ | ३ | परास | निरास |
| ८५ | ४ | वेत्रलता चल | वेत्रलताञ्चल | १०७ | ६ | प्रेरिते | प्रेरितो |
| ८५ | ६ | प्रयायौ | प्रययौ | ११६ | ७ | तादृगमुस्य | तादृगवस्य |
| ८५ | ८ | स्तिमिताविलोल | स्तिमितो विलोल | ११७ | ४ | चकार | चचार |
| ८८ | २ | प्रयमं त | प्रयमन्त | १२० | १ | प्युप | प्यथ |
| ८९ | ५ | मयमाटनजम् | मयनाटनजम् | १२१ | ७ | लक्षणो | लक्षपो |
| ९४ | ३ | वर्तिनि शुद्ध | वर्ति विशुद्ध | १२७ | ९ | रिर्गुरु | हरिर्गुरु |

---